ISSN-२२३१-२१२९

॥ श्रीः ॥

# शास्त्रमीमांसा

(National Refereed Journal of Shastras)

प्रधानसम्पादकः

आचार्यप्रकाशपाण्डेयः




केन्द्रीय-संस्कृत-विश्वविद्यालयः

( भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः )

भोपालपरिसरः संस्कृतमार्गः, बागसेवनिया, भोपालम् ( म.प्र. )

२०१९-२०२१ अङ्कः १०,११

| | | |
|---|---|---|
| प्रकाशकः | - | निदेशकः<br>केन्द्रीयसंस्कृतविश्वविद्यालयः<br>भोपालपरिसरः, भोपालम्। |
| प्रकाशनवर्षम् | - | 2020 |
| अङ्कः | - | दश एकादशश्च ( 10,11 ) |
| पत्रिका | - | शास्त्रमीमांसा |
| **ISSN** | **-** | **2231-2129** |
| प्रतयः | - | 300 |
| मूल्यम् | - | 250 रु. |
| आकल्पनम्<br>अक्षरसंयोजनञ्च | - | वामदेवमिश्रः |
| प्राप्तिस्थलम् | - | केन्द्रीयसंस्कृतविश्वविद्यालयः<br>भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया<br>भोपालम् ( मध्यप्रदेशः ) - 462043 |
| दूरभाषः | - | 0755-2418043 |
| दूरप्रैषः | - | 0755-2418003 |
| वैपत्रम् | - | **rsks_bhopal@yahoo.com** |
| जालपुटम् | - | **www.rsksbhopal.ac.in** |
| मुद्रकः | - | **S.M.Systems**<br>**M.P. Nagar, Bhopal** |

**प्रो. पी. एन्. शास्त्री**
कुलपति
**केन्द्रीय संस्कृत विश्वविद्यालय**
**संसद के अधिनियम द्वारा स्थापित**
(पूर्व में राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय)
शिक्षा मन्त्रालय, भारत सरकार के अधीन
56-57, सांस्थानिक क्षेत्र, जनकपुरी, नई दिल्ली-110058




**Prof. P.N. Shastry**
**Vice-Chancellor**
**Central Sanskrit University**
Established by an Act of Parliment
Under Ministry of Ecucation, Govt. of India
56-57, Institutional Area, Janakpur, New Delhi-110058

---

# मङ्गलवाक्

**'दुःखत्रयाभिघाताज्जिज्ञसा तदपघातके हेतौ'** इति शास्त्रप्रामाण्यात् पुरुषार्थचतुष्टये मोक्षस्य स्थानमुत्कृष्टतमं वर्तते। अत एव सर्वेषां प्राणिनां जीवनस्य परमं प्रयोजनं मोक्षप्राप्तिरेव। मोक्षप्राप्त्युपायेषु च वेद एव मुख्यतमं स्थानं भजते। तदुक्तम्-

**प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः।** (वा.प.1.5)

स च वेदः समस्तज्ञानविज्ञानामाकरभूतः, **'सर्वज्ञानमयो हि सः'**(मनु. 2.7) इति मनुवचनेनापि प्रमापित एव। अत एव च **'ऋते ज्ञानान्न मुक्तिः'** इति वचनमनुसृत्य-ज्ञानविज्ञानप्राप्तये प्रवर्तन्ते मानवाः। ज्ञानसाधनाय चास्माकमृषयो विविधानि शास्त्राणि प्रणिन्युः। तानि शास्त्राणि संरक्षितुं संवद्र्धयितुञ्च केन्द्रीयसंस्कृतविश्वविद्यालयभोपालपरिसरोऽयं सततमग्रेसरो भवति। अस्यां दिशि विद्वद्भिरत्र प्रतिवर्षं शास्त्रमीमांसानाम्नान्वर्थाभिधाना शास्त्रीयशोधपत्रिका प्रकाश्यते। ऐषमोऽङ्कद्वयात्मिकेयं बहुविधज्ञानविज्ञानस्रोतोभूता प्रकाश्यत इति विज्ञाय मोमुद्यते मे मनः। आचार्यप्रकाशपाण्डेयस्य निदेशकत्वे समेषां विदुषां सम्मिलितसत्प्रयासेन पत्रिकेयं प्राकाश्यमेतीति समेभ्यो मङ्गलकामना व्याहरामि।

कुलपतिः




प्रकाश पाण्डेय
निदेशक

**केन्द्रीय संस्कृत विश्वविद्यालय**
संसद के अधिनियम द्वारा स्थापित
(शिक्षा मंत्रालय, भारत सरकार के अधीन)
**भोपाल परिसर, संस्कृत मार्ग, बागसेवनिया, भोपाल-462043**

# मङ्गलवाक्

**'ऋते ज्ञानान्न मुक्तिः', 'नहि ज्ञानेन शदृशं पवित्रमिह विद्यत'** इत्यादिशास्त्रवचनान्नूनं ज्ञानस्य सर्वातिशायि महत्त्वं वरीवर्ति। अत एव ज्ञानपूतात्मानो महर्षय ऐहलैकिकसुखेष्वनास्थां प्रकटय्य पारलौकिकसुखेप्सया ज्ञानावाप्तय एव यतमाना नाना शास्त्राणि रचयामासुः। **'वादे वादे जायते तत्त्वबोधः'** इति विद्वद्भणित्या शास्त्रमीमांसनमेव शरणं शास्त्रसंरक्षण-संवद्र्धनयोः। तदर्थं केन्द्रीयसंस्कृतविश्वविद्यालयभोपालपरिसरोऽयं प्रतिवर्षमिवास्मिन्नपि वर्षे शास्त्रमीमांसाख्यां शास्त्रीयशोधपत्रिकां प्रकाशयतीति नितान्तं प्रमोदास्पदम्। तदत्राङ्कद्वयात्मिकेयं विविधज्ञानविज्ञानसारभूता शास्त्रीयशोधपत्रिका प्रकाशमेतीत्यमन्दमानन्दसंदोहविषयो विपश्चिताम्। अत्र हि समेषां विदुषां सत्प्रयासः सर्वथा श्लाघनीयः। प्रकाशनकर्मणि व्यापृतानां विदुषामन्येषाञ्च परिसरसदस्यानां सुमङ्गलामायतिं कामये।

निदेशकः

# सम्पादकीयम्

अस्ति किमप्यनिर्वचनीयं सुरभितसौभाग्यं भारतवसुन्धरायाः यदत्र प्राचीनकालादेव साक्षात्कृतधर्माणो मन्त्रदृष्टारः ऋषयः, तत्तन्मन्त्रेषु प्रतिपादितं यत्तत्वं तद्वेत्तारः मुनयश्चाभूवन्। ते ऋषयोऽपरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः। यतोहि वेदमन्त्राणामभ्यासेन जपेन वा अविद्यायाः निवृत्तिः, यदा चाऽविद्यायाः निवृत्तितदा विशुद्धज्ञानस्योद्भवः। तत्र संशयरूपं ज्ञानमविशुद्धम्, विपर्ययस्वरूपमपि, अविशुद्धमेव भवति। विकल्पात्मकमपि, अविशुद्धमेव। एतदविशुद्धज्ञाननिवृत्तिमूलकान्येवास्माकं शास्त्राणि। विशुद्धज्ञानजनकता च वेदे एव। उक्तमपि ''**विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे। श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धधारिणे॥** अनेन मन्त्रेणेदमेव सिद्धयति यत् विशुद्धज्ञानमेव श्रेयः प्राप्तिकारणम्। अत एव वेदविदो मुनयः विशुद्धज्ञानलाभाय स्व-स्वाऽनुभवरीत्या दर्शनानि रचितवन्तः। सर्वाणि दर्शनानि विशुद्धज्ञानप्रवर्तकान्येव सन्ति। अतः सर्वाः विद्याः वेदमूलकत्वेन वेदमेवोपकुर्वन्ति। वेदार्थज्ञाने च कारणीभूताः भवन्ति। तत्र यद्यपि वेदमूलकविद्यासु एकपदागमा, प्रणवरूपेण युक्ता सर्ववादा-विरोधिनी व्याकरणविद्या अन्यतमा। इयं व्याकरणविद्या शब्दतत्त्वस्य निकटतमा वर्तते, नहि केवलं निकटतमैव किन्तु वेदार्थज्ञाने कारिणीभूताषु विद्यासु सर्वोत्कृष्टतमा विद्या व्याकरण-विद्या। उक्तमपि —

**आपःपवित्रं परमं प्रथिव्यामपां पवित्रं परमञ्च मन्त्राः।**
**तेषाञ्च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः॥**

अर्थात् इह जगतीतले विद्यमानेषु सप्तपदार्थेषु प्रथमपदार्थत्वेन स्वीकृतं यत्द्रव्यं तेषु जलं परमं पवित्रं विद्यते शुद्धिसाधकत्वात्। तदपेक्षया मन्त्राः उत्कृष्टतरां पवित्रतां भजन्ति। यतोहि जले केवलं वाह्यशुद्धिसाधकत्वम्। मन्त्रेषु तु वाह्याभ्यन्तरोभयशुद्धिसाधकत्वम्।''**यः स्मरेतपुण्डरीकाक्षं सः वाह्याभ्यन्तरः शुचिः**'' इति। अस्येदमेव तात्पर्यं यत् पुण्डरीकमिवाक्षि यस्य सः पुण्डरीकाक्षः। पुण्डरीकं हृदयम्, अक्षि-ज्योतिः प्रकाशः। हृदयज्योतिः शब्द एव। एवञ्च स्फोटाख्यं पुण्डरीकाक्षं यः चिन्तयति सः बाह्यर्थज्ञानेन सह आन्तरज्ञानवान् भवति। तादृशं सामर्थ्यं व्याकरणे एव। अतः तन्मन्त्राणामपि पवित्र्यर्थं महर्षयो व्याकरणं रचितवन्तः।

अत एव व्याकरणविद्या अधिविद्यं प्रकाशते। तथापि, एकमेवाद्वितीयं ब्रह्म इति श्रुत्या अद्वैतवाद-स्योद्भवः। एवमेव **द्वा सुपर्णा सयुजा सखाया, ऋतं पिवन्तं सुकृतस्य लोके**'' इति सिद्धान्तरीत्या च, ईश्वरजीवभेदवादिनां नैयायिकानां प्रकृतिपुरुषवादीनां सांख्यादीनाञ्च मतां प्रख्यातिं गतार। एवं रीत्या सर्वाण्यप्यस्माकं दर्शनानि विशुद्धज्ञानप्रवर्तकानि सन्ति। उक्तमपि — ''**तस्यार्थवादरूपाणि निश्चित्य स्वविकल्पजाः। एकत्विनां द्वैतिनाञ्च प्रवादा वहुधा मताः॥** इति। निरुक्तविशुद्धज्ञानस्य स्वरूपमपि समेषां दार्शनिकानां मते भिन्नं भिन्नमेव भवति। तत्र व्याकरणमते परा वागेव विशुद्धज्ञानत्वेन वर्तते। साहित्यमते रसः एव। तस्यैव ज्ञानं विशुद्धज्ञानम्। ज्योतिषमते कालपुरुषस्यैव ज्ञानं विशुद्धज्ञानत्वेन प्रतिभाति। सांख्यमते प्रकृतिपुरुषयोः विवेकज्ञानमेव विशुद्धज्ञानम्। योगमते समाधिरेव विशुद्धज्ञानम्। एतद्विशुद्धज्ञानेन अन्ये जनाः अपि लाभान्विताः भवेयुरति विषये कृतसंकल्पः ''केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरः। तद्धिया भोपालपरिसरेणैका शास्त्रमीमांसा नाम्नी, पत्रिका प्रकाश्यते। अस्याः पत्रिकायाः प्रकाशनस्य एकमेवोद्देश्यं यत् आचार्यैः स्व तपसा परिश्रमेण वा यज्ज्ञानमर्जितं विशुद्धात्मकं तज्ज्ञानेन छात्रैः साकमन्येऽपि ज्ञानवन्तः स्युः। यतः प्रवृत्तिः द्विधा। भौतकी शाब्दिकीतिभेदात्। तत्र गोघटादयश्चन्द्रतारकादयश्चपदार्थाः भौतिकरूपाकारवन्तः तत्तद्भौतिक-शक्तिभ्यो वर्तन्ते, प्रवर्तन्ते च। सेयं भौतिकी प्रवृत्तिः। परन्तु यावदस्याः कश्चिच्चेतनो दृष्टा वक्ता वा नास्ति तावदियं व्यर्था। यथा अद्यत्वेऽनन्तान्तरिक्षे सन्तोऽपि पिण्डाः अज्ञाताः, अतो वाग्विषय-त्वमनापन्ना व्यर्था एव। अपि चानुपलब्धाः सम्भावनामात्रेणवाग्विषयत्वमापन्ना वैज्ञानिकमहत्त्व-स्य विषयाः सञ्जाताः। यथा हेलिनो धूमकेतुः पूर्वं हेलिना नामकेन विदुषा सम्भावितो वैज्ञानिकानां वाग्विषयतामवाप। एतेन ज्ञायते यन्नास्ति भौतिकी अर्थप्रवृत्तिः किन्तु शाब्दिक्येव। सा तु वक्तुरिच्छानुवर्तितनी। वक्ता तु कमप्यर्थविशेषमुद्दिश्यैव शब्दान्प्रयुङ्क्ते। वक्तृप्रयुक्तवाक्येन तदात्मवृत्त्यभिप्रायस्य ज्ञानंशक्तिमन्तरा न सम्भवति। सा च शक्तिः शब्दनिष्ठैव। अतः आचार्याः शब्दमाध्यमेन स्व-स्व निबन्धेषु स्वाभिप्रायं प्रकटितवन्तः। तान् सर्वान् निबन्धान् संकलय्य शास्त्रमीमांसात्मिका पत्रिका प्रकाश्यते। अस्यां पत्रिकायां पञ्च खण्डाः सन्ति। व्याकरण-साहित्य-ज्योतिष-शिक्षा-दर्शनभेदात्। व्याकरणखण्डे व्याकरणविषयकाः निबन्धाः परिगणिताः। एवमेव सर्वेषु खण्डेषु तत्तद्विषयकाः निबन्धाः परिगणिताः सन्ति। आशस्महे यत्, इमां पत्रिकां पठित्वा जनाः अवश्य-मेव लाभान्विताः भविष्यन्तीति धियैव भगवतः हनुमतः चरणकुशेशेषु पत्रिकेमां समर्यामि।

*****

## विषय-सूची

*****

# व्याकरणमीमांसा

**विषय-सूची**

# शब्दप्रवृत्तिनिमित्तभेदविमर्शः

**— प्रो. सुबोधशर्मा**

शब्दा अर्थबोधनाय प्रयुज्यन्ते। किन्तु सर्वे शब्दाः सर्वमर्थं सर्वदा न बोधयन्ति। कश्चन निश्चितः शब्दः कमपि निश्चितार्थमेव बोधयति, न तु यः कोऽपि शब्दः यं कमप्यर्थं बोधयितुं प्रवर्तते। सर्वे शब्दाः सर्वान् अर्थान् बोधयितुं नैव क्षमन्ते। कश्चित् शब्दः कञ्चिदेव अर्थं बोधयति।[1] यथा 'घटः' इति शब्दः कम्बुग्रीवादिमन्तमेवार्थं बोधयति, न तु पटरूपमर्थम्। अत्र किं कारणं यद् घटशब्दः घटरूपस्यैवार्थस्य बोधने प्रवर्तते, न तु पटरूपाद्यर्थबोधनेऽपि ? अतः शब्दार्थयोर्मध्ये किमपि कारणं भवति, येन हेतुना नियतशब्दैः निश्चितार्था एव बुध्यन्ते। तच्च कारणं शब्दार्थयोर्मध्ये शक्तिरूपः वृत्तिरूपो वा सम्बन्धो भवति। यस्य शब्दस्य यादृशार्थेन सह सम्बन्धः, तादृशः शब्दः तादृशार्थबोधन एव समर्थः। शब्दः वृत्त्या यमर्थं बोधयति स एवार्थः बुध्यते। शब्दे यदर्थनिरूपिता वृत्तिर्भवति, यादृशी वृत्तिर्भवति, शब्दः तमर्थमेव बोधयति नान्यमर्थमित्यायाति।

घटशब्दो घटरूपमेवार्थं (कम्बुग्रीवादिमन्तं) बोधयति, न तु पटादिरूपमर्थम्। अतो ज्ञायते यत्– घटरूपार्थे कश्चन विशेषो वर्तते, यः विशेषः पटरूपार्थे नास्ति। घटशब्दो घटरूपार्थ-बोधने एव प्रवर्तते। यादृशं प्रवृत्तिनिमित्तं घटरूपार्थे भवति तादृशं प्रवृत्तिनिमित्तं पटरूपार्थे न विद्यते। अतो घटादिशब्दः घटरूपार्थबोधन एव प्रवर्तते, न तु पटरूपार्थबोधने। घटरूपार्थे घटत्वं प्रवृत्तिनिमित्तं विद्यते, पटरूपार्थे तु पटत्वं प्रवृत्तिनिमित्तम्। घटशब्दः तादृशं घटत्वरूप-प्रवृत्तिनिमित्तं निमित्तीकृत्य घटरूपार्थबोधने प्रवर्त्तते। पटे पटत्वं, न तु घटत्वम्, अतो घटशब्दः पटरूपार्थबोधने न प्रवर्तते। एवञ्च प्रवृत्तिनिमित्तेनैव शब्दोऽर्थबोधनायप्रवर्तते।

तत्र प्रवृत्तेः निमित्तं प्रवृत्तिनिमित्तम्, अथवा – प्रवृत्तौ निमित्तं प्रवृत्तिनिमित्तम्। प्रवृत्तिः –प्रवर्तनम्। निमित्तं = कारणम्। अतः शब्दप्रवृत्तेः शब्दप्रवृत्तौ वा यन्निमित्तं तत् शब्दप्रवृत्तिनि-

१. सर्वे सर्वार्थवाचकाः इति तु योगिनां कृते, न तु सर्वेषां कृते।

मित्तमित्यर्थः। घटशब्दो घटरूपार्थमेव बोधयति, न पटरूपमर्थम्। अत्र कारणं घटरूपार्थबोधने प्रवृत्तिनिमित्तमेव। अत्र तादृशप्रवृत्तिनिमित्तं भवति - घटत्वरूपम्। घटशब्दो घटत्वरूपं प्रवृत्ति-निमित्तमादायार्थबोधने प्रवृत्तः। अतः घटत्वं यत्र भवति, तत्रैव घटरूपर्थं बोधयति घटशब्दः। घटशब्दः घटरूपस्यैवार्थस्य बोधने प्रवर्तते, न तु पटरूपार्थबोधने, यतस्तत्र (पटरूपार्थे) घटत्वरूपं प्रवृत्तिनिमित्तं नास्ति, तत्र तु पटत्वरूपं प्रवृत्तिनिमित्तं भवति। एवं शुक्लशब्दः तमेवार्थं बोधयति यत्र शुक्लत्वं भवति, पाचकशब्दः पाचकत्वप्रवृत्तिनिमित्तमादायैव प्रवर्तते। इदञ्च प्रवृत्तिनिमित्तमर्थगतं भवति। अर्थगतो घटत्वादिरूपो धर्मः घटादिशब्दस्य प्रवृत्तिनिमित्तं भवति।

तथैव गवादिपदानां गवाद्यर्थबोधकत्वरूपा या गवादौ प्रवृत्तिरस्ति तत्र गोत्वादिकमेव निमित्तं वर्तते, यतो हि गोत्वावच्छिन्ने एव तादृशप्रवृत्तिर्दृश्यते न तु घटत्वावच्छिन्ने घटे। अतः गोत्वादिकमेव गोशब्दस्य प्रवृततिनिमित्तं भवतीति ज्ञायते। तच्च प्रवृत्तिनिमित्तं गोगतधर्मरूपं भवति।

तत्र प्रवृत्तिनिमित्तस्य लक्षणं भवति सामान्यतया, **वाच्यत्वे सति, वाच्यवृत्तित्वे सति, वाच्योपस्थितीय-प्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्वम्।**[२]

यथा 'घट' इति शब्देन घटत्वजातेर्घटव्यक्तेश्चोपस्थितिर्भवति। 'घटत्ववान् घटः' इति बोधादत्र घटरूपव्यक्तिः विशेष्यं भवति, घटत्वजातिरूपो धर्मस्तत्र प्रकारः = विशेषणं भवति। एवञ्च घटत्वं घटशब्दस्य वाच्यं विद्यते, तच्च घटशब्दवाच्यार्थे घटव्यक्तौ तिष्ठति, अथ घटशब्देन या उपस्थितिर्भवति तत्र प्रकारश्च भवति।'घटत्वधर्मवान् घटः' इति बोधे घटव्यक्तिश्च विशेष्यतया उपस्थितो भवति। अतः घटत्वं घटशब्दस्य प्रवृत्तिनिमित्तम्।

'वाच्यत्वे सति, वाच्यवृत्तित्वे सति, वाच्योपस्थितीयप्रकारताश्रयत्वं प्रवृत्तिनिमित्त-त्वम्।' इति प्रवृत्तिनिमित्तलक्षणे यदि प्रथमविशेषणं न दीयेत, केवलम् - वाच्यवृत्तित्वे सति, वाच्योपस्थितीयप्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्वम् इत्येवं लक्षणं स्यात्तदा शब्दाश्रयत्वे गगनपदप्रवृत्तिनिमित्तस्यातिव्याप्तिः स्यात्। यतः, गगनपदवाच्ये आकाशे शब्दाश्रयत्वधर्मः तिष्ठति, अथ च आकाशः शब्दाश्रयत्ववान् इति शब्दाश्रयत्वप्रकारकोपस्थितौ शब्दाश्रयत्वस्य प्रकारता-

२. पक्षधरमिश्रकृतप्रकाशग्रन्थे उद्धृतं ल.शे.दी.टी.पृ. ५२३।

श्रयत्वमपि भवति, अत: शब्दाश्रयत्वे गगनपदप्रवृत्तिनिमित्तमतिव्याप्तं स्यात्। यदि तु लक्षणे वाच्यत्वे सति इत्यपि विशेषणं दीयते तदा शब्दाश्रयत्वस्य आकाशपदप्रवृत्तिनिमित्तत्वं न भवति, यतोहि शब्दाश्रयत्वमाकाशपदवाच्यं न भवति।

यदि वाच्यवृत्तित्वे सति इति द्वितीयविशेषणं न दीयते तदा - वाच्यत्वे सति, वाच्योपस्थितीयप्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्वम् इति लक्षणं स्यात्। तदा च 'जात्याकृतिव्यक्तय: पदार्थ:' इति मते अवयवसंस्थानविशेषरूपे आकृतौ घटपदप्रवृत्तिनिमित्तलक्षणमतिव्याप्तं स्यात्। यत: संयोगरूपावयवसंस्थानविशेष एव आकृति:। तादृशसंयोग: समवायसम्बन्धेन अवयवे तिष्ठति, नतु घटपदवाच्ये कम्बुग्रीवामति व्यक्तिविशेषे। अत: वाच्यवृत्तित्वाभावात् आकृतौ प्रवृत्तिनिमित्तलक्षणं न प्रवर्तेत।

अथ उपस्थितीयप्रकारताश्रयत्वस्यानिवेशे, वाच्यत्वे सति वाच्यवृत्तित्वं प्रवृत्तिनिमित्तत्वम् इत्येव लक्षणं स्यात्तदा - घटादिपदवाच्यवृत्तिर्य: घटघटत्वयो: समवायसम्बन्ध:, तत्र लक्षणातिव्याप्ति: स्यात्। उपस्थितीयप्रकारताश्रयत्वनिवेशे सति तु दोषो न भवति, यतो हि उपस्थितौ समवायसम्बन्ध: आकांक्षाभाष्यो भवति न तु प्रकारतया भाषते। अत उपस्थितीयप्रकारताश्रयत्वाभावात् घटघटत्वयो: समवायसम्बन्धे न लक्षणप्रवृत्ति:।

किञ्च नागेशादिमते आरोपितोऽपि — लाक्षणिकोपि (लक्षणाऽस्वीकारपक्षे अप्रसिद्धया शक्त्या बोधितोऽपि) धर्म: प्रवृत्तिनिमित्तरूपधर्म: स्वीक्रियते।[3] वाच्यत्वे सतीत्यादिलक्षणं तेषां मते भवति येषां मते जाति व्यक्तिश्चोभौ अभिधाशक्त्या बोध्येते।

तत्र 'जात्याकृतिव्यक्तयस्तु पदार्थ:'[4] इति गौतमसूत्रे एकवचननिर्देशेन त्रिष्वेव पृथक्शक्तिरिति प्राङ्नैयायिका:। जातेरपि पदार्थत्वं भवति, यदि गोत्वादेर्गवादिपदवाच्यत्वं न स्यात्तदा प्रवृत्तिनिमित्तलक्षणं तत्र नोपद्येत। अत: गोत्वादेरपि गवादिपदवाच्यमावश्यकमेवेत्यर्थ:। नैयायिकमते व्यक्तिपदार्थवादो भवति। नैयायिका: क्रिया-कारकादिसम्बन्धस्य उपपत्तये "व्यक्ति:" पदार्थ इति स्वीकुर्वन्ति। नवीनानां तु विशिष्टशक्तिवाद:।[5]

३. परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च। स च मुख्य इव आरोपितोऽपि। अत एव गोपी इत्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोष:। ल.श.शे.पृ. ५२४-५२५।

४. न्या.द. २.२.६५।

५. न्या.सि.मु.पृ. ३१४।

मीमांसकानां मते 'आकृतिस्तु क्रियार्थत्वात्'[६] इति सिद्धान्तवचनेन जातिपदार्थवादः स्वीक्रियते। व्यक्तीनामानन्त्येन गौरवात् तत्र शक्तिं न स्वीकुर्वन्तिते। व्यक्तिबोधश्च बन्धनदोहनादा- वन्वयानुपपत्त्या लक्षणया भवतीति मीमांसकाभिप्रायः। तथा चैतेषां मते शब्दानां वाच्यार्थो जातिः, लक्ष्यार्थश्च व्यक्तिरिति।

मीमांसकाः व्यक्तिबोधाय लक्षणां स्वीकुर्वन्ति। किन्तु गवादिपदस्य गवादिव्यक्तौ स्वारसिकलक्षणा स्वीकर्तुं न शक्यते तैः। यतो हि मीमांसकनये अन्वयानुपपत्तिरेव लक्षणायां बीजं स्वीकर्तुं शक्यते, न तु तात्पर्यानुपपत्तिः, वेदस्य अपौरुषेयत्वेन तस्य कर्तृत्वाऽभावेन तत्र कस्यापि तात्पर्यस्याभावेन तात्पर्यानुपपत्तिरूपबीजाऽभावात् ''आयुर्वै घृतम्'' इत्यादौ वेदवाक्ये लक्षणा स्वीकर्तुं न शक्यते। अथ च अन्वयानुपपत्तिं विनाऽपि व्यक्तेः बोधो भवत्येव। 'गामानय' इत्यादौ गोत्वजातेरानयनाभावात् गोपदस्य गोव्यक्तौ लक्षणास्वीकारेऽपि 'गौरस्ति' इत्यत्र गोत्वजातेरस्तिक्रियाऽन्वयानुपपत्तेरभावेन लक्षणाबीजाभावावात् व्यक्तौ लक्षणास्वीकर्तुमशक्य- त्वाद् व्यक्तिबोधानुपत्तिः स्यात्। किञ्च शक्यव्यक्तीनामानन्त्येऽपि उपलक्षणीभूतगोत्वादिजाते- रैक्यात् तस्याश्च शक्यतावच्छेदकत्वात्वादेकैव शक्तिरिति नैवानन्त्यं न वा व्यभिचारः। शक्यता- वच्छेदकभेदे एव शक्तेर्भेद इति भावः। उक्तञ्च —

**आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।**
**शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥**[७] इति।

भावानाम् = व्यक्तीनाम् आनन्त्येऽपि एकम् = जात्यादिरूपम् असाधारणधर्मम्, उपलक्षणं कृत्वा सुकरसम्बन्धः = गवादिव्यक्तिरूपनिष्ठवाच्यतासम्बन्धः गोप्रभृतिशब्दे न व्यभि- चरिष्यति। जातिरूपमेकं शक्यतावच्छेदकमुपलक्षणीकृत्य = अनुगतीकृत्य गवादिप्रातिपदिकानां शक्तिः सकलगोव्यक्तिषु एकेनैव व्यवहारेण सुकरतया ज्ञातुं शक्या। अत एव व्यक्तिरेव नामार्थ इति नैयायिकाः। एवञ्चैतेषां मते शब्दानां वाच्यार्थो व्यक्तिः, लक्ष्यार्थश्च जातिरिति।

व्याकरणदर्शने तु केवलं जातिपक्षाश्रयणेन, व्यक्तिपक्षाश्रयमात्रेण वा लक्षणप्रणयणनं कर्तुं न शक्यते। अतः भगवता पाणिनिना जातिपदार्थं स्वीकृत्य ''जात्याख्यामेकस्मिन्

६. मी.सू. १.२.३३।
७. वै.भू.ना.पृ. २३७।

बहुवचनमन्यतरस्याम्''[८] इति सूत्रं प्रणीतम्। व्यक्तिपदार्थञ्च स्वीकृत्य ''सरूपाणामेकशेष एकविभक्तौ''[९] इति सूत्रं रचितम्।

व्यक्ति: पदार्थ इति स्वीकार एव 'अणुदित्'[१०] सूत्रे अण्ग्रहणम्, 'सरूपाणामेकशेष:'[११] इति सूत्रस्य च आरम्भ: सार्थको भवति। अन्यथा जातिरेव यदि पदार्थ: स्यात् तर्हि जातिरूपस्य पदार्थस्य एकत्वात्, तत्र अकारादीम् अणाम् अष्टादशभेदाभावेन अष्टादशानां भेदानां ग्रहणाय ''अणुदित्'' सूत्रे अण्ग्रहणमनावश्यकमेव स्यात्। तथैव जातिपदार्थस्वीकारे एकेनैव पदेन तदर्थजातिमतां सर्वेषां बोध: स्यादेवेति एकेन पदेन अनेकेषामर्थानां बोधाय कृत: 'सरूप'[१२] सूत्रेणैककशेषोऽपि अनावश्यक एव स्यात्। परन्तु भगवता पाणिना उभयं कृतम्। अत: पाणिनि-दर्शने जातिव्यक्त्यो: पदार्थत्वमास्थीयते।

सरूपसूत्रे महाभाष्ये उभयपक्षमाश्रित्य पर्याप्तं विवेचितं वर्तते। महर्षिर्वाजप्यायनानुसारं सर्वेषां शब्दानां जातिपदार्थ: स्वीक्रियते। द्रव्यस्योपस्थितिस्तु लक्षणया आक्षेपात् सामर्थ्याद्वा भवति। तथा च आख्यातस्थलेऽपि क्रियाजातेरेवाभिधानं भवति। शुक्लादिगुणशब्दादपि गुण-जातेरभिधानं, संज्ञाशब्दस्थले च जातेर्वाचकत्वम्। एवं प्रकारेण सर्वत्रैव जातिपदार्थ: स्वीक्रियते। व्याडिराचार्यो[१३] बहुभिस्तर्कै: व्यक्तिपदार्थं प्रत्यपादयति।

वस्तुतस्तु — ''न ह्याकृतिपदार्थकस्य (पदार्थिकस्य) द्रव्यं न पदार्थो द्रव्यपदार्थकस्य (पदार्थिकस्य) वाऽऽकृतिर्न पदार्थ:। उभयोरूभयं पदार्थ:। कस्यचित्तु किञ्चित् प्रधानभूतं किञ्चिद् गुणभूतम्। आकृतिपदार्थ-कस्याऽऽकृति: प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता''[१४] इति भाष्यग्रन्थेन विशिष्टशक्तिवाद एव वैयाकरणसम्मत:। कदाचित् जातिविशिष्टं द्रव्यं पदार्थ:, कदाचिच्च द्रव्यविशिष्टा जाति: पदार्थ इति लक्ष्यानुरोधात् स्वीक्रियतेऽत्र दर्शने। पाणिनीयं दर्शनं सर्वोपकारकं भवति। सर्ववेदपारिषदं हीदं शास्त्रं, तत्र

८. पा.सू. १.२.५८।
९. पा.सू. १.२.६४।
१०. पा.सू. १.१.६९।
११. पा.सू. १.२.६४।
१२. पा.सू. १.२.६४।
१३. द्रव्याभिधानं व्याडि: मा.भा. १.२.६४ वा ४६।
१४. मा.भा. १.२.६४।

नैकः पन्थाः शक्य आस्थातुम्।[१५]

अत एवात्र दर्शने उभयपक्षाश्रयणं क्रियते।[१६] तदुक्तं इह केषाञ्चिज्जातिपदार्थः, गृहीत-सम्बन्धो हि शब्दोऽर्थं बोधयति, न चक्षुरादिवत्तन्निरपेक्षः, सम्बन्धग्रहणञ्च व्यक्तिषु न सम्भवति तासामानन्त्यात्। केषाञ्चिद् व्यक्तिः पदार्थः तत्रैव वाहदोहादिकार्यान्वयात्। जातौ हि पदार्थे............ पाणिनेस्तूभयम् पदमञ्जरी।[१७]

सूत्रकारमतेऽपि नियतोपस्थितिकः प्रातिपदिकार्थः।[१८] स च अन्ततः प्रवृत्तिनिमित्तं तदाश्रयश्च।[१९] एवञ्च पाणिनिमते द्विकपक्ष एव आयाति। अत एव 'प्रातिपदिकार्थलिङ्गपरिमाण-वचनमात्रे प्रथमा' इत्यत्र लिङ्गग्रहणं सार्थकं भवति। सिंहो माणवकः, गौर्वाहीक इत्यादौ नियतोपस्थितिकत्वाभावेऽपि पदान्तरसम्बन्धाभावे एव गौः, सिंहः, इत्यादौ शक्यार्थमादाय प्रातिपदिकार्थ एव प्रथमाविधानम्, शक्यतावच्छेदकारोप एव लक्षणेति स्वीकारात्। एवञ्च वैयाकरणमते जातिः व्यक्तिश्चोभयोर्वाच्यत्वम्।

प्रवृत्तिनिमित्तलक्षणे यः वाच्यशब्दः तस्य कोऽर्थ इति प्रसङ्गे अनेके विचाराः भवन्ति। काव्यप्रकाशकारो मम्मटः — **साक्षात् संकेतितं योऽर्थोभिधत्ते स वाचकः। 'संकेतितः चतुर्भेदः जत्यदिर्जातिरेव वा**'[२०] इत्यादिना शब्दस्य अभिधया बोध्यार्थं जात्यादिकमेव वाच्यार्थं स्वीकरोति। जात्यादिः - जाति-गुण-क्रिया-यदृच्छाशब्दरूपे व्यक्तेरुपाधौ शक्तिं

१५. मा. ५८.२.१. भा.।

१६. पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा।
पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ॥ वा.प. जाति २।

१७. पदमञ्जरी ५. सू.मा.।

१८. यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स दर्थ इत्यर्थः। ल.श.शे. - कारकप्र. ५१२।

१९. परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च। स च मुख्य इव आरोपिताधयोऽपि। ल.श.शे.- कारकप्र. ५२२।

२०. का.प्र.
स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा।
वाच्यादयस्तदर्थाः तात्पर्याथोऽपि केषुचित्॥ २.६।
साक्षात्संकेतितं योऽर्थोभिधत्ते स वाचकः। २.७
संकेतितः चतुर्भेदः जत्यदिजातिरेव वा।
स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽभिधेच्यते। २.८।

स्वीकरोति। व्यक्तेर्बोधः सामर्थ्यादाक्षेपात् भवति। मीमांसका अभिधया वाच्यां जातिमेव स्वीकरोति, न तु व्यक्तिम्। व्यक्तेर्बोधस्तु अर्थापत्तिप्रमाणेन भवतीति भावः। अतो घटव्यक्तिः यदि घटशब्दवाच्यमेव नास्ति तदा घटत्वस्य वाच्यवृत्तित्वं कथं स्यात्, वाच्यवृत्तित्वाभावात् उक्तप्रवृत्तिनिमित्तलक्षणेन घटत्वादेः प्रवृत्तिनिमित्तत्वं च न स्यात्। अत उक्तप्रवृत्तिनिमित्तलक्षणम् एतेषां मते न संघटते। येषां मते जातिव्यक्तिश्चोभौ अभिधया बोध्येते तेषां मतेनैतल्लक्षणम्।

व्यक्तिविवेककारस्य महिमभट्टस्य मते तु व्यक्तिवाच्यं भवति। तन्मतेऽपि यास्कस्वीकृत-मेव **'सत्त्वप्रधानानि नामानि'**[२१] इति नामपदस्य लक्षणं स्वीकृतम्।

यदि वाच्यशब्दस्यार्थो न केवलोऽभिधाबोध्य एवार्थः किन्तु वाच्येन जात्यादिना लक्षणा-दिना बोध्योऽपि व्यक्तिरूपार्थ वाच्य एवेति स्वीक्रियते, तदा येषां मते जातिरूपेण घटत्वेन वाच्याऽर्थेन लक्षणया, अन्यथानुपपत्त्या अर्थापत्त्या वा व्यक्तिबोधो भवति तेषां मतेऽपि उक्तं प्रवृत्तिनिमित्तलक्षणं भवत्येव। यदि वाच्यशब्देन अभिधया बोध्यस्यार्थस्यैव ग्रहणं मन्यते तदा तु 'केनापि प्रकारेण बोध्यं वाच्यं तत् प्रवृत्तिनिमित्तम्' इति प्रवृत्तिनिमित्तस्य लक्षणं मन्तव्यम्। अथवा- **यज्ज्ञानातच्छब्दप्रवृत्तिस्तत्त्वं प्रवृत्तिनिमित्तत्वम्।**[२२] अत एव - **'यं धर्मं प्रकारीकृत्य वृत्तिग्रहः तस्यैव प्रवृत्तिनिमित्तत्वम्' इति भावप्रकाशकारः।**[२३] यद्धर्मप्रकारकवृत्तिग्रह तद्धर्मस्यैव प्रवृत्तिनिमित्तत्वम् इत्येवं प्रकारेण प्रवृत्तिनिमित्तस्य लक्षणं वर्णयन्ति विद्वांसः।

**प्रवृत्तिनिमित्तचतुष्टयम् —**

इदानीं प्रवृत्तिनिमित्तभेदविषये किञ्चिद् विचार्यते — घटशब्दस्य घटत्वं, पटशब्दस्य पटत्वं, कटशब्दस्य कटत्वं गोशब्दस्य गोत्वम् इत्येवं प्रकारेण यद्यपि सर्वेषां शब्दानां प्रवृत्तिनिमित्तं पृथक्पृथग् भवति। तथापि महाभाष्यकारेण प्रवृत्तिनिमित्तस्य चातुर्विध्यमुक्तम्। तथाहि — **चतुष्टयी**[२४] **शब्दानां प्रवृत्तिः - जातिशब्दाः गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चतुर्थाः।**[२५] अपि च एकस्यामेव - गोव्यक्तौ गौः शुक्लः चलः डित्थः इति व्यवहारो दृश्यते

२१. तत्र सत्त्वप्रधानानि नामानि। तान्यपि बहुप्रकाराणि संभवन्ति। जातिगुणक्रियाद्रव्याणां तत्प्रवृत्तिनिमित्तानां बहुत्वात्। व्यक्ति वि.।
२२. का.प्र.बा.बो.टी. पृ. ३६।
२३. पृ. ७५४।
२४. शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात् सा प्रकारचतुष्टयवतीत्यर्थः। उ.टी.
२५. म.भा.मा.सू. २।

व्यक्तीनामुपाधौ — धर्मे-विशेषण एव सङ्केतग्रहात् प्रवृत्तिनिमित्त-चतुष्टयं स्वीकृतम्।

आचार्यमम्मटादिभि: काव्यप्रकाशादौ एवमेव प्रवृत्तिनिमित्तं वर्णितं वर्तते। व्यक्ति-विवेककार: श्रीमहिमभट्टोऽपि सामान्येन चत्वारि प्रवृत्तिनिमित्तानि स्वीकरोति, किन्तु अस्य मते यदृच्छास्थाने चतुर्थं प्रवृत्तिनिमित्तं द्रव्यं विद्यते। यदृच्छया-स्वेच्छया कल्पितोऽपि धर्मो जातिरेव विद्यते। स शब्दे भवतु, अर्थे वा। महिमभट्टस्य मते यदृच्छाशब्दस्य समावेश: जातिशब्द एव भवति। नाम च धातुनमाह निरूक्ते इति सिद्धान्तादिति भाव:।

**जातिप्रवृत्तिनिमित्तम् —**

जाति: – वस्तुधर्म:। नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वमिति जातिलक्षणं भवति।[२६] 'यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वछिन्नं सामान्यभूतं स शब्द: इति भाष्यवचनेनापि ध्वन्यते।[२७] न्यायदर्शनेऽपीदमेव एकत्वरहितं भवति।[२८] इयांस्तु विशेष: अन्यमते जातेर्वास्तविकं नित्यत्वं भवति। जातिर्हि प्रलयेऽपि स्वसमवाय्यारम्भकनित्यपरमाणुषु नित्ये काले वा वर्तमाना भवति।

वैयाकरणनये तु-**अनादिनिधनम् ब्रह्म, शब्दतत्त्वं यदक्षरम्।**[२९] इत्यादिवचनेन शब्द-ब्रह्मातिरिक्तं सर्वमनित्यं भवति।[३०] अत: यावत्सृष्टिस्थायिनी जातिरिति सावधिर्नित्या। महाप्रलये सर्वव्यवहाराणां नासेन जाते: प्रयोजनं नास्तीति भाव:। अत्र नये औपाधिकभेदेन भिन्नत्वात् आकशत्वादिधर्मा अपि जातिरूपा एव भवन्ति। सामान्येऽपि सामान्यं भवति। अक्षा भज्यन्तां भुज्यन्तां दिव्यन्ताम् इत्यत्र अक्षत्वत्रितये एका अक्षत्वत्वजाति: स्वीक्रियते। शब्दप्रवृत्तिनिमित्तं जातिरुपाधिर्वेति।

२६. न्यायसि.मु.पृ. ४४।
२७. म.भा. पस्प.।
२८. नित्यमेकमनेकानुगतं सामान्यम्। (तर्कसंग्रह:)। नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वमितिन्यायसि. मु. पृ. ४४।
२९. वा.प. १.१।
३०. परमार्थदृष्ट्या सर्वमनित्यम्। म.भा.उ.टी. पस्प।
३१.क. नित्याकृति:। न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति। द्रव्यान्तरस्था तूपलभ्यते। म.भा. पस्प.।
ख. अद्वैतेन लोके व्यवहाराभावात् व्यवहारे चाकृतेरेकाकारपरामर्शहेतुत्वान्नित्यत्वम्। असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराभावाश्रयणेन जातेर्नित्यत्वम्। म.भा.प्र.टी. पस्प।

तदुक्तम् —

**संयोगे द्रव्यभेदे च देशे च परिकल्पिते।**
**तेषु देशेषु सामान्यमाकाशस्यपि विद्यते॥**[३२]

जातिपदार्थवादिनये सर्वत्रैव जातिबोधः। आख्यतस्थलेऽपि क्रियाजातिबोधः।[३३] शुक्लादयः शब्दा गुणसमवेतां जातिं बोधयन्ति।[३४] संज्ञाशब्दस्थलेऽपि डित्थत्वादिका जातिर्बोध्यते।[३५]

यथा घटत्वं जातिरस्ति। इदं नित्यं वर्तते। घटरूपाया व्यक्तेर्नाशेऽपि अस्या नाशो न भवति। यदि एका घटव्यक्तिर्नश्यति तदा सा अन्यस्यां घटव्यक्तौ भवत्येव। इदं घटत्वमेकं वर्तते। तत् समानरूपेण समवायसम्बन्धेन सर्वेषु घटपदार्थेषु तिष्ठति। यद्यपि सर्वे स्वगतां जातिं बोधयन्ति, किन्तु येऽर्थगतामपि जातिं बोधयन्ति ते एव जातिशब्दाः कथ्यन्ते।

अयमभिप्रायः — पदार्थप्राणप्रदो धर्मो जातिरस्ति। घटो घटत्वेन घट इति व्यविह्रियते। गौः गोत्वेनैव गौरिति व्यविह्रियते। तादृशव्यवहरे कारणं गोत्वादिधर्म एव भवति। 'नहि गौः स्वरूपेण गौर्नाप्यगौः, गोत्वाभिसम्बन्धात्तु गौः।'[३६] स च जातिरूपो धर्मो द्विधा भवति– अर्थगतः, शब्दगतश्च। तत्र अर्थगतो जातिरूपो धर्मो घटादिशब्दानां प्रवृत्तिनिमित्तं वर्तते।

यथा घटत्वं घटशब्दस्य प्रवृत्तिनिमित्तमस्ति। घटे घटत्वं तिष्ठति। अत एव घटशब्दो घटरूपमेवार्थं बोधयितुं प्रवर्तते। द्वितीयो जातिरूपो धर्मो शब्दे तिष्ठति। एकोऽपि शब्दः उच्चारणभेदेन व्यञ्जकध्वनिभेदेन वा भिन्नो भवति। बालेन उच्चारितो घटशब्दो भिन्नो भवति, वृद्धेनोच्चारितः स भिन्नो भवति। एवं कालकृतोऽपि भेदो घटशब्दे भवति। इत्थं भिनेष्वपि घटशब्देषु 'घटः' इत्येवम् अभिन्नो बोधो व्यवहारश्च भवति। तस्य कारणं सर्वेषु घटशब्देषु

३२. वा.प. ३.१.१५।
३३. पठति पठतः पठन्ति इत्यादेरभिन्नस्य प्रत्ययस्य सद्भावात्तन्निात्तजात्यभयुपगमः। म.भा.प्र.टी. पस्प।
३४. शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते। म.भा.प्र.टी. पस्प।
३५. संज्ञाशब्दानामप्युत्पत्तिप्रभृत्याविनाशात् पिण्डस्यकौमारयौवनाद्यवस्थाभेदेऽपि स सवायमित्यभिन्नप्रत्ययनिमित्ता डित्थत्वादिका जातिर्वाच्या। म.भा.प्र.टी. पस्प।
३६. वस्तुधर्मोऽवि द्विविधः, सिद्धः साध्यश्च। सिद्धोऽपि द्विविधः, पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च। तत्राद्यो जातिः। का.प्र. २.८।

समानरूपेण विद्यमानं घटत्वजातिरस्ति। सर्वे शब्दाः पूर्वं स्वां जातिं बोधयन्ति, ततश्चार्थगतां जातिं बोधयन्ति।[३७] तदुक्तम् —

**स्वा जातिः प्रथमं शब्दैः सर्वैरेव प्रकाश्यते।**
**ततोऽर्थजातिरूपेण तदध्यारोपकल्पना॥**[३८]

जातिर्हि व्याकरणशास्त्रे चतुर्विधोक्ता विद्यते। तथिह —

**आकृतिग्रहणा जतिर्लिङ्गानां च न सर्वभाक्।**
**सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह॥** (म.भा. ४.१.६३)

अपर आह —

**प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः।**
**असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥**[३९] इति।

**गुणप्रवृत्तिनिमित्तम् —**

येन पदार्थेन सजातीयेषु पदार्थेषु भेदः क्रियते, अथवा यो विशेषयति स वस्तुनः सिद्धो धर्मो गुणः कथ्यते। विशेषणतया भासमानो धर्मो गुणः। **तृतीया तत्कृतार्थेन गुणवचनेन**[४०] इत्यत्र एतादृशस्यैव गुणस्य ग्रहणम्। यथा शुक्लो गुणो वर्तते। अयं गुणः शुक्लां गां कृष्णादिगो-व्यक्तिभ्यो व्यावर्तयति। अयं शुक्लो गुणः शुक्लशब्दस्य प्रवृत्तिनिमित्तं वर्तते। व्याकरणशास्त्रे स्वीकृतं रूपरसादिभेदभिन्नलौकिकगुणलक्षणम् —

**सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।**
**आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥**[४१]

---

३७. स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते। ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना॥
यथा रक्ते गुणे तत्त्वं कषाये व्यपदिश्यते। संयोगिसन्निकर्षाच्च वस्त्रादिष्वपि गृह्यते॥
तथा शब्दार्थसंबन्धाच्छब्दे जातिरवस्थिता। व्यपदेशेऽर्थजातीनां जातिकार्याय कल्पते॥ वा.प. ३.१.६-८।

३८. वा.प.जा.स. ६।

३९. म.भा. ४.१.६३।

४०. पा.सू. २.१.३०।

४१. म.भा. ४.१.४४।

**क्रियाप्रवृत्तिनिमित्तम् —**

व्यापारसन्तानः क्रिया। फूत्कारादिव्यापाराणां कल्पितः समूहः क्रिया। 'क्रियानामेय-मत्यन्तापरिदृष्टा। अशक्या क्रिया पिण्डीभूता निदर्शयितुं, यथा गर्भो निर्लुण्ठितः साऽसावनु-मानगम्येति'[४२]।

यथाह – भर्तृहरिः —

**गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते।**[४३]

क्रिया द्विधा भवति – सिद्धा साध्या च। यस्याः क्रियायाः ज्ञानेन क्रियान्तरज्ञानस्य आकाङ्क्षोदेति सा सिद्धा कथ्यते। यथा 'पाकः' इति शब्देन सिद्धाक्रिया बोध्यते। पाक इति सिद्धा क्रिया भवति। यस्या ज्ञानेन 'अस्ति, भवति, भविष्यति वा' इत्यादीनां क्रियाणां ज्ञानस्य आकाङ्क्षा नूनं जायते। यस्याः क्रियायाः ज्ञानेन क्रियान्तरज्ञानस्य आकाङ्क्षा नोदेति कारकज्ञानस्याकाङ्क्षा भवति सा साध्या भवति। यथा 'पचति' इति शब्देन या पाकक्रिया बोध्यते सा साध्या वर्तते। अस्याः ज्ञानेन 'कः पचति, किं पचति, कुत्र पचति' इत्यादीनां कर्तृकर्मादिपदार्थानां ज्ञानस्य आकाङ्क्षा भवतीति। एवञ्च कृदन्तक्रिया सिद्धा, तिङन्तक्रिया साध्या च भवति। तदुक्तम् —

**कृदभिहितो भावो द्रव्यवत् प्रकाशते।**
**असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते॥**[४४]

तत्र सिद्धा क्रियैव नामपदानां प्रवृत्तिनिमित्तं भवति। यथा सिद्धा पाकक्रिया पाचक-शब्दस्य प्रवृत्तिनिमित्तं विद्यते। पाचकशब्दः एनामेव निमित्तीकृत्य पाककर्तारं बोधयति। पाक-कर्तरि पाकक्रिया भवति। अतः पाचकशब्दः पाककर्तारं बोधयति। एवं सिद्धाः पाकादिक्रियाः केषाञ्चिन्नामपदानां प्रवृत्तिनिमित्तानि भवन्ति। इत्थं क्रियापि प्रवृत्तिनिमित्तम्।

तत्र क्रियाशब्दाःद्विविधाः – कर्त्रादौ प्रयज्युमानाः, क्रियामात्रवचनाश्च। कर्त्रादौ प्रयज्युमानाः पाचकादयः।

---

४२. म.भा. १.३.१।
४३. वा.प.क्रि.स ४।
४४. वा.प. १.२.१४५।

**द्रव्यप्रवृत्तिनिमित्तम् —**

लिङ्गसंख्यान्वयित्वं गुणाश्रयत्वं वा द्रव्यत्वम्। यत्र पदार्थे लिङ्गस्य संख्याया वा अन्वयो भवति तद्द्रव्यं कथ्यते। यत्र गुणो भवति गुणोत्पत्तेर्योग्यता वा भवति स पदार्थो द्रव्यं कथ्यते। द्रव्यं सत्त्वशब्देनापि उच्यते।[४५] द्रव्यमेव व्यक्तिशब्देनोच्यते,संज्ञाशब्देन यदृच्छाशब्देन वोच्यते। एतद् द्रव्यमपि केषाञ्चिनामपदानां प्रवृत्तिनिमित्तं भवति। डित्थादीनां शब्दानां यदृच्छासंनिवेशितो धर्मो व्यक्तिरूपं द्रव्यं वा प्रवृत्तिनिमित्तं भाति।[४६] यथा 'दण्डः' द्रव्यं वर्तते। अत्र रूपादयो गुणा भवन्ति। अत्र पुंस्त्वस्य लिङ्गस्य एकत्वादिसंख्यायाश्च अन्वयः संभवति। दण्डरूपं द्रव्यं दण्डिशब्दस्य प्रवृत्तिनिमित्तं भवति। एवं 'विषाणी' इति शब्दोऽपि द्रव्यशब्दो विद्यते। अस्य प्रवृत्तिनिमित्तं विषाणं विद्यत इति महिमभट्टादिसाहित्यिकानामायः।

वैयाकरणानां मते 'दण्डी, विषाणी' इत्यादयो गुणशब्दाः सन्ति। पुरुषे दण्डस्य पशौ विषाणस्य च सम्बन्धः पश्चाद् भवति, यथा घटे शुक्लादिगुणस्य आगमनं पश्चाद् भवति। दण्डादयः शुक्लादिवद् बहिरङ्गाः सन्ति। अतस्ते गुणाः सन्ति। अतः व्यक्तिरेव केनचित् प्रकारेण द्रव्यमुच्यते। द्रव्यलक्षणम् —

**वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्ते।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥**[४७]

महर्षिर्वाजप्यायनानुसारं सर्वेषां शब्दानां जातिपदार्थः स्वीक्रियते। द्रव्यस्योपस्थितिस्तु लक्षणया आक्षेपात् सामर्थ्याद्वा भवति। तथा च आख्यातस्थलेऽपि क्रियाजातेरेवाभिधानं भवति। शुक्लादिगुणशब्दादपि गुणजातेरभिधानं, संज्ञाशब्दस्थले च जातेर्वाचकत्वम्। एवं प्रकारेण सर्वत्रैव जातिपदार्थः स्वीक्रियते।[४८] व्याडिराचार्यो[४९] बहुभिस्तर्कैः व्यक्तिपदार्थं प्रतिपादयति।

व्यक्तिविवेककारो महिमभट्टः — सर्वेषां नामपदानाम् एकैव प्रवृत्तिनिमित्तमित्यपररमपि

४५. पासू. - चादयोऽसत्त्वे, सत्त्वं द्रव्यम्।
४६. का.प्र.आ.२।
४७. वा.प. ३.१.३।
४८. मा.भा. १.२.६४।
४९. द्रव्याभिधानं व्याडिः मा.भा. १.२.६४ वा ४६।

पक्षं स्थापयति। सा च क्रिया रूपा। तदुक्तम् — **केचित् पुनरेषां क्रियैवैका प्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमेव सर्वेषां नामपदानामुपगच्छन्ति।**[५०] सा क्रिया कस्यापि वस्तुनः स्वसरूपासादनरूपा घटनक्रिया भवति। यथा घटस्य प्रवृत्तिनिमित्तं घटनं भवति। घटनात् घटो भवति। यदा घटे स्वरूपप्राप्तिः भवति, तदैव घटो घटपदव्यपदेश्यो भवति। तदुक्तम् —

**घटतीति घटो ज्ञेयो नाघटन् घटतामियात्।**[५१]

घटो यावत् घटत्वं न प्राप्नोति तावद् घटो घटशब्देन न व्यवह्रियते। शुक्लो यावत् शुक्लत्वं नासादयति तावद् शुक्लशब्देन व्यवहारयोग्यो न भवति। पाचको यावत् पचकत्वं न प्राप्नोति तावद् पाचकः पाचकशब्देन नोच्यते। एवञ्च घटशब्दस्य प्रवृत्तिनिमित्तं घटत्वप्राप्तिः। शुक्लब्दस्य प्रवृत्तिनिमित्तं शुक्लगुणप्राप्तिः। पाचकब्दस्य प्रवृत्तिनिमित्तं पाकक्रियावाप्तिः। एवं द्रव्यत्वप्राप्तिश्चद्रव्यशब्दस्य प्रवृत्तिनिमित्तं भवति। एषा घटत्वादिप्राप्तिरूपा–सत्तासादनरूपा वा क्रियैव सर्वेषां शब्दानां प्रवृत्तिनिमित्तं भवति। सत्तासादनरूपैषा घटनक्रिया सर्वेषां नामपदानां प्रवृत्तिनिमित्तमस्ति। एनां घटत्वासादनरूपक्रियामाश्रित्यैव विपच्य घटो भवति (कम्बुग्रीवादिमान्पदार्थः उभयोः विपचनघटन–क्रिययोः कर्ता भवति) इत्यत्र विपच्यपदस्थक्त्वाप्रत्ययबोध्यपचिक्रियायाः पौर्वकाल्यं[५२] घटनक्रियामपेक्ष्य भवति, न तु भवनक्रियामपेक्ष्य।[५३] भवनक्रिया तु पदार्थानां सत्ताव्यविचाराभावात् प्रतीयमाना क्रिया विद्यते। पूर्वं पाकक्रिया पश्चात् घटत्वासादनम् इति।

एवं सर्वेषां प्रयोगस्थानां शब्दानां व्युत्पत्तिरेवमेवं कर्तव्या – घटति इति घटः, काकति इति काकः, गवति इति गौः– इत्यादि। यो घटत्वं प्राप्नोति स घटः, यः काकत्वं प्राप्नोति स काकः, यो गोत्वं प्राप्नोति स गौः इति। एवं प्रयोगस्थघटकाकादिशब्दानां साधनाय तेषां प्रकृतिरूपेण घट–काकादयः केवलाजादिप्रत्ययान्ताः स्वीकार्याः। इत्थं सर्वेभ्यः प्रातिपदिकेभ्यः

---

५०. व्य. वि.प्र.वि.पृ. २३।
५१. व्य.वि.प्र.वि. पृ. ३२।
५२. पा.सू. समानकर्तृकयोः पूर्वकाले।
५३. व्य.वि.प्र.वि. पृ. २५ (तदपेक्षमेप च विपच्य घटो भवतीत्यादौ विपाकादिक्रियायाः पौर्वकाल्यं क्त्वाप्रत्ययस्य विषयो वेदितव्यः। यथा — अधिश्रित्य पाचको भवति–इत्यादौ पाकाद्यपेक्षमधिश्रयणादेर्न भवनक्रियापेक्षम्)।

क्विबादिप्रत्ययान् विधाय प्रयोगयोग्याः शब्दाः साधनीयाश्चेति श्रीमहिमभट्टाशयः।[५४]

**वस्तुतः- शाकटायनमते धातुमूला एव सर्वे शब्दाः।** तदुक्तम् -

**नाम च धातुजमाह निरूक्ते व्याकरणे शकटस्य च तोकम्।**[५५]

अतः सर्वेषां शब्दानां क्रियाशब्दत्वात्सर्वेषां शब्दानां प्रवृत्तिनिमित्तं क्रियैव भवतीति। महिमभट्टेनापि एतदेवानुश्रितं स्वसिद्धान्ते विस्तरेण प्रतिपादितम्। यद्यपि क्रिया घटे सर्वदा न भवतीति वक्तुं तु शक्यते, अथापि तत्र तादृशक्रियायोग्यतायाः ग्रहणात् क्रियाशब्दत्वं तत्र भवत्येवेति बोध्यम्।

महाभाष्यकारेण शब्दप्रवृत्तिविषये चातुर्विध्यमुक्तम्। तथाहि — चतुष्टयी शब्दानां प्रवृत्तिः - जातिशब्दाः गुणशब्दाः, क्रियाशब्दा, यदृच्छाशब्दाश्चतुर्थाः।[५६] शब्दानामर्थे या प्रवृत्तिः तत् प्रवृत्तिनिमित्तभेदात् प्रकारचतुष्टयवतीत्यर्थप्रवृत्तिः।[५७] अयञ्च पक्षः आचार्यस्य भगवतः पाणिनेः, अथ च भाष्यकारस्य भवति। यतः यदृच्छाशब्दो नाम अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्तर्यभिप्रायेणैव प्रवर्तते स यदृच्छाशब्दो डित्थादिः।[५८] यदृच्छाशब्दाभावे केवलं व्युत्पत्तिपक्षस्वीकारे च अर्थवत्सूत्रप्रणयनं व्यर्थं स्यात्। पश्चाच्च- त्रयी शब्दानां प्रवृत्तिः- जातिशब्दाः गुणशब्दाः, क्रियाशब्दाः, न सन्ति यदृच्छाशब्दा[५९] इत्युक्तं तदेतत् वार्तिककारमतम्।

---

५४. व्य.वि.प्र.वि.
घटतीति घटो ज्ञेयो नाघटन् घटतामियात्।
अघटत्वाविशेषेण पटोऽपि स्याद् घटोऽन्यथा॥ ८॥
घटनञ्च तदात्मत्वापत्तिरूपा क्रिया मता।
मूलञ्च तस्याश्चित्रार्थभासाविष्कृतिरीशितुः॥ ९॥
यः कश्चिदर्थः शब्दानां व्युत्पत्तौ व्यान्निबन्धनम्।
प्रवृत्तौ तु क्रियैवेका सत्ताऽऽसादनलक्षणा॥ १०॥
तस्यामेव क्विवाद्याश्च विधेयाः कर्तृमात्रतः।

५५. म.भा. ३.३.१।

५६. म.भा.भा.सू. २।

५७. म.भा.भा.सू. २ उ.टी.।

५८. म.भा.भा.सू. २ उ.टी.।

५९. म.भा.भा.सू. २।

तत्र वार्तिककृतामयमभिप्रायः यत् ये यदृच्छाशब्दाः भवन्ति, तेऽपि कथञ्चिद् व्युत्पन्ना एव। अद्यत्वेऽपि यदा (यदृच्छया) नाम क्रियते, तदा प्रशस्यरूपा क्रिया गुणो वा अध्यारोप्यते।[६०] एवञ्च सर्वेऽपि व्युत्पन्ना क्रियादिशब्दा एव। आचार्यो भगवान् पाणिनिः (महेश्वरो वा) अव्युत्पत्तिपक्षाश्रयणेनैव ऌकारोपदेशं करोति। वार्तिककारस्तु व्युत्पत्तिपक्षाश्रयणेनैव ऌकारोपदेशं प्रत्याचष्टे।[६१]

एवञ्च यदृच्छाशब्दानां सन्निवेशः क्रियाशब्देषु भवति। अर्थात् सर्वे शब्दाः धातुत एव निष्पन्नाः सन्ति। एतदर्थमेव उणादिप्रत्ययानां रचना। तदुक्तम् —

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।**
**कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥**[६२]

अतः सर्वे शब्दाः क्रियावाचका एव। अत एव च यदृच्छाशब्दस्य क्रियाशब्देषु अन्तर्भावः सम्भवतीति वार्तिककृतामभिप्रायः। किन्तु नैतत् सैद्धान्तिकमतम्। अथ च यदि सर्वशब्दानां क्रियावाचकत्वमेव सम्भवति तदा किमर्थं न भाष्यकारेण क्रियामात्रप्रवृत्तिनिमित्तं स्वीकृतम्, कथं त्रित्वपक्षं स्वीकृतम्। अतः क्रियैवेका प्रवृत्तिनिमित्तमिति न सैद्धान्तिकं मतम्। अत एव श्रीमहिमभट्टेनानि अस्मिन् पक्षे अस्वास्यं दर्शयितुं केचित् उपगच्छन्ति इत्युक्तम्। नैतत् सैद्धान्तिकमतम्। सिद्धान्तमतं तु चतुष्टयी शब्दानां प्रवृत्तिः. इत्येव। अत्र पक्षे-गौः शुक्लः चलो डित्थः इति चतुर्विधलोकव्यवहारोऽप्युपपद्यते। तदनुरोधात् गवादिव्यक्त्युपाधिचतुष्टयी शब्दानां प्रवृत्तिः इत्येतत्पक्षश्च नागेशस्यापि तथा चोक्तम् — पक्षान्तरैरपि परिहाराः भवन्तीति वार्तिककृतैवमुक्तम्। वस्तुतश्चतुष्टयीपक्षेऽपि दोषपरिहारः सुकरः.............।[६३] किञ्च श्रीमम्मटादयः प्रवृत्तिनिमित्त्वचतुष्टयपक्ष एव श्रद्धानाः दृश्यन्त इति यदृच्छशब्दसत्त्वे चतुष्टयी शब्दानां प्रवृत्तिः, यदृच्छशब्दानामन्यत्र समावेशे त्रयी शब्दानां प्रवृत्तिरितिरिति दिक्।

*****

**प्रो. सुबोधशर्मा**
आचार्यो विभागाध्यक्षश्च, व्याकरणविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

६०. म.भा.भा.सू. २ प्र.टी.।
६१. म.भा.भा.सू. २ प्र.टी.।
६२. म.भा. ३.३.१।
६३. म.भा.भा.सू. २ उ.टी.।

# दर्शनान्तरीयरीत्या कर्मत्वसम्प्रदानत्वयोर्भेदविमर्शः

— डॉ. प्रदीपकुमारपाण्डेयः

''स्वौजस्मौट्छष्टाभ्याम्भिस्ङेभ्यां भिस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्[१]'' इति सूत्रेण प्रातिपदिकमुद्दिश्य स्वादिविभक्तयः विधीयन्ते। किन्तु प्रातिपदिकनिष्ठोद्देश्यतानिरूपिताविधेयता येषु प्रत्ययेषु वर्तते तेषां प्रत्ययानां कोऽर्थ इति न निर्धारितो जातोऽनेन सूत्रेण। अतः अव्युत्पन्न–प्रातिपदिकोद्देश्यकस्वादिप्रत्ययानामर्थनिर्धारणाय भूषणसारकारादिभिः सुब्निष्ठशक्तिनिरूपकार्थकं सुबर्थप्रकरणम्, प्रक्रियाकारादिभिस्तु विभक्तिनिष्ठशक्तिनिरूपार्थकं विभक्त्यर्थाख्यं प्रकरणं निर्मितम्। तत्र भूषणादिग्रन्थे सुबर्थप्रकरणं स्यात् वैय्याकरणसिद्धान्तकौमुद्यादौ विभक्त्यर्थप्रकरणं वा स्यात्, उभयत्र अव्युत्पन्नप्रातिपदिकोद्देश्यकस्वादिप्रत्ययानामर्थस्यैव निर्णयः कृतो वर्तते। तत्र वैय्याकरणैः ''कर्मणि द्वितीया[२]'' इति पाणिनिसूत्रप्रामाण्यात् द्वितीयाविभक्तिः कर्मवाचिकेति स्वीकृतम्, एवमेव ''चतुर्थी सम्प्रदाने[३]'' इति सूत्रप्रामाण्यात् सम्प्रदानवाचिका चतुर्थीति, अङ्गीकृतम्। अपि च स्वसिद्धान्तरीत्या कर्मसम्प्रदानयोः स्वरूपमपि प्रतिपादितम्। वैय्याकरणाः विभक्त्यर्थनिर्णायकसूत्रेषु ''कर्मणि द्वितीया'' इति सूत्रे ''चतुर्थी सम्प्रदाने'' इति सूत्रे च क्रमशः कर्मपदम्, सम्प्रदानपदञ्च धर्मिपरकं मत्वा कर्मबोधिका द्वितीया, सम्प्रदानबोधिका च चतुर्थीति स्वीकृतवन्तः। ''सप्तमीपञ्चम्यौ कारकमध्ये[४]'' इति सूत्रव्याख्यानं कुर्वद्भिः वैय्याकरणैः सूत्रेऽस्मिन् कारकशब्दः कर्तृत्वशक्तिपरः इति स्वीकृतम्। एवञ्च वैय्याकरण–निकाये कारकशब्दो धर्मिधर्मयोरुभयोः बोधकं। कुत्र कारकशब्दः धर्मिबोधकः कुत्र च धर्मबोधक इत्यन्या कथा। यतो न्यायशास्त्रे कारकसंज्ञाव्याप्यकर्मादिसंज्ञाबोधकशब्दस्य व्याख्यानं धर्मबोधकत्वेनैव कृतं वर्तते, अतः तन्मते''कर्मणि द्वितीया'' इति सूत्रे कारकबोधकः कर्मशब्दः कर्मत्वपरः। एवमेव ''चतुर्थी सम्प्रदाने'' इति सूत्रेऽपि कारकबोधकसम्प्रदानशब्दः

१. पा.सूत्र ०४/०१/०२।
२. पा.सूत्र ०२/०३/०२।
३. पा.सूत्र ०२/०३/१३।
४. पा.सूत्र ०२/०३/०७।

धर्मपरः। एवं सति तन्मते सूत्रद्वयस्याऽर्थो फलति यत् कर्मत्ववाचिका द्वतीया, सम्प्रदानत्ववाचिका चतुर्थी, इति। यतः कर्मत्ववाचिका द्वितीया अतः कर्मत्वस्वरूपमपि वक्तव्यम्। तच्चाऽस्ति ''क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वम्[५]''। यथा देवदत्तः ग्रामं गच्छति। अत्र हि क्रिया उत्तरदेशसंयोगाऽनुकूलव्यापारात्मिका, तज्जन्यं फलम्, उत्तरदेशसंयोगः, तत्फलभागितया ग्रामः स्यादिति देवदत्तवृत्ति, इच्छा, तद्विषयो ग्रामः इति कृत्वा ग्रामस्य कर्मसंज्ञाजातत्वेन ग्रामशब्दात् कर्मत्ववाचिका द्वितीया भवति। सम्प्रदानस्वरूपत्वमपि स्वमते भणितं यत् ''क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वं सम्प्रदानत्वम्[६]''। यथा विप्राय गां ददाति। अत्र हि दानक्रियाजन्यं फलं स्वत्वं तच्च गो निष्ठम्, अतः क्रियाजन्यफलाश्रयत्वेन गोः कर्मसंज्ञा, तत्फलभागितया दातुरिच्छाविषयस्य ब्राह्मणस्य सम्प्रदानसंज्ञा। यद्यपि न्यायमते कर्मत्वं क्रिया-जन्यफलशालित्वमेव, न तु, इच्छा घटितम्, तथापि ''कर्तुरीप्सिततमं कर्म'' इति सूत्रेण कर्तुः क्रियया व्याप्तुमिष्टस्य कर्मसंज्ञा विधीयते, क्रियया व्याप्तुमिष्टत्वञ्चात्र क्रियाजन्यफलभागितयेच्छा-विषयत्वमेव, एवं रीत्या कर्मत्वसम्प्रदानत्वयोर्विशेषाभावादैक्यं प्राप्तं तच्च न युक्तम्, यतोहि विप्राय गां ददाति, इत्यत्र उभयोः गोविप्रयोः उभयसंज्ञा (कर्मसंज्ञा सम्प्रदानसंज्ञा च) एककाला-वच्छेदेन प्राप्ता भवति, इष्यते च गोः कर्मसंज्ञा, विप्रस्य च सम्प्रदानसंज्ञा। एतेन पर्यायेणान्य-तरस्यान्यतरसंज्ञा सिद्धा ''णवुल्तृचौ'' इतिवदिति कथयन्तः परास्ताः। ननु क्रियया व्याप्तुमिष्टस्य यदा क्रियाजन्यफलभागितयेच्छाविषयत्वेन व्याख्या क्रियते तदैव कर्मत्वसम्प्रदानत्वयोः ऐक्यं प्राप्तं भवति, किन्तु ग्रामं गच्छति तृणं स्पृशति, इति वाक्यघटकतृणादेः क्रियजन्यफलभागित-येच्छाविषयत्वाऽभावे ''तथायुक्तं चानीप्सितम्'' इति इत्यनुशासनेन कर्मसंज्ञा भवति, अतः कर्मत्वशरीरे इच्छानिवेशो न क्रियते सम्प्रदानत्वशरीरे च इच्छानिवेशो क्रियते अतः इच्छाविषय-त्वानिच्छाविषयत्वेनोभयोर्भेदः इति चेन्न। कर्मसंज्ञाविधायकं नाना सूत्राणि रचितानि पाणिनिना, किन्तु कर्मसंज्ञामुद्दिश्य द्वितीयाविधायकन्त्वेकमेव सूत्रम्, कर्मणि द्वितीया'' इति। यदि कर्मत्व-शरीरे, इच्छानिवेशो न स्यात् किन्तु सामान्यतया क्रियजन्यफलशालित्वस्यैव कर्मसंज्ञाविधीयते

५. राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय) नई दिल्ली द्वारा प्रकाशित सुदर्शनाचार्य प्रणीत आदर्शटीकासहित आचार्य गदाधर प्रणीत व्युततपत्तिवाद द्वितीय भाग पृष्ठ संख्या ८३ संस्करण प्रथम सन् २०११ सम्पादक प्रो. हरेराम त्रिपाठी।

६. राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय) नई दिल्ली द्वारा प्रकाशित सुदर्शनाचार्य प्रणीत आदर्शटीकासहित आचार्य गदाधर प्रणीत व्युततपत्तिवाद द्वितीय भाग पृष्ठ संख्या ८३ संस्करण प्रथम सन् २०११ सम्पादक प्रो. हरेराम त्रिपाठी।

तदा ''कर्तुरीप्सिततमं कर्म'' ''तथायुक्तं चानीप्सितम्'' इति सूत्रयोर्मध्ये एकस्य सूत्रस्य वैयर्थ्यं स्यात्, एकेनैव सूत्रेण ग्रामस्य तृणस्य चोभयोः गम् धात्वर्थव्यापारजन्यशालित्वेन कर्मसंज्ञाप्राप्तिसम्भवात्। न च सूत्रवैयर्थ्यं युक्तम्। तस्मात् कर्मत्वशरीरेऽपीच्छानिवेशोऽस्त्येव, तथा च ''कर्तुरीप्सिततमं कर्म'' इति क्रियाजन्यफलाश्रयतयेच्छाविषयस्य ग्रामादेः कर्मसंज्ञा ''तथायुक्तं चानीप्सितम्'' इत्यनेन इच्छायाः अविषयस्यापि क्रियाजन्यसंयोगादिफलाश्रयमात्रस्य तृणादेः कर्मसंज्ञा इति रीत्या अनुशासनद्वयोद्देश्य भेदे सति नान्यतरस्य वैयर्थ्यम्। न च क्रियजन्य-फलशालित्वं कर्मत्वम्, इत्यस्येदमेव तात्पर्यं यत् क्रियाजन्यफलस्याश्रयो यो भवति तस्य कर्मसंज्ञा। इच्छया फलाश्रयः स्यात्, अनिच्छया वा फलाश्रयः स्यादित्यत्र न कश्चनाग्रहः, अतः ग्रामं गच्छति तृणं स्पृशति, इत्यत्र यथा ग्रामः संयोगरूपफलस्याश्रयः तथा तृणमपि। अतः उभयोः कर्मसंज्ञा तथायुक्तमिति लक्षणेन सिद्ध्यति, इच्छाघटितकर्मलक्षणमूलकम्, ''कर्तुरीप्सिततमं कर्म'' इत्यनुशासनस्य वैयर्थ्यं पुनः प्राप्तिमिति वाच्यम्। ''कर्तुरीप्सिततमं कर्म'' इत्यनुशासनाऽभावे धातूपस्थाप्यक्रियाजन्यफलाश्रयमात्रस्य कर्मसंज्ञाविधाने यत्र क्रियाजन्यफलस्य बाधः तत्र कर्मसंज्ञाविधानार्थम्, इच्छा घटितकर्मलक्षणमूलकम्, ''कर्तुरीप्सि-ततमं कर्म'' इत्यनुशासनमावश्यकम्। यथादेवदत्तः काशीं गच्छन् मार्गे मृतः। अत्र हि व्यापाराश्रयस्य कतृभूतस्य देवदत्तस्य मार्गे एव प्राणवियोगात् एकस्मात् स्थानात् परस्थानप्राप्ति-हेतुककतृवृत्तिपादन्यासरूपव्यापारजन्यसंयोगरूपफलस्यऽश्रयः काशी न जातः, प्राणवियोगेन बाधित्वात्। एवञ्च काश्याः कर्मसंज्ञानापत्तिः। तदर्थं कर्तुः इति सूत्रं कर्तव्यमेव। अनीप्सितस्य तृणादेः कर्मत्वसम्पादनाय तथा युक्तमप्यावश्यकम्। एवं सति कर्मत्वसम्प्रदानत्वयोः इच्छा-घटितत्वेनैक्यं दुरुद्धरमेव। ननु धात्वर्थतावच्छेदकफलशालित्वेनोद्देश्यत्वं कर्मत्वम्, (उद्देश्यत्वं नाम इच्छाविषयत्वम्) धात्वर्थतानवच्छेदकफलशालित्वेनोद्देश्यत्वं सम्प्रदानत्वम्, इति रीत्या भेदः, यथा ग्रामं गच्छति, इत्यत्र संयोगाऽनुकूलो व्यापारः धात्वर्थः तदवच्छेदकं फलं संयोगः तत्फलाश्रयत्वेनेच्छाविषयः ग्रामः अतः ग्रामस्य कर्मसंज्ञा। ब्राह्मणाय गां ददाति, इत्यत्र धात्वर्थः स्वस्वत्वध्वसाऽनुकूलत्यागः, धात्वर्थतावच्छेदकं फलं स्वस्वत्वध्वंसः, दाधात्वर्थतानवच्छेदकी-भूतं फलं परस्वत्वं तादृशफलाश्रयत्वस्येच्छोद्देश्यत्वेन ब्राह्मणस्य सम्प्रदानत्वमिति चेन्न। ददाति क्रियायाः प्रयोगः तदैव भवति यदा दानकतृनिरूपितं स्वत्वं यस्मिन् द्रव्ये वर्तते तद्द्रव्यवृत्तिस्वत्वस्य ध्वंसः परस्वत्वोत्पादनं स्वेच्छया करोति कश्चन दानकर्ता। यदि कश्चन जनः उपेक्षया यत्किमपि द्रव्यं त्यच्यते तदा यद्यपि उपेक्षया त्यागविषयीभूतद्रव्यवृत्तिदानकतृकस्वामित्वनिरूपितस्वत्वस्य

ध्वंसो भवति लोके तथापि न ददाति प्रयोगः, यदि स्वस्वत्वध्वंसाऽनुकूलः त्याग एव दाधात्वर्थः स्वीक्रियते तदा उपेक्षया त्यागस्थलेऽपि ददाति, इति क्रियापदप्रयोगापत्तिः न चैददिष्टम्। अतः स्वस्वत्वध्वंसपूर्वकपरस्वत्वानुकूलत्यागः ददातेरर्थः स्वीकर्तव्यः एवमर्थस्वीकारे ब्राह्मणाय गां ददाति, इत्यत्र सम्प्रदानत्वेनविवक्षिते ब्राह्मणेऽपि धात्वर्थतावच्छेदकीभूतपरस्वत्वरूपफल-शालित्वं प्राप्तं यच्च कर्मत्वेव, एवञ्च कर्मत्वसम्प्रदानत्वयोर्विशेषाऽभावः तादवस्थः एवेति चेदत्रोच्यते। फलाश्रयत्वेनेच्छोद्देश्यत्वं कर्मत्वम्, फलसम्बन्धितया इच्छोद्देश्यत्वं सम्प्रदानत्वम्। अर्थात् फलनिष्ठाऽधेयतानिरूपिता या अधिकरणता तदधिकरणत्वेनेच्छोद्देश्यस्य प्रातिपदिकस्य कर्मता, यथा ग्रामं गच्छति, इत्यत्र गम्धात्वर्थक्रियाजन्यं फलं संयोगः स च संयोगः यतः समवायसम्बन्धेन ग्रामे वतर्ते अतः समवायसम्बन्धावच्छिन्नसंयोगरूपफलनिष्ठाऽधेयता-निरूपिताऽधिकरणता ग्रामवृत्तिरेव। तदधिकरणत्वेनेच्छोद्देस्यस्य ग्रामस्य कर्मसंज्ञा धात्वर्थता-वच्छेदकफलनिरूपकतयेच्छोद्देश्यस्य प्रातिपदिकस्य सम्प्रदानता। ब्राह्मणाय गां ददाति, इत्यत्र दा धात्वर्थतावच्छेदकीभूतं फलं स्वस्वत्वध्वंसपूर्वकपरस्वत्वं तत्स्वत्वस्य स्वरूपसम्बन्धेनाश्रयस्य गोः कर्मसंज्ञा, गोवृत्तिस्वत्वनिरूपकेच्छोद्दश्यस्य ब्राह्मणस्य सम्प्रदानता, एवं रीत्या अस्त्युभयोर्मध्ये भेदः। ननु फलाश्रयतया फलसम्बन्धितया इच्छोद्देश्यस्य क्रमशः कर्मसंज्ञा सम्प्रादानसंज्ञा च विद्धत्ता, परञ्च आश्रयत्वमपि सम्बन्धविशेषः एव। एवं सति दाधात्वर्थता-वच्छेदकीभूतं यत् फलं स्वत्वं तस्य आश्रयो यदि गोरूपप्रातिपदिकमित्युच्यते तदेदमपि कथितुं शक्यते यत् दाधात्वर्थतावच्छेदकीभूतं यत् फलं स्वत्वं तस्य सम्बन्धी गौरिति, एवं रीत्या गोः यथा कर्मसंज्ञाप्राप्ता तथा सम्प्रदानसंज्ञाऽपि प्राप्ता, उभयोर्मध्ये कतिरेणभाव्यमिति विचारणायाम् ''अपादानमुत्तराणि कारकाणि बाधन्ते'' इति सिद्धान्तरीत्या संम्प्रदानसंज्ञापेक्षया परभूतया कर्मसंज्ञया संम्प्रदानसंज्ञायाः बाधात् गवादेः कर्मसंज्ञैव भवति, न तु संम्प्रदानसंज्ञा। एवमेव ब्राह्मणस्यापि कर्मत्वापत्तिः। तथा च ब्राह्मणादीनां सम्प्रदानसंज्ञसिद्ध्यर्थं संप्रदानत्वशरीरघटकः सम्बन्धः आश्रयत्वसम्बन्धापेक्षया भिन्नः एव सम्बन्धो वक्तव्यः। आश्रयत्वसम्बन्धापेक्षया भिन्नसम्बन्धस्वीकारे वृक्षायोदकं सिञ्चति, इत्यत्र वृक्षस्य सम्प्रदानत्वानापत्तिः। यतोहिषिच् धात्वर्थः जलसंयोगाऽनुकूलोव्यापारः धात्वर्थतावच्छेकं फलं जलसंयोगः तस्य समवायेनाश्रयः वृक्षः, अतः तस्य कर्मसंज्ञैव भविष्यति न तु सम्प्रदानसंज्ञेति चेन्न। सम्प्रदानस्वरूपे धात्वर्थता-वच्छेदकीभूतं यत् फलं तादृशफलाश्रयत्वापेक्षया भिन्नो यो फलसम्बन्धः तत्सम्बन्धेनेनेच्छोद्देश्य सम्प्रदानसंज्ञेति कृत्वा न दोषः। यतोहि धातुपाठे क्षरणार्थकः षिच् धातुः क्षरणञ्च यद्यपि क्रिया

तथापि अत्र फलत्वेनोपदिष्टः। अतः न द्रवद्रव्यसंयोगाऽनुकूलोव्यापारः सिच्धात्वर्थः किन्तु द्रवद्रव्यसमवेतक्षरणाऽनुकूलो व्यापारः सिच् धात्वर्थः। धात्वर्थतावच्छेदकीभूतं फलं क्षरणं तच्चोदके समवायसम्बन्धेन तिष्ठति। अतः धात्वर्थतावच्छेदकीभूतस्य क्षरणरूपफलस्य समवायसम्बन्धेन फलाश्रयतया इच्छोद्देश्यस्योदकस्य कर्मसंज्ञा, कर्मसंज्ञाभूतस्योदकस्य संयोगसम्बन्धेनेच्छोद्देश्यं वृक्षः, अतः तस्य सम्प्रदानसंज्ञा इति स्वीकारे न काचित् विप्रतिपत्तिः। पत्ये शेते , इत्यत्रापि प्रीत्यनुकूलं शयनमिति शीत्वर्थः येन धात्वर्थवच्छेदकस्य प्रीतिरूपफलस्य समवायेनाश्रस्य पत्युः कर्मसंज्ञा स्यात्, किन्तु शरीरसौख्यानुकूलो व्यापारः शीधात्वर्थः, प्रौढवधूः पत्ये शेते, इत्यत्र शरीरसौख्यरूपं फलं समवायसम्बन्धेन प्रौढवधू इत्यत्रैव वर्तते तज्जनकव्यापरो-ऽपि तत्रैव, अतः प्रौढवधू इत्यस्य परत्वात् कतृत्वं सम्पद्यते, परञ्चात्र विचारणीयो वर्तते यत् शयनरूपक्रियया यत्सौख्यमुत्पद्यते प्रौढवध्वाम्, तत्सौख्यं स्वान्तः सुखाय, आहोस्वित् पत्या सह संयोगजन्यः यः आत्मवृत्तिसुखानुभूतिः तत्सुखानुभूतिपूर्वकं पत्युः आत्मन्यपि तत्सुखानु-भूतिः स्यात् एदर्थम्। यदि अत्र प्रथमः पक्षः स्यात् तदा पत्ये शेते इत्यस्य स्थाने स्वस्मै शेते इति वाक्यप्रयोगः करणीयः, किन्तु न तथाविधः वाक्यप्रयोगः कृतः, अतः द्वितीयः पक्षः एव स्वीकरणीयः। द्वितीयपक्षस्वीकारे पतिशब्दस्य सम्प्रदानसंज्ञैव भविष्यति न तु कर्मसंज्ञा, यतोहि शीधात्वर्थावच्छेदकं यत् शरीर-सौख्यरूपं फलं तत्फलस्याश्रयः प्रौढबधूः, तत्प्रौढवधूवृत्तिः यदात्मसुखानुभूतिः तस्य जनकः पतिसंयोगः एवमेव पत्युरात्मवृत्तिः यः सुखानुभूतिः तस्य जनिका प्रौढवधूः, एवञ्च पतिसंयोगनिष्ठजनकतानिरूपिताजन्यता प्रौढवध्वात्मनिष्ठसुखानुभूतौ, पत्यात्मवृत्तिसुखानुभूतिनिष्ठ जन्यतानिरूपिताजनकता प्रौढवधूनिष्ठसंयोगे, तस्मात् धात्वर्थतावच्छे-दकफलसम्बन्धिभिन्नसम्बन्धः जन्यतारूपः अथवा जनकतारूपः। अतः पतिशब्दस्य सम्प्रदान-तायां न काचित्विप्रतिपत्तिः। ननु धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसम्बन्धितयेष्टत्वं सम्प्रदानत्वं फलितम्। किन्तु शीङ्धातुरकर्मकः अर्कमकाणां धातूनां फलमप्रसिद्धं भवति, एवं शीङ्धातोः धात्वर्थतावच्छेदकं फलमप्रसिद्धम्, तस्याप्रसिद्धत्वे धात्वर्थवच्छेदकफलाश्रय-त्वभिन्नफलस्याप्यप्रसिद्धिः, अतः पत्ये शेते, इत्यत्र पतिशब्दस्य सम्प्रदानत्वं दुर्वचमेवेति चेन्न। धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसम्बन्धितयेष्टत्वं सम्प्रदानत्वमुच्यते येनोक्तदोषापत्तिः स्यात् किन्तु धात्वर्थतावच्छेदकभिन्नफलाश्रयतयेष्टत्वं सम्प्रदानत्वमुच्यते, एवं सति पत्ये शेते, इत्यादौ न दोषः। यतोहि धात्वर्थतावच्छेदकं यच्छयनात्वादिकं तद्भिन्नं यत् प्रीतिरूपं फलं तदाश्रयस्य पतिशब्दस्य सम्प्रदानतासम्भवात्। निरुक्तसमप्रदानत्वस्वीकारे ब्राह्मणाय गाम्, ददाति,

इति वाक्यस्य कः शाब्दबोधः सम्भवतीति विचारः आवश्यकः इति मत्वा निरुक्तवाक्यजन्य-शाब्दबोधः विचार्यते। ब्राह्मणनिरूपितत्वेनेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्ता। अस्योपपत्ति-रित्थं भवति। इदं तु सत्यं यत् कश्चिदपि जनः यदा स्वाऽधीनस्थस्य वस्तुनः स्वच्छेया पुण्यादि-प्राप्तये त्यागं करोति तदा सः त्यागः दानपदवाच्यो भवति, अत एवोपक्षया कृतत्यागाय न दानव्यवहारः। विप्राय गां ददाति, इत्यत्रापि दानकर्ता यावत् गौः न त्यजति तावत् दानकतृनिरूपितं स्वत्वं गवि वर्तते। यदा देवदत्तः विप्रमुद्दिश्य गौः त्यजति तदा देवदत्तनिरूपितस्वत्वनिवृत्तिः भवति विप्रनिरूपितस्वत्वस्य चोत्पत्तिर्भवति। अयमेव स्वस्वत्वत्यागः परस्वत्वोत्पत्तिः। अपि च कश्चिद् दानकर्ता यदा गां दातुमुद्यतो भवति किन्तु यमुद्दिश्य दातुमिच्छति सः यदि न स्वीकरोति तदवस्थायामपि दानोद्देश्यभूतद्रव्यवृत्तिस्वत्वस्य निवृत्तिः परस्वत्वस्य चोत्पत्तिः न जायते,तस्मात् येन यत्कृते दीयते सः यदा स्वीकरोति तदा कतृनिरूपितं दीयमानद्रव्यवृत्तिस्वत्वस्य निवृत्तिपूर्वकस्यकतृविषयकस्वत्वस्य चोपपत्तिर्जायते, प्रकृते विप्राय गां ददाति, इत्यत्र गोवृत्तिय-त्स्वत्वं तत्स्वत्वनिरूपकद्वयम्, एकः दानकर्ता, अपरश्च गृहीता,यतः विप्रनिरूपितमिच्छाविषयीभूतं यत्गोनिष्ठं स्वत्वं तादृशस्वत्वस्य जनकः दानकर्ता एव। अतः पूर्वोक्तप्रकारकः शाब्दबोधो जायते।

**पूर्वोक्तविषये मतान्तरप्रदर्शनम् —**

विप्राय गां ददाति, इत्यत्र विप्रपदे सम्प्रदानत्वसम्पादनाय स्वस्वत्वध्वंसपूर्वकपरस्व-त्वानुकूलो त्यागः" दाधात्वर्थं स्वीकुर्वन्ति। अत्र धात्वर्थतावच्छेदकं फलं परस्वत्वं तन्निरूपकत्वं विप्रेऽस्ति,अतः एतेषां मते ददाति योगे धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमेव सम्प्रदानत्वम्।

सम्प्रदानस्यापरं स्वरूपम्, धात्वर्थतानवच्छेदकफलभागितया इच्छोद्देश्यत्वं सम्प्रादन-त्वम्। तदवच्छेदकफलभागितयेच्छोद्देश्यत्वं कर्मत्वम्। यथा वृक्षायोदकं सिञ्चति। अत्र धात्वर्थः द्रवद्रव्यक्रियानुकूलो व्यापारः, तदवच्छेदकं फलं द्रवद्रव्यक्रिया सा च क्षरणरूपा तद्वृत्तिकमुदकम्, अतः उदकस्य कर्मसंज्ञा प्रकृतधात्वर्थतानवच्छेदकं फलं वृक्षवृत्ति-उदकसंयोगः, तदाश्रयः वृक्षः अतः वृक्षस्य सम्प्रदानता। पत्ये शेते, इत्यत्रापि शयनाऽनुकूलो व्यापारः शीङ्धात्वर्थः तदवच्छेदकं फलं शयनम्,अनच्छेकदकं फलं प्रीतिः, तादृशप्रीतिरूपफलभागितया इच्छोद्देश्यं पतिः, अतः तस्यापि सम्प्रदानसंज्ञायां विप्रतिपत्त्यभावः। ननु अस्मिन् सम्प्रदानलक्षणे उद्देश्य-निवेशस्य न किमपि फलमिति चेन्न। क्षरणार्थकस्य सिच्धात्वर्थतानवच्छेदकफलं वृक्षवृत्तिजल-

संयोग: अत सम्प्रदानता वृक्षस्य। किन्तु वृक्षेण सह जलसंयोग: द्विधा भवितुमर्हति, प्रथमस्तावत् सेकक्रियामुद्दिश्योदकप्रक्षेपणात्, द्वितीयस्तावत् जलपात्रे जलमादाय तर्पणमुद्दिश्य जलप्रक्षपेणात्, तत्रान्योद्देश्येन क्षिप्तजलस्य दैवाद् वृक्षसंयोगे जाते वृक्षायोदकं सिञ्चति, इत्यत्र वृक्षस्य सम्प्रदानत्ववारणायोद्देस्यत्वनिवेश: आवश्यक:। सति उद्देश्यत्वनिवेशे भवतु, अन्योकार्योद्देश्येन क्षिप्तजलस्य वृक्षेण सह संयोग:, किन्तु सिच्छात्वर्थतानवच्छेदकफलभागितयोद्देश्यता नास्ति, अत: तद् धिया न तथाविध: वाक्यप्रयोग:। किन्तु यत्र वृक्षोद्देश्येन जल: क्षिप्यते तत्र वृक्षायोदकं सिञ्चतीति लोकेऽर्थबोधनाय वाक्यप्रयोग:। वृक्षस्याऽचेतनत्वात् स्वीकाराऽसम्भवेन अत्र भाक्तमेव सम्प्रदानत्वम्। ननु कस्यचित् जनस्य वृक्षस्य जलसंयोगो भवतु, इत्याकारिकेच्छाऽस्ति, किन्तु स्वयमेव वृक्षाणां सिञ्चनं न करोति, परञ्चेच्छा काले एव अन्येन जनेनाऽन्योद्देशेन क्षिप्तजलस्य वृक्षसंयोगो जात: तत्रापि वृक्षस्य जनत्वावच्छिन्नसमवेतेच्छाविषयसंयोगरूपफलभागितयोद्देश्यत्वात् वृक्षायोदकं सिञ्चति, इति वाक्यप्रयोगापत्तिरिति चेन्न। इच्छाऽत्मन: विशेषगुण:, अत: समवायसम्बन्धेन ततद्व्यक्तिनिष्ठैव सम्भवति, प्रकृते जनादिपदेन भवतु जनत्वावच्छिन्नस्य बोध: किन्तु देवदत्तादि तत्तद्व्यक्तीनामुपस्थिरेव न भवति। एवञ्च तत्तद्व्यक्तित्वेन रूपेण विशेष्यभूतसेकादिकतृभूतव्याक्तीनां इच्छासमवायित्वेन भानाऽसम्भवात्,न तथाविध: प्रयोग:। ननु विशेष्यभूतसेकादिकतृभूतव्याक्तीनां इच्छासमवायित्वेनोपस्थितेरभावेऽपियज्जनत्वावच्छिन्नेच्छाविषयत्वेनोपस्थिति: तस्य तु वृक्षनिष्ठजलसंयोगे बाधो नास्त्येव, जलसंयोगस्य किञ्चिज्जनेच्छाविषयत्वात्। एवं सति पूर्वकाले वृक्षस्य जलसंयोगो भवतु, इतीच्छा जाता, कालान्तरे तेनैव जनेनान्योद्देश्येन क्षिप्तजलस्य वृक्षसंयोगे जात: तादृशजलवृक्षसंयोगस्यापि पूर्वकालिकेच्छाविषयत्वसम्भवात् वृक्षायोदकं सिञ्चति, इति प्रयोगापत्ति: ताद्वस्थ्यैवेति चेन्न। वृक्षायोदकं सिञ्चति, इत्यत्रेच्छाविषय:, वृक्षोदकसंयोग:, अस्या: इच्छाया: विषय: वृक्षोऽपि, यतोहि, यथा, इच्छा-समवायसम्बन्धेनात्मनि वर्तते तथा विषयतासम्बन्धेन विषये वृक्षेऽपि वर्तते, वृक्षायेत्यत्र वृक्षनिष्ठा या विषयता स: एव चतुर्थ्यन्तपदस्यार्थ:। विषयतासम्बन्धेन वृक्षनिष्ठा या विषयता तस्याश्चेछाया एव स्वविषयसंयोगादिजनकत्व, स्वजन्यत्वैतदुभयसम्बन्धेन सेकक्रियायामन्वय:, तथा च यत्र तेनैव जनेनबुद्धिपूर्वकं जलस्य वृक्षसंयोगेच्छयोदकमासिच्यते, तत्र स्वमिच्छा तद्विषयो यो वृक्षदलसंयोग: तजनकत्वमपि सेकक्रियायां भवति, जन्यत्वमपि भवति, अत: स्वविषयसंयोग-जनकत्व स्वजन्यत्वैतदुभयसम्बन्धेनेच्छाया: सेकक्रियायामन्वसम्भवात् वृक्षायोदकं सिञ्चति, इति प्रयोगो भवति। यत्सेकक्रियाव्यक्त्या जलसंयोगो वृक्षे जायते, तत्सेकक्रियाव्यक्तौ कालान्तरीणेच्छाया: पुरुषान्तरीणेच्छायाश्च स्वविषयकसंयोगजनकत्वसम्बन्धेनाऽन्वयसम्भवेऽपि तत्से-

कक्रियाव्यक्तेः उक्तकालान्तरीणपुरुषा न्तरीणेच्छाजन्यत्वाऽभात् स्वजन्यत्वसम्बन्धेनाऽन्वयाऽ-सम्भवात् न तथाविधः प्रयोगः। अपि च यदि सम्प्रदानत्वशरीरे, यदि, उद्देश्यत्वनिवेशो न क्रियते तदा अन्येऽपि दोषाः सम्भवन्ति। यथा चैत्राय दत्तं धनम्, इत्यर्थे एव चैत्रपत्न्यै दत्तमिति वाक्यप्रयोगापत्तिः। कथमिति चेत् श्रूयताम्। लोके कश्चित् जनः यद्धनं केवलं चैत्राय दत्तम्, तत्र धने यत् स्वत्वं तत् दानकतृनिरूपितम्, किन्तु यदा चैत्रः दानकतृदीयमानं धनं स्वीकरोति, तदा धनवृत्तिस्वत्वनिरूपकता चैत्रे भवति, यतः चैत्रस्वीकृतधनवृत्तिस्वत्वनिरूपकता चैत्रे एव, अतः चैत्राय दत्तमिति वाक्यप्रयोगो लोके जायते, परञ्च "दम्पत्योर्मध्यगं धनम्" इति सिद्धान्त-रीत्या दानकतृकदीयमानधनवृत्तिस्वत्वनिरूपकता यथा चैत्रे तथा तत्पत्न्यामपि, एवञ्च धने चैत्रतत्पत्न्योरुभयोरपि स्वत्वनिरूपकत्वसाम्यात्, चैत्रपत्न्यै दत्तमित्यपि प्रयोगापत्तिः, यदा तु सम्प्रदानत्वशरीरे, उद्देश्यत्वनिवेशनं क्रियते तदा न दोषः, चैत्रमुद्दिश्यैव दीयमानत्वात् न तु तत्पत्निमुद्दिश्य। ननु, उद्देश्यत्वनिवेशाऽभावेऽपि न पूर्वोक्तदोषापत्तिः, यतोहि चैत्रनिरूपकस्वत्वमेव चैत्रपत्न्याः स्वत्वमुत्पादयति, न तु चैत्रस्वत्वोत्पादिकादानसमाग्रीति दानस्य चैत्रपत्नीस्वत्वानु-पादकत्वादेव चैत्रपत्न्यै दत्तम्, इति प्रयोगापत्तिवारणसम्भवादिति चेन्न। "दम्पत्योर्मध्यगं धनम्" इति प्रमाणेन दानक्रिययादम्पत्योरेकदैव स्वत्वमुत्पद्यते इति स्वीकार्यम्, तथा च चैत्राय दत्ते चैत्रपत्न्यापि स्वत्वस्य जातत्वात् चैत्रपत्न्यै इति व्यवहारः स्यादेव किन्तु तथा विधः प्रयोगः तद्धिया नेष्टम्, अतः सम्प्रदानत्वशरीरे, उद्देशयत्वनिवेशः कर्तव्य एव। सति निवेशे न दोषः, चैत्रपत्न्या उद्देश्यत्वाऽभावात्।

**निष्कर्षः**

कर्मत्वसम्प्रदानत्वयोर्भेदविमर्शः इत्याख्ये निबन्धे मया विशेषतः कर्मत्वस्वरूपमिच्छा-घटितं भविष्यति न वेति विचारः एतः। एवमेव सम्प्रदानत्वशरीरमिच्छाघटितं सम्भवति नवेति विचारोऽपि कृतः। अपि च कर्मत्वसम्प्रदानत्वयोरिच्छाघटितत्वे, उभयोर्मध्ये भेदः कः, दाधातोः कः अर्थः वैय्याकरणानां मते, नैय्यायिकानां मते, चेत्यादिविचारः कृतो वर्तते।

*****

**डॉ. प्रदीपकुमारपाण्डेयः**
सहायकाचार्यः
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालः।

# पातञ्जलमहाभाष्ये लौकिकन्यायानां प्रयोगः

— डॉ. नरेशकुमारपाण्डेयः

वैदिककालादारभ्य चतुर्दशशतकपर्यन्तं वैयाकरणाः संस्कृतभाषामाधारीकृत्य अनेके व्याकरणगग्रन्थाः अरचयन्। तेषां मध्ये पाणिनिमहोदयस्य अष्टाध्यायीग्रन्थः लौकिकवैदिको-भयप्रक्रियाऽलंकृतत्वात् वेदाङ्गं स्वीक्रियते। तदिदं पाणिनिव्याकरणम् अष्टभिः अध्यायैः गुम्फितम्। अतः अष्टाध्यायीपदेन व्यवहारः। पाणिनिव्याकरणमधिकृत्य वाक्यकारेण कात्यायनेन वार्तिक-ग्रन्थः भाष्यकारपतञ्जलिना च महाभाष्यं रचितम्। एतस्मादेव त्रिमुनिव्याकरणमिति वैयाकरणा व्यवहरन्ति।

महाभाष्ये अष्टाध्यायीग्रन्थस्य चतुर्दशप्रत्याहारसूत्रैः सह ३९९६ सूत्रेषु[१] १६८६ सूत्राणामुपरि गोनर्दीयः भाष्यं चकार शेषसूत्राणि परम्परानुसारेणैव जग्राह। तेषु सूत्रेषु २२८ सूत्राणि अधिकृत्य कात्यायनस्य। २६ सूत्राणि अधिकृत्यान्याचार्याणां प्राप्तवार्तिकानां समीक्षा-कृता। एवञ्च ४३५ सूत्राणामुपरि भाष्यं कृतं यस्योपरि वार्तिकानि उपलब्धानि न सन्ति। सूत्राणामुपरि भाष्यकारस्य समीक्षापूर्णतः मौलिकी वर्तते।

अस्ति सम्पूर्णसिद्धान्तकौमुद्या अध्ययनाऽन्तरं भगवता पतञ्जलिना विरचितमहाभाष्य-स्याध्ययनस्यावयश्यकता। पतञ्जलिना सूत्राणां वार्तिकानामुपरि च भाष्यं विधाय यदुपकृतं सर्वेऽपि अधमर्णा भवामः। प्रक्रियाप्रदर्शने दार्शनिकपद्धत्या सूत्राणां व्याख्यानं प्राञ्जलभाषया-ऽन्यूनाक्षरपदवाक्यमर्मया पद्धत्या कृत्वा शब्दविषये कृतः महदुपकारः। तथा च त्रयाणां मुनीनां शब्दसाधुत्वोपपत्तये महान् प्रयत्नः सफलः। भगवता पतञ्जलिना पूर्ववर्तिनं निश्शेषान् व्याकरणप्रक्रियादर्शनग्रन्थान् निर्मथ्य विभावितं नवनीतनीकाशं महाभाष्यं कामपि अपूर्वां अभिख्याति सास्वती नाम चूर्णिनाम्। यतसृषु गद्यशैलीषु अन्यतमा[२]। समासयुक्तं गद्यं चूर्णित्वा

---

१. पतञ्जलिकालीन भारत – प्रभुदयाल अग्निहोत्री, पृ. १८।

**त्रीणिसूत्र सहस्त्राणि तथा नवशतानि च।षण्णवतिश्च सूत्राणां पाणिनिः कृतवान् स्वयम्॥**

२. साहित्यदर्पण – ६-२६९।

**वृतबन्धोजिझतं गद्यं मुक्तकं वृतगन्धिच। भवेद्त्कलिका प्रायं चूर्णकं च चतुर्विधम्॥**

विश्लेषणपूर्वकं यत्र प्रयोगो भवेत् तत्र समासविरहितं गद्यं चूर्णिकाख्यमभिधीयते। महाभाष्यस्य प्रतिपादनशैली सुमञ्जुला विषयनिरुपणपद्धतिः अनया चूर्णिचूर्णकगद्यशैल्या अवलम्बिता सरलतरा सम्भाषणात्मिका च विद्योतते। तत्र दुरुहविषयाणामुपक्रमः 'इदमिहसम्प्रधार्यम्'[३] इत्येतादृशैः वचनैः सार्धमध्येतृणां जागरणाय विधीयते। मध्ये मध्ये ''कि वक्तव्यमेतत्''[४] कथमनुच्यमानं गंस्यते[५] इति आहोस्वित् प्रयोजनमेतत् इति एतादृशैः सम्भाषणात्मकैः वचोभिः अध्येतृणां लक्ष्यं समाकृष्यते। पूर्वपक्षस्थापनान्तरं विषम उपन्यासः इत्यादिभिः भाषितैः उत्तरपक्षं प्रतिपाद्यते। पर्यन्ते खलु स्थानदोषः तथास्तु इत्यभिधाय यथेच्छसि तथा कुरु इति भगवद्गीतोक्तिदृशानिर्णयः खलु अध्येतृणां आयत्तः क्रियते। गोनर्दीयस्त्वाह इत्युक्त्वा क्वचिद् ग्राह्यतरं पक्षः पोष्यते। क्वचित् उभयथागोणिकापुत्रः इति उक्त्वा पक्षद्वयं स्वीकृतवान्। बहुत्र सूत्राक्षेपवार्तिकानि व्याख्याय युक्तिभिः यथा न्यायमेवास्तु इति उदीर्य सुत्रकारपक्षस्य साधीयस्त्वं आस्थाप्यते। यत्र लोकप्रयोगाणामाधारेण समाधानम् विज्ञातं तत्र देवा ज्ञातुमर्हन्ति, देव एव जानाति इत्येतादृशैः विनोदात्मकैः वचनैः निर्वाहः कृतः। भाषायां लालित्यार्थ अहिपतिना न्यायदृष्टान्तसूक्तीनां प्रयोगः कृतः। अतः ग्रन्थे रोचकता सरसता च दृश्यते। पदकारः सिद्धान्तान् प्रयोज्य भाषायाः सरलीकरणं चकार। महाभाष्ये लोकविज्ञानस्य लोकव्यवहारस्य चाश्रयः परिलक्ष्यते। उदाहरणानां प्रयोगेणानेकपरिभाषाणामेवं नियमानां स्पष्टीकरणं वर्तते। व्याकरण-वाङ्मये महाभाष्यं तु श्रेष्ठतां विभर्ति पदकारेण प्रयोगाणां साधीयस्त्वं यत्र तत्र लौकिकन्यायानां प्रयोगः कृतः। प्रयुक्तन्यायानां लौकिकत्वं वर्तमानसमये कथं सिद्धयति किमर्थं लौकिकन्यायानां प्रयोगः पतञ्जलिना कृतः इति विषये प्रस्तूयते।

### १ मण्डूकप्लुतिन्यायः[६] -

इको गुणवृद्धी इति सूत्रभाष्ये पदकारः मण्डूकप्लुतिन्यायं स्वीचकार। संज्ञयाविधाने नियमः। संज्ञया ये विधीयन्ते तेषु नियमः। वक्तव्यमेतत्। गुणवृद्धी ग्रहणसामर्थ्यात्। कथं पुनरन्तरेण गुणवृद्धी ग्रहणमिको गुणवृद्धी स्याताम्। प्रकृतं गुणवृद्धी ग्रहणमनुवर्तते। क्व प्रकृतम्। वृद्धिरादैजदेङ्गुणः इति तदवत् अनुवर्तते अदेङ्गुणः। वृद्धिश्च इत्येङां वृद्धि संज्ञापि प्राप्नोति।

३. महाभाष्ये सूत्रव्याख्या — १/१/११।
४. महाभाष्य — १/१/३।
५. महाभाष्य — १/१/१२।
६. महाभाष्यम् - इकोगुणवृद्धी सूत्र व्याख्यासरे (१.१.३)।

सम्बन्धमनुवर्तिष्यते। वृद्धिरादैच्। अदेङ्गुणः इति वृद्धिरादैच। ततः गुणवृद्धी इति गुणवृद्धिग्रहण-मनुवर्तते। आदैजेङ् ग्रहणं निवृतम् अथवा मण्डूकगतयाधिकाराः। यथा मण्डूकाः उत्प्लुत्य उत्प्लुत्य गच्छन्ति इति वदधिकाराः।

यद्यपि लोके गुणपदेन दयादाक्षिण्यादि परोपकारभूताः दयादयः गुणाः गृह्यन्ते। परं व्याकरणशास्त्रे ए-ओ-अर् इति गुणपदेन गृह्यते। एवमेव वृद्धिशब्दो वर्धनार्थं प्रयुज्यते। शास्त्रे ऐ-औ-आर् इति। अत्र द्वयोः लौकिकशास्त्रयोः तुलनाप्रसङ्गे किञ्चित् वैमत्यं अवश्यं भवेत्, तथापि न्यायः सारगर्भितः सुचिन्तितश्च अस्ति। लोके तु गुणाः सर्वत्र स्वीयं पदं निदधाति परं शास्त्रे एवं न भवति। तत्र प्रक्रियानुसारेण सर्वा संज्ञा प्रवर्तन्ते। अत्र पतञ्जलिना गुणवृद्धी प्रसङ्गे मण्डूकप्लुतिन्यायः स्वीकृतः। लोकेऽपि जनाः कूर्दन्ति कूर्दनं तु कस्यापि कर्मणः सम्पादनाय सम्भवति। वयं एवमपि तर्कयामः कार्यसिद्ध्यर्थं काऽपि गति कार्यानुसारेण एव स्यात् लोकेऽपि कश्चिद् जनः क्रमिकं पदं विहाय साक्षात् उच्चतरं पदं प्राप्नोति एकं शब्दगतोदाहरणं लौकिकसूक्तिषूलभ्यते। वसुदेवः वासुदेवः इति शब्दद्वय पूर्वं वसुदेवः शब्दः सिद्धयति परं वासुदेवः नमस्कारप्रसङ्गे वसुदेवं विहाय वासुदेवं नमस्यन्ति जनाः।

अत्र शब्दसाम्येव मण्डूकप्लुति अथवा गुणवैशिष्टयं दृश्यते। उक्तमस्ति पुनीतध्वनि सूक्तिकोषे —

**गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः।**
**वासुदेवं नमस्यन्ति वसुदेवं न मानवः॥**[७]

अहमेतदपि अनुमिनोमि यदयं न्यायः भाष्यकारेण शब्दसिद्ध्यर्थ गृहीतः लोकेऽपिजनाः कार्यसिद्धयर्थं बहुविधमुपायं कुर्वन्ति।

**२. प्रासादवासिन्यायः**[८] **—**

मुखनासिकावचनोऽनुनासिक इति सूत्रव्याख्यावसरे पदकारेण प्रासादवासिन्यायः उररीकृतः। महाभाष्ये-मुखनासिकावचनोऽनुनासिक इति सूत्रे मुखग्रहणं शक्यमकतुम्। केन इदानीमुभयवचनानां सिद्धिः भविष्यति प्रासादवासिन्यायेन। तद्यथा केचिद् प्रासादवासिनो गृह्यन्ते भूमिवासिनः केचिद् उभयवासिनः। यत्र प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन।

७. पुनीतध्वनि सूक्तिकोषः - श्लोक २०६।

८. महाभाष्यम् - मुखनासिका वचनोऽनुनासिका (१.१.८) इति सूत्रव्याख्यायां।

ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन। ये तूभयवासिनः गृह्यन्ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च। एवमिहापि केचिद् मुखवचनाः केचिद् नासिकावचनाः केचिद् उभय-वचनाः। तत्र ये मुखवचनाः गृह्यन्ते ते मुखग्रहणेन, ये नासिकावचनां गृह्यन्ते ते नासिका ग्रहणेन। ये उभयवचनां गृह्यते ते मुखग्रहणेन नासिका ग्रहणेन च।

मुखनासिकावचनोऽनुनासिकः इति सूत्रे मुखम् एवं नासिका उभयग्रहणार्थं पदकारः प्रासादवासिन्यायं स्वीकृतम्। यदि मुखं न गृह्यते तदपि न दोषः प्रासादवासिन्यायेन। स्वयमेव स्फुटो भवति एवमेव लोकेऽपि जलजन्तुनां अम्भासि, दुर्गवासिनां दुर्गोपरि एव हिंसकजन्तूनां स्वस्थाने विशेषता दृश्यते। उक्तमस्ति हितोपदेशे —

**अम्भसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम्।**
**स्वभूमिस्वपदादीनां राज्ञां मन्त्री परं बलम्॥**[९]

लोकेऽपि सूक्तिरेका परिलक्ष्यते — गङ्गायां गङ्गादासः जमुनायां जमुनादासः। लोके ये जनाः यत्र निवसन्ति तं तस्य स्थानस्यैव वासिन इति कथयन्ति। यथा ये मथुरायां निवसन्ति ते मथुरावासिनः ये गोकुले निवसन्ति ते गो कुलवासिनः ये उभयत्र निवसन्ति ते उभयवासिनः। तथैव महाभाष्यकारस्य प्रासादवासिन्यायः स्वीकृते न कोऽपि दोषः। ये मुखवचना गृह्यन्ते ते मुखग्रहणेन ये नासिकावचनागृह्यन्ते ते नासिकाग्रहणेन ये तूभयवचना गृह्यन्ते ते मुखग्रहणेन नासिकाग्रहणेन च प्रयोगाधारेणैव पदकारेण प्रासादवासिन्यायः स्वीकृतः।

**३. देवदत्तहन्तृहतन्यायः**[१०] **—**

अचः परस्मिन् पूर्वविधौ इति सूत्रव्याख्यावसरे पदकारेण देवदत्तहन्तृहतन्यायः स्वीकृतः महाभाष्ये असिद्धवचनात् सिद्धमिति चेत् नान्यस्यासिद्धवचनात्। अन्यस्य भावः असिद्धवचनात् सिद्धमिति चेत् तत्र किं कारणम् नान्यस्यासिद्धवचनात् अन्यस्य प्रादुर्भावो भवति। तद्यथा न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति। तस्मात् स्थानिवद् वचनम् अभवत् असिद्धत्वादिति। तस्मात् स्थानिवद् भावः। असिद्धत्वमिति। तस्मात् स्थानिवदभावः वक्तव्यः असिद्धत्वे च।

देवदत्तहन्तृहतेति लौकिकः न्यायः भाष्यकारेण सूत्रसन्दर्भे स्वीकृतः। उपायचिन्तयेत् — इति श्लोकेन न्यायेन अंशतो अथवा अर्थतः संगच्छते।

९. हितोपदेशमित्रलाभ श्लोक - १८६।
१०. महाभाष्य अचः परस्मिन् पूर्वविधौ (१.१.५७) इति सूत्र व्याख्यायां।

**उपायं चिन्तयेत् प्राज्ञो ह्यपायमपि चिन्तयेत्॥**

बाल्मीकिरामायणे —

**अर्थाऽनर्थौ विनिश्चित्य व्यवसायं भजेत हि।**
**गुणतः संग्रहं कुर्यात् दोषतस्तु विसर्जयेत्॥**[११]

नैकस्य नाशो अपरस्य कृते। कदाचित् एतादृशं पश्चातापं मनसि विचिन्त्य येनाऽसौ जीवने अशान्तात्मकृत्यं न कुर्यात्। व्याकरणस्यायं न्याय: अस्मानुपदिशति यद् हिंसा शान्तिभूत-दयादय: मानवीयगुणा: कदापि नैव हातव्या। एकस्य मृते सति अपरस्य हननेन: प्रतिकारो नैव भारतीया संस्कृति: अपितु तस्य पश्चाताप एव पंथा अस्ति। अस्माकं बौद्धजैनधर्मेष्वपि एतादृशि सरणिरभिलक्ष्यी भवति। हन्तारं न हन्यात् यदि वयं चिन्तयाम: यत् महर्षि: पतञ्जलि: बौद्धधर्मप्रभावित: आसीत् इत्यपि वक्तुं न शक्यते। यतोहि स: तु वैदिक:, परं शास्त्रं सम्पादयितुं तेन इयमुक्ति: स्वीकृता:, ते: अद्यापि विश्वस्मिन् विश्वे ये मनीषिण: तपस्विन: दूरदर्शिन: च समभूवन्। तेऽपि प्रतिकारं न कामयन्ते स्म। इत्येवमाशयं हृदि निधाय भाष्यकार: शब्दसिद्धि-प्रकरणे अच: परस्मिन् पूर्वविधौ सूत्रमुखेन लौकिकं सकलजनहितकारकं न्यायं व्याजहार।

**४. कुम्भीधान्य: न्याय:**[१२] **—**

गोणिकापुत्र: चुटू इति सूत्रव्याख्यावसरे कुम्भीधान्यन्यायं स्वीचकार।

महाभाष्ये — अवयव ग्रहणादिति चेत् इदित् विधिप्रसंग:। अवयवग्रहणादिति चेत् इदित् विधिरपि प्राप्नोति यदि पुन: अयमिदित् विधिं कुम्भीधान्यन्यायेन विज्ञायेत्। यस्य कुम्भ्स्यामेव धान्यं स कुम्भीधान्य:। पुन: कुम्भस्यामेव धासुपम्भीधान्य: येनासौ कुम्भीधान्य:। अयं न्याय: पूर्वकालिक: वर्तते। पुराकाले ब्राह्मणस्तु भिक्षावृत्तिद्वारैव स्वजीवननिर्वाहं कुर्विन्त स्म। धनस्याधिक्यं तु मोक्षप्राप्ते बाधकं अभवत्। कारणं तेषां मुख्योद्देश्यं मोक्षप्राप्तिरासीत्। कोऽपि धनसंचयोपरान्त निरुपद्रव: न दृश्यते। अपि चिन्ताग्रस्तोऽपि भवति।

**यावद् भ्रियेद् जठरं तावत् सत्त्वं हि देहिनाम्।**
**अधिकं योऽभिमन्येत् स स्तेनो दण्डमर्हति॥**[१३]

---

११. वाल्मीकिरामाण युद्धकाण्ड - १७।

१२. महाभाष्य चुटू (१.३.७) सूत्रव्याख्यावसरे।

१३. सूक्तियों का संग्रह - भाग १ पृ. २९।

लोकानां केवलं स्वजीवननिर्वाहार्थं धनोपरि अधिकार: आसीत्। अधिकधनसञ्चये चौरोपाधिं प्राप्य दण्डाधिकारी भवति स्म। लोकेऽपि यदि ब्राह्मणपार्श्वे धनाधिक्यं भवति तदा अनर्थाय भवेत्। अर्थैश्वर्योविमूढोब्राह्मण: स्वकल्याणमार्गात् भ्रष्टो भवति उक्तमस्ति पदं सृष्टौ—

**अनर्थो ब्राह्मणस्यैव यदर्थनिचयो महान्।**[१४]
**अर्थैश्वर्यविमूढो श्रेयसो मृश्यते द्विज:॥**
**अर्थसम्पद् विमोहाय विमोहो नरकाय च।**
**तस्मादर्थमनर्थाय श्रेयोऽर्थी दूरतस्त्यचेत्॥**
**योऽर्थेन साध्यते धर्म: क्षमिष्णु स प्रकीर्तित:।**
**य: पदार्थपरित्याग: सोऽक्षयो मुक्तिलक्षणम्॥**

ब्राह्मणशब्देन तप: स्वाध्यायनिरतानां ग्रहणमस्ति। कुम्भीधान्यन्यायपदं यावच्छक्या-वश्यकतां सूचयति। परमत्र सन्तोषोऽपिलक्ष्यते। अध्ययनाध्यापननिरतानां कृते धनस्य आकांक्षा हितकर: न भवति। वर्णाश्रमानुसारं ब्राह्मणक्षत्रियवैश्यशूद्रेषु धनसंग्रहस्याधिकार: वैश्यस्यैव वर्तते। अन्यै: केवलं निर्वाहमात्रधनमर्जनीयम्। धनविषये शास्त्रकारैरपि धनस्य महती निन्दा कृताऽस्ति धनं कष्टस्य कारणं भवति। तेन धनस्य त्याग एव श्रेयसे वर्तते। लोकेऽपि त्यागिन: सुखमनुभवन्ति लोलुप: पदे पदे कष्टानि एव। लिखिताऽस्तिहितोपदेशे —

**धनस्योपार्जने दु:खं अर्जितस्य च रक्षणे।**
**आये दु:खं व्यये दु:खं दिगर्थकष्टसंष्टितम्॥**

कुम्भीधान्यन्यायविषये मनुस्मृतौ लिखितमस्ति —

**कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा।**
**त्र्यैहिको वाऽपि भवेदश्व स्तनिक एव वा॥**
**यस्य त्रवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये।**
**अधिकं वाऽपि विद्येत स सोमं पातुमर्हति॥**

**५. आरण्यको न्याय:**[१५] **—**

अरण्यान् मनुष्ये इति सूत्रे भाष्यकारेण आरण्यक: न्याय: स्वीकृत:। अयं न्याय:

१४. पद्यसृष्टि १९ श्लोक २५०-२५१।
१५. महाभाष्ये अरण्यान् मनुष्य इति सूत्रव्याख्यायां।

उदाहरणेषु समुल्लिखितोऽस्ति। अन्ये ये न्याया: सन्ति तै: प्रक्रियायां सिद्धिर्भवति। पदं अयं उदाहरणेष्वपि न्यायभावेन लिखितोऽस्ति। आरण्यको न्याय: इति कृत्वा मयाविमर्श: क्रियते। अस्य न्यायस्यार्थ: अरण्ये बहव: प्राणिन: निवसन्ति केचित् निर्बला: केचित् बलवन्त: तत्र बलवन्त: निर्बलान् भक्षयन्ति। इति कृत्वा आरण्यको न्याय: कल्पित:। अस्य न्यायस्य व्याख्या पतञ्जलिकालीनभारतवर्षे ग्रन्थे वर्तते। लोकेऽपि अयं न्याय: दृश्यते यत्र सुशासनमस्ति तत्रैव अयं न्याय: भवतीतिति सम्प्रति सर्वकारस्य विविधा प्रबन्धा: सन्ति। तथापि लोका इमं न्यायं अनुसरन्ति। केनापि कविना लोकेऽपि इमं न्यायं दृष्ट्वा भगवत: शङ्करस्य गृहेऽपि अयं न्याय: प्रचलति इति तेषां सदस्यानां क: बलिष्ठ: कं निर्बलं खादिष्यति इति क्रमेण प्रतिपादित:। एतदर्थं कवि: चिन्तयति यत् यदि भगवतो गृहे ईदृशी दशा तर्हि लोकानां का कथा। उक्तमस्ति सुक्तिमञ्जरी ग्रन्थे —

**अत्तुवाञ्छति वाहनं गणपतेराखुं क्षुधार्त: फणी।**
**तं च क्रौञ्चपते: शिखि च गिरिजासिंहोऽपि नागाननम्।**
**गौरीजन्हुसुतामसूयति कलानाथो कपालानलो।**
**निर्विण्ण: स पपौ कुटुम्बकलहादीशोऽपि हलाहलम्॥**[१६]

एवमाशयं धारयन्त: अन्येऽपिश्लोका: सूक्तय: सन्ति तेषामभिप्रायोऽपि अनेन न्यायेन साम्यं विभर्ति।

*****

**डॉ. नरेशकुमारपाण्डेय:**
सहायकाचार्य:, व्याकरणविभाग:
केन्द्रीयसंस्कृतविश्वविद्यालय:
भोपालपरिसर:, भोपालम्।

१६. सूक्तिमञ्जरी चित्रप्रकरणम्।

# चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति

— डॉ. हरिशङ्करपाण्डेयः

अस्य जगतोऽभिन्ननिमित्तोपादानकारणभूतस्याभिधेयाभिधानात्मकप्रपञ्चोपादानशक्त्यवच्छिन्नस्य परमेश्वस्याविकम्पानुकम्पया मर्त्येनेह जनिर्लभ्यते। अत्र जीवनस्यास्य प्रधानमुद्देश्यं किमित्येष वै प्रमुखः प्रश्नः समुदेति। श्रीमद्भागवते भगवान् व्यासो निगदति —

**स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे।**
**अहैतुक्यप्रतिहता ययाऽऽत्मा संप्रसीदति॥**[१]

व्यासोक्तवाक्येन जानीमो यल्लोके जीवानां मुख्यं लक्ष्यं लक्ष्यते भगवद्भूतभावनपावनपादारविन्देषु अप्रतिहता रतिः। श्वेताश्वतरोपनिषदि —

**तमेव विदित्वातिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय,इति।**[२]

भारतीयचिन्तनपरम्परायां मानवजीवनस्य परमार्थलक्ष्यभूतं धर्मार्थकाममोक्षेति पुरुषार्थचतुष्टयं लक्ष्यीक्रियते। सर्वोऽपि लोको तदेवावासुमीहते। केन प्रकारेण तल्लाभ इति विवेचनायां विविधानि दर्शनानि नैकविधानि शास्त्राणि चकासति। श्रीमद्गीतायां निरस्तसमस्ततृष्णः श्रीकृष्णः प्रणिगदति —

**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।**[३]

अज्ञानध्वान्तहरणाय भवाब्धितरणाय विविधस्रोतांसि सन्ति। तेषु ज्ञाननामकं विशिष्टं प्रतिभाति। परमार्थसाधकं ज्ञानं किमिति जिज्ञासायामस्माभिः प्रोच्यते- व्याकरणम्। महाभाष्यस्य पस्पशाह्निके स्मृतिश्रुतिः —

१. श्रीमद्भागवते १/२/६।
२. श्वेताश्वतरोपनिषदि ३/८।
३. श्रीमद्भगवद्गीतायाम् - १८/४६।

**एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीति।**[४]

अनया श्रुत्या विजानीमो ह्येकोऽपि शब्दः कात्स्र्येनोररीक्रियते चेत्सर्वविधभद्रं दातुमीष्टे। अतश्शब्दब्रह्मसाक्षात्करणाय चेष्टे। वैयाकरणसिद्धान्तकौमुद्याः कारकप्रकरणे ''**क्लृपि सम्पद्यमाने च**''[५]। इतिवार्तिके भक्तिर्ज्ञानाय कल्पते, वाक्यस्यास्यार्थं कुर्वता तत्रभवता मनोरमा-कृताऽलेखि-**ज्ञानात्मना परिणमते इत्यर्थः**''[६]। यदाऽहमत्र विचारयामि तदा ज्ञानान्मुक्तेर-वाप्तिरिति वाक्यं मनसि नरीनर्त्ति। ईशावास्योपनिषदोऽयं मन्त्रः — ''**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते**''[७]।

अस्माभिः सर्वत्र वाक्यमेकं श्रुयते —

**विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः।**[८]

भगवद्गीतायामपि महता संरम्भेण भगवता जनार्दनेन प्रोच्यते —

''**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते**''।[९]

एतादृशेषु विविधेषु वाक्येषु ज्ञानमहिमानं श्रुत्वा तत्फलञ्च स्मृत्वा विज्ञानशरणं यामः। यत्र लोकस्य परलोकस्य नास्ति भ्रान्तिरपितु शाश्वती शान्तिः। विद्यावान्नेव जनो लोकेऽग्रगण्य-श्शरण्यो भवति। अस्मिन् प्रसंगे व्यासप्रणीतमेकं निरवद्यं हृद्यं पद्यं प्रपद्ये —

**श्रद्धावाल्लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति॥**[१०]

शास्त्रं रक्षणीयं भवति तदैव रक्षकमपि वर्तते। अत्र प्रसंगेऽहं सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयस्य ध्येयवाक्यं स्मरामि वाक्यमिदम् — **श्रुतं मे गोपाय,** अर्थात् श्रुतं-शास्त्रं

४. महाभाष्यस्य प्रथमाह्निके यस्तु प्रयुङ्क्ते, इत्यत्र कैयटः।
५. परिक्रयणे सम्प्रदानमन्यतरस्यामित्यत्र वार्तिकम्।
६. तत्रैव बालमनोरमायाम्।
७. ईशावास्योपनिषदि - १/१।
८. नीतिशतके २०।
९. श्रीमद्भगवद्गीतायाम् - ४/३८।
१०. तत्रैव ४/३९।

रक्षणाय भवति। अस्माकमपि रक्षायायपि शास्त्रमस्ति। महाभाष्यकारः पतञ्जलिः प्रणिगदति—
**नञ**[११], सूत्रस्य भाष्ये —

**विद्यातपश्चयोनिश्च त्रयं ब्राह्मणकारणम्।**
**विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः॥**

अस्य व्याख्यावसरे स्वनामधन्या मान्या वदान्या ब्रह्मण्याः स्वामिपादाः करपात्री, इत्युपाह्वेन प्रसिद्धाः स्वामिहरिहरानन्दसरस्वतीमहाभागा वीतरागा निगदन्ति - पुराणादिषु मुख्य-जाति-गौणभेदेन ब्राह्मणादिव्यवहारो भवति। यथा — सिंहात्सिंह्यां जातः शौर्यक्रौर्यादि गुणोपेतो मुख्यः सिंहः, सिंहोचितगुणरहितो जातिसिंहः, सिंहोचितगुणयुक्तो जातिहीनो देवदत्तादिर्गौणः सिंहो भवति। तथैव ब्राह्मणाद् ब्राह्मण्यां जातः शमादियुक्तो मुख्यो ब्राह्मणः, शमादिरहितः स एव जातिब्राह्मणः,जातिहीनो शमादिगुणयुक्तश्च गौणो ब्राह्मणो भवति। अनेन विद्याया माहात्म्यं कियदस्तीति दृग्गोचरी भवति।

भारतीयपरम्परायामाचार्योऽन्तेवासिनमनुशास्ति - सत्यं वद। धर्मं चर। स्वाध्यान्मा प्रमदः। सत्यान्न प्रमदितव्यम्, इत्यादिवाक्यैरुपदिष्टाश्छात्राः स्वधर्ममनुपालयन्ति। छात्रप्रकृति-विषये तत्रभवान् भगवान्नुक्तवान् द्वितीयाह्निके महाभाष्ये पतञ्जलिः — **समानमीहमानानां चाधीयानानां च केचिदर्थैयुच्यन्ते अपरे न।**[१२]

छात्राः स्वबुद्ध्यनुसारं विद्यां गृह्णन्ति, तेषु कोऽपि विशिष्टः श्रद्धावान् समाजे राष्ट्रे च प्रशस्यो भवति। परम्परया यः पठति तस्यैव विद्या सफला भवति। निरुक्तशास्त्रस्य महान्नाचार्यो यास्कः स्वकीये निरुक्ते — **पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति।**[१३]

न केवलं समाजे तस्य विद्यावतः प्रतिष्ठा भवति, परन्तु ज्ञानस्य महिमानमुदीरयता तत्र भवता भगवता श्रीकृष्णेन गीतायां प्रत्यपादि —

**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छतीति।**[१४]

११. पाणिनिसूत्रम् - २/२/६।
१२. द्वितीयाह्निके हयवरट्सूत्रभाष्ये।
१३. निरुक्ते - १/५ पादे।
१४. गीतायाम् - ४/३९।

अत्रैव ते न तिष्ठन्ति सप्तमाध्याये विदुषां कृते स्वकीयं हार्दं स्नेहं प्रकटयन्ति, चतुर्विधा जना मामीश्वरर्चन्ति परन्तु तेषु चतुर्विधेषु प्राणिषु मह्यं ज्ञानी रोचत इति वदन्ति। कारणं तस्य विमलात्मनो बुद्धिर्मयि सततं रमते, मामनिशं भजते, मामेव यजते। यथोक्तम् —

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥**[१५]

शिक्षकाणां पुरतः प्रश्नो भवति स्म कस्मै विद्या प्रदेया, कस्य हस्ते मम विशुद्धं ज्ञानं भ्राजिष्यते। परन्तु सम्प्रति सर्वकारीये विद्यालये येऽनिच्छया स्वेच्छया वाऽऽयान्ति पाठनीयास्ते। निरुक्तकार आचार्यो यास्क आह —

**उपसन्नाय तु निर्ब्रूयाद्यो वाऽलं विज्ञातुं, स्यान्मेधाविने तपस्विने वा॥**[१६]

यस्य छात्रस्य हृदि श्रद्धाभावः स न पाठनीयोऽन्यथा केवलं स गुरुं निन्दति, श्रमं न विन्दति। भगवती विद्या स्वयमेव आत्मरक्षणार्थं ब्राह्मणं प्रार्थयत इति ब्रुवता निरुक्तकारोनिगदति–

**विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।**
**असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्॥**[१७]

अशेषपुरुषार्थस्य प्रदात्री कामरूपिणी भूत्वा प्रह्वीभूता गोपाय मामाह ततस्तव निधिर्भ–विष्यामि, परन्तु यश्छात्रः परदोषदर्शकः परापवादशीलः क्रूरस्वभावयुक्तः, अप्रयत इत्यादि–लक्षणयुक्ताय मां न ब्रूयाः, एवं क्रियमाणे सति तव कृतेऽहं वीर्यवती स्यामिति। विद्यायाः संरक्षणस्य दायित्वं ब्राह्मणानामेव तत्र फलाकांक्षामन्तरेण। प्रमाणरूपेण भगवतः पतञ्जलेरभिधान–मक्षिलक्ष्यीक्रियते —

**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च,**[१८]

यद्यपि वेदार्थपरिज्ञाने षडङ्गान्यपेक्षितानि परन्तु तेषु व्याकरणं प्रामुख्यं भजते। पश्प–

१५. तत्रैव ७/१७।
१६. निरुक्ते द्वितीयाध्याये प्रथमपादे।
१७. निरुक्ते द्वितीयाध्याये प्रथमपादे।
१८. प्रथमाह्निके महाभाष्ये।

शाह्निके भाष्ये भगवान् पतञ्जलिः — संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते। उपनिषदि यथा आत्मनो ज्ञानाय मुक्तकण्ठेन प्रोक्तमस्ति —

**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयी।**[१९]

आत्मनः प्रकाशनानन्तरं सर्वं प्रकाशितं भविष्यतीति। तथैव शब्दज्ञानेन परमेश्वरस्य वाङ्मयस्वरूपपरिज्ञानेन सर्वविधहार्दकामनापूर्त्तिपूर्वकं शिवसायुज्यमपि प्राप्यत इति वैयाकरणानां राद्धान्तः। अत्र वाग्घरिर्भर्तृहरिर्महता कण्ठरवेणावादीदागमकाण्डे —

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥**[२०]

इह विचित्रचित्रचित्रिते परिवृत्तिशालिनि संसारे नैकविधचिन्तासन्तानवितानसन्दानित-मानवकुलसंकुले विद्यैव निखिलसिद्धिदा कल्याणकारिणी दुःखहारिणी भवप्रभवभीमभीति-निवारिणी प्रथिता प्रसृता। यथा कल्पलतया तया सर्वविधं दोहदं पूर्यते, कृत्स्नाभीलशैलभारप्रहारो दूरीक्रियते, त्रितापोत्पातप्रपातश्चूरीक्रियते तथैवेयं विद्या शेमुषीजुषां विदुषां सर्वेषां सजुषां विमले हृत्कमले राजते चेदुपर्युक्तगुणगणगौरवप्रदाऽतो मुदा तत्त्वविदाऽर्च्यते। उक्तमपि भोजप्रबन्धेऽस्मि-न्सम्बन्धे —

**लक्ष्मीं तनोति वितनोति च दिक्षुकीर्तिं,**
**किं किं न साधयति कल्पलतेव विद्या।**[२१]

विद्याशब्दो ज्ञानार्थकाद् विद् धातोः — **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः**[२२]**,** इत्यनेन सूत्रेण क्यपा सिध्यति। विद्या-वेदशास्त्रादिरित्यर्थः। मुण्डकोप-निषदि विद्याया द्विविधं स्वरूपं लभ्यते —

**परा चैवापरा च। तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो**

१९. बृहदारण्यकोपनिषदि - २/४/५।
२०. वाक्यपदीयस्थब्रह्मकाण्डे - १३१।
२१. भोजप्रबन्धे - ५
२२. पाणिनीयसूत्रम् - ३/३/९९।

**व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते।**[२३]

अपराविद्यया जागतिकं ज्ञानं जायते। पराविद्यया अक्षरब्रह्मविषयकं ज्ञानमुत्पद्यते। द्वेऽपि विद्ये ज्ञातव्ये वर्तेते। परन्तु कूलङ्कषाकमलकगोलतुल्यलोलजीवने न प्राणिना सर्वविधा विद्याऽधिगम्यते। अत एव प्रथमाह्निकमहाभाष्यस्थतत्त्वालोके लोक्यते —

**अनन्तशास्त्रं बहुला च विद्या अल्पश्च कालो बहुविघ्नता च।**
**यत्सारभूतं तदुपासनीयंहंसैर्यथा क्षीरमिवाम्बुमध्यात्॥**[२४]

अनेन बहूनां शास्त्राणामध्ययनमल्पीयसा वयसा न पार्यते कर्तुम्। तदा कथं शास्त्रसंरक्षणमिति मनसि निधाय स्वाशयं प्रदाय भगवता भाष्यकारेणाऽभाणि — पृषोदरादीनि यथोपदिष्टमित्यस्य सूत्रस्य भाष्ये —

**एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारगास्ते तत्र भवन्तः शिष्टाः।**[२५]

अतश्शिष्टप्रयुक्तानि वाक्यानि प्रमाणभूतानि सर्वैः कोविदैरुररीक्रियते। महावैयाकरणो नागेशभट्टः-शब्दश्चाप्तोपदेशरूपः प्रमाणमिति प्रणिगदति। सर्वे जानन्ति महतो ज्ञानराशेर्बोधोऽल्प-कालेन भवितुं नार्हति। एकैकस्य शब्दस्य पर्यायभूता नैकविधाःशब्दा विविधेषु कोषग्रन्थेषु समुपदिष्टास्सन्ति। तत्राप्येकस्याकारान्तशब्दस्य कार्त्स्न्येन व्याख्यानं प्रवचनं कोऽपि कर्तुन्न प्रभवति। सर्वमेतादृशं भगवान्भाष्यकार आह — अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रुयते — बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्त्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्चाऽध्येता दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम, किं पुनरद्यत्वे। यःसर्वथा चिरं जीवति वर्षशतं जीवति। **चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति-आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति।**[२६]

अत्र ज्ञायते विद्यायाः साकल्येनाधिगमश्चतुर्भिः प्रकारैः कथं भवति। सम्प्रति प्रथमप्रकार

२३. मुण्डकोपनिषदि - १.१.४-५।
२४. पश्पशाह्निकस्थतत्त्वालोकटीकायाम्।
२५. पृषोदरादीनि यथोपदिष्टस्थभाष्ये।
२६. प्रथमाह्निके भाष्ये पृष्ठसंख्या - ३४।

एव मर्त्यस्य निखिलमपि जीवनं याप्स्यति, ज्ञानन्न भविष्यति। प्राणी न केवलं ज्ञानावाप्तये यततेऽपित्वन्यान्यपि कार्याणि जीवननिर्वाहाय पुत्रपौत्रकलत्रादिभरण-पोषणाय सामाजिक-समुन्नतये राष्ट्राभिवृद्धये स्वात्यन्तसाध्यसिद्धये परलोकालोकावलोकनाय स्वात्मसाक्षात्काराय विधीयन्तेऽन्यथा दिव्यं भव्यं नव्यं सभ्यं जीवनं व्यर्थी भविष्यति। केनोपनिषदाऽवादि —

**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।**
**भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्मागोकामृता भवन्ति॥**[२७]

तत्रापि विद्याध्ययनाध्यापनाय नियमा भवन्ति, कदा विद्या सेव्या कृपया देव्याः। अनध्यायस्य विषये व्याकरणमहाभाष्ये लभ्यते। न भुक्तं, न नक्तं प्रब्रूयाद्ब्रह्मराशिरिति। बाल्मीकि-रामायणस्य सुन्दरकाण्डे तत्रभवान् भगवान् हनुमान् उक्तवान् दुष्टरावणकर्मनर्मभीतां सीतां वीक्ष्य, अधर्मत्वञ्च समीक्ष्य-प्रतिपत्पाठशीलस्य विद्येव तनुतां गता। बौधायनधर्मसूत्रे समुपलभ्यते प्रतिमासं चत्वारिदिनानि नियमितानध्यायस्यासन्निति — प्रतिपदा, अष्टमी, चतुर्दशी, अमावस्या च। तदित्थमुक्तमस्ति —

**हन्त्यष्टमी ह्युपाध्यायं हन्ति शिष्यं चतुर्दशी ।**
**हन्ति पञ्चदशी विद्यां तस्मात्पर्वणि वर्जयेत्॥**[२७]

न केवलमिदमेवानध्ययनवेला ह्यन्याऽपि तत्र प्राप्यते यथा — बाह्याक्रमणकाले, कस्यचिदाकस्मिके दिवंगते सति, अकालमेघागमे, विद्युद्भूकम्पझंझावातोत्पातादीनां समागते, फेरुवृकोलूकगर्दभकुक्कुरादीनां रवे सति पुरा पाठशालायामनध्यायो भवति स्म। परन्त्ववकाशकाले वेदानामध्ययनं विहायाऽन्यासां विद्यानामध्ययने निषेधो नासीत्। अतः कूर्मपुराणे श्लोको मिलति विषेधोऽयमङ्गानामध्ययनकाले न प्रवर्तते। उक्तञ्च —

**नानध्यायोऽस्ति चाङ्गेषु नेतिहासपुराणयोः।**
**धर्मशास्त्रेष्वन्ये पर्वण्येतानिवर्जयेत्॥**

परन्तु सम्प्रति व्याकरणाध्ययनावसरेऽपि नियमोऽयं प्रवर्तते कारणं किमिति चेद्भाष्यकारो भगवान् ब्रवीति — **सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकव-**

२७. केनोपनिषदि - २-५।

**त्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः। सर्ववेदफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते।**[२९]

अनेन भगवद्व्याख्यानेन व्याकरणस्यापि वेदवत्ब्रह्मराशिरिति संज्ञाऽस्ति। अत एतेऽनध्यायनियमा मन्यन्ते वैयाकरणैर्बुधैः। अपरश्च विद्यार्थिनां कृतेऽयमप्युपदेशोऽस्ति यत्कोऽपि मन्त्रः स्वरहीनस्तथाविधं फलं न प्रयच्छति यद्यथेष्टं वर्तते, प्रत्युत वाग्वज्रो भूत्वा यजमानं निहन्ति। एतदेव भाष्यकारो भाषते भाष्ये —

**दुष्टःशब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुःस्वरतोऽपराधात्॥**[३०]

पाणिनिशिक्षायामपि सर्वविधविद्यापारावाराग्रणीर्गुणी महर्षिपाणिनिः प्राह —

**अक्षता शस्त्ररूपेण वज्रं पतति मस्तके।**[३१]

अर्थात् स्वरमात्रादिहीनो मन्त्रो निशितशम्बो भूत्वा यजमानोत्तमाङ्गे स्रंसते। परन्तु व्याकरणशास्त्रोक्तप्रकृतिप्रत्ययविभागज्ञानपूर्वकं तदर्थमधिगम्य च समुच्चारितो मन्त्रो भृशं फलं यजमानाय यच्छति। स च वावदूको जागरूको यायजूकःसुखेनाऽभ्युदयं लभते। अतो ब्रह्मकाण्डे हरिराह —

**तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।**
**तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते॥**[३२]

यया विद्यया सर्वविधलौकिकालौकिकसुखावाप्तिर्मोक्षप्राप्तिः कायिकवाचिकमानसिक-पापसमतापसमाप्तिः — विद्ययाऽमृतमश्नुते, विद्यया विन्दतेऽमृतम्, इत्यादिश्रुतिप्रमाणेन वेदविद्भिः सद्भिर्महद्भिरङ्गीक्रियते सा सर्वमूला व्यपगतशूला सर्वादानुकूला विद्या कया विधया सुधिया साध्यत इति विचारणायां प्रसन्नवदनो जनार्दनो निगदति श्रीमद्गीतायाम् —

२८. बोधायनधर्मसूत्रे - १/१/४३।
२९. महाभाष्यस्थद्वितीयाह्निकसमाप्त्यवसरे।
३०. महाभाष्ये प्रथमाह्निके।
३१. पाणिनिशिक्षायाम् - ५३।
३२. वाक्यपदीये ब्रह्मकाण्डे - १३३।

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥**[33]

अनेन ज्ञायते यत्सेवया तत्त्वज्ञानं प्राप्यते। अतः प्रथितमस्ति-गुरुशुश्रुषया विद्या। भारतीयज्ञानग्रहणपरिपाटी रटति-समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपगच्छेदिति। तादृशगुण-गणयुक्त आचार्यः स्वशिष्येषु मातृवत् पितृवच्च स्निह्यति व्यवहरति। अतोऽथर्ववेदो वदति —

**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते।**[34]

आचार्यशब्दनिरुक्तिं वक्ति निरुक्तकारः — आचार्यःकस्मात्- आचार्य आचारं ग्राहयति। आचिनोत्यर्थान्।

**आचिनोति बुद्धिमिति वा।**[35]

सिद्धान्तकौमुद्याः-आचार्यादणत्वं च, इति वार्तिकव्याख्यावसरे बालमनोरमायाम् —

**उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।**
**सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥**[36]

आचार्यः स्वशिष्यं पुत्रवत्पाठयति भेदं न विदधाति। अतो व्याकरणस्य पुत्रीयति, प्रयोगोऽत्र सफलीभवति। शास्त्रेषु समागच्छति यच्छिष्यो गुरोर्विद्यायाश्चतुर्थांशं गृह्णाति, अन्यच्च गच्छता कालेन समायाति। एतदेव मनुनाऽपि समर्थ्यते —

**आचार्यात्पादमादत्ते पादं शिष्यःस्वमेधया।**
**पादं सब्रह्मचारिभ्यः पादं कालक्रमेण च॥**

यथा परब्रह्मस्वरूपविषये कोऽपि — इदमित्थम्, वक्तुं न प्रभवति। तत्र हृषिकाणि कार्यं न विदधति — **यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, इत्यादिविविधश्रुतिवाक्यैः**

३३. श्रीमद्गीतायाम् - ४/३४।
३४. अथर्ववेदे - ११/५/१७।
३५. निरुक्ते - १.५.४।
३६. स्त्रीप्रत्यये बालमनोरमायां पृष्ठसंख्या - ६५६।

**समर्थ्यते। पतञ्जलिरपि भगवान् शिक्षयति - य एष दुर्गो मार्गः, एकगम्यो वाग्विषयः।**[३७]

एकैकस्य शास्त्रस्य साकल्येन ज्ञानमल्पीयसा जीवनेन भवितुं नार्हति। उदाहरणस्वरूपेण व्याकरणशास्त्रस्येतिहासे महत्स्वरूपं शब्दशास्त्रस्य। अत्रैकः प्रसिद्धः श्लोकोऽक्षिलक्ष्यीक्रियते–

**समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।**
**तद्भागभागाच्च धृतं पुरन्दरे कुशाग्रविन्दूत्पतितं हि पाणिनौ॥**

विशालं व्याकरणं केनाऽपि नैकेन जन्मनाऽवगन्तुं पार्यते। इन्द्रसदृशो देवराजो विशेषा-ऽध्ययनकालालङ्कृतोऽपि शब्दशास्त्रं साकल्येन नाध्यैत। कागतिरस्मादृशजलबुद्बुदवज्जीवनधारिणां प्राणिनाम्। तदा सा विद्या या विमुक्तये, कथं सेवनीया। अत्रोच्यते यथा —महद्व्याकरणज्ञाना-वाप्त्युपायविषये भगवान् गोनर्दीय आह — कथं तर्हि शब्दाः प्रतिपत्तव्याः। किंचित्सामान्य-विशेषवगक्षणं प्रवर्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान्प्रतिपद्येरन्। किं पुनस्तत्। उपसर्गापवादौ। कश्चिदुत्सर्गः कर्तव्यः, कश्चिदपवादः। कथं जातीयकः पुनरुत्सर्गः कर्तव्यः, कथं जातीयकोऽपवादः। सामान्येनोत्सर्गः कर्तव्यः। तद्यथा — **कर्मण्यण्।**[३८]

तस्य विशेषणापवादः। यथा — **आतोऽनुपसर्गे कः।**[३९]

अनेन प्रकारेण भाष्यकारेणाऽभाषि यद्रत्नाकरसदृशं व्याकरणं ज्ञातुं शक्यते। एवमेवपञ्च-तन्त्रस्य रचयिता ज्ञातमर्मा विष्णुशर्मा राजपुत्रान् लोककथासाहाय्येन पाठयति बोधयति च गभीरं ज्ञानं नीतिशास्त्रस्य धर्मशास्त्रस्य। एतादृशी शैली पठनपाठनस्याङ्गीकृता दृश्यते। व्याकरणन्तु अस्याः शैल्याः प्रवर्तकमिव वर्तते। प्रथमाह्निके समागच्छति —

**द्विगता अपि हेतवो भवति। यथा आम्राश्च सिक्ताःपितरश्च प्रीणिताः।**[४०]

उदाहरणमत्राऽस्ति श्वेतो धावति, धवलगुणान्वितो याति यद्वा श्वा - कुक्कुर इतो धावति। व्याकरणे बहुविधा न्याया उपलभ्यन्ते , तैः सारल्येन शास्त्रस्य बोधो भवति। अतः पतञ्जलिः—

३७. पश्पशाह्निके भाष्ये पृष्ठसंख्या - ३८।
३८. पाणिनिसूत्रम् - ३/२/१।
३९. पाणिनिसूत्रम् - ३/२/३।
४०. पश्पशाह्निके भाष्ये पृष्ठसंख्या - ६९।

**लघ्वर्थं चाध्येयं व्याकरणम्,**[४१]

इति समुद्घोषयति। अत्रकेषाञ्चन न्यायानान्नामानि लिख्यन्ते। तद्यथा ब्राह्मणवसिष्ठन्यायः, गोबलीवर्दन्यायः, मगग्रामन्यायः, सकृद्गतिन्यायः, देवदत्तहन्तृहतन्यायः, इत्यादयो न्याया नक्षत्रवद्राजन्ते। एतादृशन्यायदृष्टान्तमाध्यमे-नाध्ययनाध्यापनपरिपाटिरविच्छिन्ना विद्यते विद्योतते च शास्त्रेषु। निखिलन्यायचर्चा न लघीयसि निबन्धेऽपितु महीयसि प्रबन्धे कदाचिद्भवितुमर्हति। अत्र द्वित्रा लोचनगोचरीक्रियन्ते।

**१-गोबलीवर्दन्यायः —** अस्य चर्चा प्रौढमनोरमाया उपदेशपदार्थनिरूपणे दीक्षितमहोदयेन कृताऽस्ति। प्राचीनवैयाकरणोक्तकारिकायाम् —

**धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्, इत्यत्र दीक्षितः उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे दृथगुपादानं गोबलीवर्दन्यायेन।**[४२]

**२-देवदत्तहन्तृहतन्यायः —** अस्योगेखो मनोरथः, इति प्रयोगसिद्ध्यर्थं कार्यासिद्धत्वपक्षे शब्दरत्ने - देवदत्तहन्तृहतन्यायेन स्थानिभूतरोरभावात् हशि च,[४३] इत्यस्याप्राप्तिरिति भावः। अनया विधया शास्त्राधिगमः सारल्येन भवति। निष्कर्षरूपेण वक्तुं शक्यते समुपस्थितविकरालकालव्यालेऽल्पकाले समस्तशास्त्रबोधः सूत्रात्मकविधिना भवितुमर्हति। विद्यावेद्याऽतोऽनुसरणीया भाष्यप्रोक्ता पद्या, कृपया देवनद्याः।

**हृद्या पद्याऽनुगन्तव्या विद्या वेद्या विधानतः।**
**वाणी भवति शुद्धाऽद्धा विश्वनाथप्रसादतः॥**[४४]

**गते ज्ञानान्नमुक्तिर्वै शास्त्राण्याक्षतेऽनिशम्।**
**अतश्शिवाय विद्याम्मानवोऽधीतामहर्निशम्॥**[४५]

---

४१. तत्रैव - पृष्ठसंख्या - ६।
४२. प्रौढमनोरमायाम्-उपदेशपदार्थनिरूपणावसरे।
४३. पाणिनिसूत्रम् - ६-१-११४।
४४. मम।
४५. मम।

 ISSN - 2231-2129

**पूर्तिमेति निबन्धोऽयं विद्याऽऽयाति चतुर्विधैः।**
**प्रीत्यायस्ति गिरीशस्य क्षन्तव्योऽहमतो बुधैः॥**[४६]

**विद्यां ददातु विश्वेशोऽविद्यां हरतु वै हरः।**
**तावकस्सर्वकालेषु पाण्डेयो हरिशङ्करः॥**[४७]

इति शम्।

*****

**डॉ. हरिशङ्करपाण्डेयः**
सहायकाचार्यः (सं.) व्याकरणविभागे,
केन्द्रीयसंस्कृतविश्वविद्यालये,
श्रीरणबीरपरिसरः, जम्मू।

४६. मम।
४७. मम।

# अट्कुप्वाङ्नुम्व्यवायेऽपीति-सूत्रविमर्शः

— **विजयकुमारपयासी**

अट्कुप्वाङ्नुम्व्यवायेऽपी[1] तिसूत्रमाश्रित्य निबन्धेऽस्मिन् सूत्रघटकीभूतस्य व्यवायेति पदस्य वृत्तावागतस्य समानपदस्थस्य चेति सर्वं प्रतिपादयतुं सूत्रमिदं निबन्धाय चितं मया। द्विपदात्मकमिदं सूत्रं अट्कुप्वाङ्नुम्व्यवाये इति सप्तम्यन्तं अपि चेति प्रथमान्तं पदं वर्तते। अत्र सूत्रे रषाभ्यां नो णःसमानपदे [2]इति समग्रसूत्रस्यानुवृत्तिः क्रियते। रषाभ्यां नो णःसमानपदे इति सूत्रदेशे सूत्रस्यास्य पृथगार्थः। किन्तु अस्मिन् सूत्रे कश्चन् विलक्षणसूत्रार्थः। यतोहि रषाभ्या-मित्यत्र पञ्चमी तयाश्च दिग्योगलक्षणायाः पञ्म्याः[3] सत्त्वात् दिग्योगलक्षणपञ्चमीपदघटिते शास्त्रे निर्दिष्टादुत्तरस्येति पदद्वयमुपतिष्ठते[4] इत्यर्थिकया तस्मादित्युत्तरस्येत्यनया परिभाषया निर्दिष्टादुत्तर-स्येतिपदस्योपस्थित्या रेफषकारान्यतराव्यवहितोत्तरत्वविशिष्टस्य समानपदस्थस्य नस्य णत्वं भवतीति सूत्रार्थः। यथा चतुर्णामित्यत्र चतुर्+नाम् इत्यवस्थायां चतुर् शब्दावयवः तदव्यवहितोत्तरत्वविशिष्टनकारः नामघटकनकारः सश्च समानपदस्थः अतः तस्य नकारस्य णत्वं भवति। एवमेव यूष्णः इत्यत्र **अल्लोपोनः**[5] इत्यनेन लोपानन्तरं यूष् + अस् इत्यवस्थायां यूष् शब्दावयवस्यनकारस्य णत्वं भवति। इदानीं पश्यन्तु अत्र रषाभ्यामित्यत्र पञ्चमी तां पञ्चमीं दृष्ट्वा तस्मादित्युत्तरस्य[6] इत्यनया परिभाषया यदि अव्यवहितार्थस्यनिर्दिष्टपदस्योपस्थितिः स्यात् तदा अट्कुप्वाङ्नुम्व्यवायेऽप्यत्यंशेन प्रधानांशेन् अव्यधानांशस्य बाधः स्यात्। यतः **यदंशः सिद्धः बाधितो वा तदंशं परित्यज्य विकला परिभाषोपतिष्ठते**[7] अतः

१. पा.सू. ८.४.२।
२. पा.सू. ८.४.१।
३. सि.कौ.बा.म.।
४. सि.कौ.बा.म. टीकायां पृ.सं. ३२५।
५. पा.सू. ४.४.१३४।
६. सि.कौ.बा.म. टीकायां पृ.सं. ३२५।
७. लघुशब्देन्दुशेखर नित्यानन्दपर्वतीय कृत दीपकटीकायां पृ.सं. १९० तस्मात् इति परिभाषे हि योंऽशे बाधितः सिद्धो वा तमंशं परितयजय अन्याशं विशष्टे उपतिष्ठते।

अट्कुप्वाङ्नुम्व्यवाये इत्यत्र व्यवायांशेन अव्यवहित्तोरस्य बाधात् अव्यवहिताशं परित्यज्य केवलमुत्तरांशस्य तस्मादित्युत्तरस्य इत्यनया परिभाषया अत्रोपस्थितिः। तस्मात् सूत्रार्थः रेफषकारान्यतरोत्तरत्वविशिष्टस्याडादिकर्तृकव्यवधानविशिष्टस्य समानपदस्थस्य नस्य णत्वमिति कर्तुं शक्यते। किन्तु सूत्रवृत्तावागतस्य समानपदस्थस्येति घटकी भूतस्यसमानपदस्य विचारः करणीय एव। अतः बालमनोरमाटीकायामाचार्यैः वासुदेवदीक्षितैः समानपदस्य एकपदम्[८] इत्यर्थः स्वीकृतः समानशब्दः एकपर्यायः[९] इत्यर्थकत्वात्। एवञ्च रेफषकारान्यतरोत्तरत्वविशिष्टस्य अडादिकर्तृकव्यवधानविशिष्टस्य एकपदस्थस्य नस्य णत्वमित्यर्थः निस्सरति। एवमर्थः स्वीक्रियमणे सति यद्यपि मातुर्नमनमित्यदौ एकपदस्थत्वाभावात् णत्ववाभावे दोषाऽभावः। तथापि रामनाम इत्यत्र णत्वापत्तिः भविष्यत्येव यतोहि राम+नाम इत्यादौ समासोत्तरविभक्त्यो-पत्तावेकपदस्थत्वमेव अतः एकपदस्थस्य रामनाम घटकस्य नकारस्य णत्वं भविष्यति। तद्वारणाय समानपदस्थस्य पारिभाषिकोऽर्थः स्वीक्रियते, अत अत्रोच्यते णत्वस्य निमित्तौ रेफषकारौ भवतः तत्र नकारः निमित्ती, निमित्तिता च स्वनिष्ठविधेयतानिरूपितोद्देयताश्रयत्व-सम्बधेन नकारे अर्थात् नकारनिष्ठा निमित्तिता स्वनिष्ठविधेयतानिरूपितोद्देयताश्रयत्वसम्बधेन। एवञ्च यस्मिन् पदे यत्र कुत्रापि रेफषकारौ स्तः निमित्ति च नकारः तत्र रेफषकारान्यतरोत्तरत्व-विशिष्टस्य नस्य स्थाने णत्वं भविष्यति। यतोहि रेफषकारौ निमित्ते निमित्तिता नकारस्य च पदावयवत्वं कदापि न व्यभिचरति। सर्वदा रेफपदावयवत्वमेव भवति, अतः पदग्रहणसामर्थ्यादेव एकपदस्य लाभः भविष्यत्येव पुनः किमर्थं एकपदत्वस्य ग्रहणम्। यतोहि पद इत्यत्र एकवचनं तस्मादेकवचनत्वात् एकत्वस्य लाभः समानेति[१०] पदं व्यर्थम्। व्यर्थं सत् ज्ञापयति यत् समानपदमत्र अखण्डत्वपरं समानमेव पदमिति रीत्या। अत एव बालमनोरमाटीकायामाचार्यैः एकपदत्वञ्च चेहाखण्डत्वं विवक्षितमिति प्रोक्तं[११]। अधुनाऽखण्डपदस्थत्वंकिमिति जिज्ञाषायामाह — यतोहि यथा रामनामेत्यत्र अखण्डपदत्वाभावात् णत्वं न भवति तथैव रामनरेनेत्यत्र णत्वात् पूर्वं विभक्तिस्थस्य नकारस्य णत्वं भवति किन्तु प्रातिपदिकावयवस्य नस्य णत्वं न दृश्यते। तस्मादखण्डपदस्थत्वं नाम किमिति विचारणीय एव, अत्रोज्यते बालमनोरमायाम् अखण्डपदत्वं

८. सि.कौ.त.बो. टीकायां पृ.सं. २३५।

९. सि.कौ.बा.म. टीकायां पृ.सं. २३५।

१०. एकतवं चेहाखण्डत्वं विवक्षितं पदे इत्येतावतैव सिद्धे समानग्रहणसामर्थ्यात्।

११. सि.कौ.बा.म. टीकायां पृ.सं. २३५।

नाम निमित्तवत्पदभिन्नपदस्थत्वाभावदिति अर्थात् अखण्डपदत्वं नाम निमित्तिवत्पदभिन्नपदस्थ-त्वाभाववत्वं[१२] यथा रामनामेत्यत्र निमित्तिवत् पदं रामेति पदं तद्भिन्नमिति पदं नामेति पदं तादृशनिमित्तवत्पदभिन्नत्वं नामघटके नकारे निमित्तवत्पदभिन्न पदस्थत्वमेव वर्तते तदाभावं नास्ति। तथैव गन्धर्वगानमित्यादावपि[१३] न भवति। अर्थात् गन्धर्वगानं रामनामेत्यत्र च पदस्थात्वाभावः नास्ति तस्मादखण्डपदस्थत्वाभावात् नात्र णत्वम्। किन्तु रामेणेत्यत्र राम+टा इत्यवस्थायां इनादेशे गुणादेशे कृतेच सति रामेन इत्यत्र अखण्डपदस्थत्वमस्त्येव। यतोहि निमित्तिवत् पदं हरीति पदं निमित्तिवत्पदभिन्नमिति पदं रामेति पदं तादृशपदत्वं अत्रागच्छति अतः णत्वं भविष्यति। तथैव हरिणेत्यादावपि बोधव्यम्। इदानीं एतादृशार्थः स्वीक्रियमाणे मातृभोगां इत्यादौ णत्वं न स्यात्, यतोहि मातृभोगिन् इत्यत्र निमित्तवत्पदं मातृ इति पदं तद्भिन्नं पदं भोगिनिति पदं तादृशपदत्वमेवात्र नकारे पदस्थत्वाभावः नास्ति, अतः मातृभोगिनित्यत्र णत्वापत्तिरस्ति। अतः तद्वारणाय समानपदस्थस्य परिष्कारः, निनित्तवत्पदभिन्नपदस्थत्वाभाववत्वं स्वीक्रियतां कृते सति मातृभोगिन इत्यत्र प्रकृतिप्रत्ययविशिष्टस्य प्रत्ययमात्रस्य वा पदत्वं नास्ति वस्तुतः लक्षणघटकः पदशब्द **एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया-लोकेऽर्थविषयकबोधजनकत्वपरं**[१४] वर्तते। अर्थात् शक्तं पदम् अत्र पदशब्देन गृह्यते, एवं सति पदैकदेशस्यपदत्वम् अर्थात् प्रत्ययमात्रस्य पदत्वं नास्ति अप्रत्ययपर्युदासत्वात्[१५]। तस्मात् मातृभोगिन इत्यत्र दोषवारणेऽपि रामनरेणेत्यत्र णत्वनापत्तिरूपो दोष अस्त्येव, तद्वारणाय पुनः परिष्कारः करणीयः। अतः अखण्डपदत्वं नाम निमित्तविशिष्टत्वं वैशिष्ट्यञ्च स्वोत्तरत्व स्वाघटित-पदाघटकत्वमेतदुभयसम्बन्धेन गृह्यते। एवं गृह्यमाणे सति रामेन इत्यत्र स्वं रामघटकः रेफः तदोत्तरत्वं विभक्तिस्थनकारे, अतः स्वोत्तरत्वमत्रम् गतं स्वं रेफः तदाघटितं पदं घटादि तदाघटकत्वं नकारे आगतम् अतः द्वितीयसम्बन्धोऽपि संघटते। एवं सति रामेण इत्यदौ नास्ति दोषः। एवं रीत्या रामनरेण इत्यत्रापि नास्ति दोषः।

अस्तु तर्हि अट्कुप्वाङ्नुम्व्यवायेऽपीत्यस्य सूत्रस्यार्थः रेफषकारान्यतरोत्तरत्वविशिष्ट-

१२. सि.कौ.बा.म. टीकायां पृ.सं. २३६।
१३. सि.कौ.त.बो. टीकायां पृ.सं. २३६ तेन रामनाम गन्धर्वगानमित्यादौ न भवति।
१४. ल.श.शे. पृ.सं. १६०।
१५. ल.श.शे. पृ.सं. १६०।

स्याडादिकर्तृकव्यवधानविशिष्टस्याखण्डपदस्थस्य नस्य णत्वमिति[१६]। किन्त्वयं सूत्रार्थः यदि स्वीक्रियते तदा आदर्शेनेत्यत्र णत्वापत्तिः भविष्यति। यतोहि आदर्शेन इत्यत्र रेफषकारान्यतरत्व-विशिष्टः नकारः अडादिकर्तृकव्यवधानविशिष्टमपि वर्तते किन्तु अडादिकर्तृकव्यवधानातिरिक्तः शकारस्यापि व्यवधानत्वात् अखण्डपदस्थत्वेऽपि नकास्य णत्वं न भवितु शक्नोति[१७]। अतः एतद्दोषवारणाय दीक्षितैः सूत्रस्यास्य योगविभागः क्रियते, अट्कुप्वाङ्नुम् इत्येको योगः, व्यवायेऽपीति द्वितीयो योगः। अट्कुप्वाङ्नुम् इत्यत्र छान्दसत्वात् भिस् विभक्तेः लोपः भवति। अत्र योगविभागात् आदर्शेन इत्यत्र व्यवायेऽपीत्यंशेनैव रेफषकारान्यतरोत्तरत्वविशिष्टस्य नकारस्य यस्य कस्य व्यवायस्यापि सत्वात् नकारस्य णत्वं भवति, किन्तु अट्कुप्वाङ्नुम् इत्यंशः नियमार्थः तथा च सूत्रार्थः अट्कुप्वाङ्नुम्भिरेव व्यवधाने णत्वं तदतिरिक्तस्य व्यावाये णत्वं न भवतीति। तस्मादत्र शकारस्यापि व्यवधानत्वात् न णत्वमिति तेषामभिप्रायः। दीक्षितोक्तं यत् समाधानं तन्नागेशेन न स्वीक्रियते, अट्कुप्वाङ्नुमित्यंशः नियमार्थः पूर्वं स्वीकृतः, यतोहि नियमशास्त्राणां द्विधा प्रवृतिः भवति विधिमुखेन निषेध मुखेन च[१८]। एवं नियम्यशास्त्राणां-विधिमुखेन प्रवृत्तौ नियम्यशास्त्रीयोद्देशतावच्छेदकं व्याप्यं नियामकशास्त्रीयोद्देशतावच्छेदकं व्यापकञ्च यद्रुपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे संकोचं कृत्वा नियामकशास्त्रेण विधि मुखेन कार्यं क्रियते इत्येको पक्षः[१९] वर्तते। अत्र निषेधमुखेन प्रवृत्तिपक्षे, नियामकशास्त्रीयो-द्देश्यताप्रयोजकपदस्य स्वार्थभिन्नं यन्नियम्यशास्त्रीयोद्देश्यतावच्छेदकं व्याप्यं नियामकशास्त्रीयो-द्देश्यतावच्छेदकव्यापकं यत् तद्रूपावच्छिन्ने तत्र लक्षणां कृत्वा नञ पदाध्याहारेण प्राप्त कार्यस्य निषेधः भवति[२०], तथा चात्र विधिमुखेन प्रवृत्तिपक्षे नियम्यशास्त्रं व्यवायेऽपीति शास्त्रं तदीयनियम्यशास्त्रीयोद्दोशतावच्छेदकं रेफषकारान्यतरोत्तरत्वविशिष्टं यत् किञ्चित् वर्णकर्तृकव्य-वधानविशिष्टस्य समानपदस्थस्य नस्य णत्वमिति पर्यवस्यति। अत एव आदर्शेन इत्यत्र शकारस्य

१६. सि.कौ.बा.म. टीकायां पृ.सं. २३५।

१७. प्रौढ मनोरमा, पृ.सं. १६० नन्वेयं आदर्शेन इत्यादौ अतिप्रसङ्गः न च अडादिभिरेव व्यवधाने इति नियमः, अप्राप्ते विधिरयमित्युक्त्वात्।

१८. सत्यम् योगविभागोऽत्र बोध्यः — व्यवायेऽपि इत्येको योगः विध्यर्थः अट्कुप्वाङ्नुम् इत्यन्यो नियमार्थः छान्दसो भिसो लुक्।

१९. ल.श.शे. वरवर्णिनि टीकायां पृ.सं. ९८।

२०. ल.श.शे. वरवर्णिनि टीकायां पृ.सं. ९८।

व्यवधानेऽपि णत्वं प्राप्नोति। एवञ्च नियामकशास्त्रमत्र अट्कुप्वाङ्नुमिति तदीयोद्देशतावच्छेदकं रेफषकारान्यतरोत्तरत्वविशिष्टाडादिकर्तृकव्यवधानविशिष्टस्य समानपदस्थस्य नस्य णत्वमिति[२१]। एवञ्च नियम्यशास्त्रीयोद्देश्यतावच्छेदकं व्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं रूपं भवति, रेफषकारान्यतरोत्वतरत्वविशिष्ट आक्षरसमाम्नायिकवर्णकर्तृकव्यवधानविशिष्टस्य समान-पदस्थस्य नस्य णत्वमिति। एवञ्च तदरूपावचछिन्ने संकोचं कृत्वा अर्थात् रेफषकारान्यतरोत्व-विशिष्ट आक्षरसमाम्नायिकवर्णकर्तृकव्यवधानविशिष्टस्य समानपदस्थस्य नत्वावच्छिन्नातिरिक्तेन व्यवायेऽपि इति नियम्यशास्त्रीयोद्देश्यतावच्छदेकावच्छिन्ने संकोचं कृत्वा नियामकशास्त्राणां प्रवृत्तिः भवति। तथा च व्यवायेऽपि इत्यस्यार्थः भवति रेफषकारान्यतरोत्तरत्वविशिष्टाक्षरसमाम्ना-यिकवर्णकर्तृकव्यवधानविशिष्टस्य समानपदस्थस्य शकारातिरिक्तस्य रेफषकारान्यतरोत्तरत्व-विशिष्टं यत्किञ्चित् व्यवधानविशिष्टसमानपदस्थस्य नस्य णत्वम्। तथा च मातृणामित्यत्र आक्षर-समाम्नायिकवर्णकर्तृकव्यवधानाभावात् नात्र णत्वम्। अयमर्थः स्वीक्रियमाणे आदर्शेन इत्यत्र व्यवायेऽपि इत्यंशेनैव णत्वप्राप्तिः। तस्मात् अट्कुप्वाङ्नुम् इत्यनेनैव णत्वं भवत्येव, अर्थात् विधिमुखेन प्रवृत्तिपक्षे णत्ववारणं कर्तुं न शक्यते। अत एव तद्वारणाय निषेधमुखेन प्रवृत्तिः क्रियते, अत्र नियामकशास्त्रं अट्कुप्वाङ्नुम् इति शास्त्रं तद्दीयोद्देश्यताप्रयोजकं पदं अट्कुप्वाङ्नुम् इति पदं तस्य स्वार्थभिन्नं नियम्यशास्त्रीयोद्देश्यतावच्छेदकं व्याप्यं नियामकशास्त्रीयोद्देश्यता-वच्छेदकं व्यापकरूपावच्छिन्ने अर्थात् रेफषकारान्यतरोत्तरत्वविशिष्टाक्षरसमाम्नायिकवर्णविशिष्ट-समान-पदस्थ नकारे लक्षणां कृत्वा नञ अध्याहृत्य प्राप्त कार्यस्य निषेधः। तदा अट्कुप्वाङ्नुम् इत्यनेन आदर्शेन इत्यत्र निषेधेपि व्यवायेपि इत्यनेन णत्वं भविष्यत्येव। तस्मादस्य सूत्रस्य योगविभागः आदर्शेन इत्यत्र णत्ववारणाय यत् दीक्षितेन कृतं तन्न समीचीनमावहतीति नव्यानाम-भिमतम्। अत एव शेखरकारेण भट्टनागेशेन एतद्दोषवारणाय शेखरे प्रतिपाद्यते यत् तु-शरव्यवायेण इति न्यासेनैव सर्वत्र णत्ववारणं कर्तुं शक्यते, अट्कुप्वाङ्नुम् इति सूत्रारभ्यसामर्थात्। अर्थात् यत्र एतेषामेव व्यवधानं तत्रैव नस्य णत्वं नान्यत्र तेन आदर्शेन इत्यत्र एतदतिरिक्तस्य व्यवधानात् अत्र आदर्शेन घटकनकारस्य न णत्वम्। भाष्यकारेणापि **एतैरेवाक्षरसमाम्नायिकै-र्व्यवाये नान्यैरिति**[२२] अतः एतेषां मतेऽपि आदर्शेन इत्यादौ च नकारस्य णत्वं न भवतीति।

२१. ल.श.शे. वरवर्णिनि टीकायां पृ.सं. ९८।
२२. महाभाष्य पृ.सं. २१०।

शम्

**सन्दर्भग्रन्थसूची —**


१. वैयाकरणसिद्धान्तकौमुदी (मोतीलालबनारसीदासप्रकाशनम्) वाराणसी प्रथम-संस्करणम्।

२. लघुशब्देन्दुशेखरः नित्यानन्दपर्वतीय कृत दीपकटीका सहिता चौखम्भाप्रकाशनम् वाराणसी।

३. लघुशब्देन्दुशेखरः षट्टीका चौखम्भासुरभारतीप्रकाशनम् वाराणसी।

४. प्रौढमनोरमा चौखम्भाप्रकाशनम् वाराणसी।

५. व्याकरणमहाभाष्यम् भाष्यप्रदीपोद्द्योतमुगसितम् चौखम्भासंस्कृतप्रतिष्ठानम् देलही।


*****


**विजयकुमारपयासी**

अतिथि-प्राध्यापकः

केन्द्रीयसंस्कृतविश्वविद्यालयः

एकलव्यपरिसरः, अगरतला

# धात्वर्थविषये कौण्डभट्टदृष्टिः

**— डॉ. अम्बरीशकुमारमिश्रः**

जगदिदं व्यवहारमूलकम्। जगत्यस्मिन् चेतनप्राणिनः व्यावहारिकाः भवन्ति। ते प्रायः शब्दमूलकमेव व्यवहारम् आचरन्ति। शब्दाश्च धातुमूलकाः। अत एव मुनियास्काचार्येण ''सर्वं नाम धातुजमाह''[१] इति निगदितम्। व्याकरणशास्त्रमपि धातुमूलकशब्दानां साधुत्व-सम्पादनाय प्रवृत्तं भवति। अतः भट्टनागेशेनोक्तम् —

**''अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुद्दशम्।**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥** इति।
**धात्वर्थं धात्वर्थमूलकशब्दशास्त्रप्रवृत्यर्थम्''[२]।**

धात्वर्थमूलकशब्दः द्विविधः। व्युत्पन्नोव्युत्पन्नश्च प्रकृतिप्रत्ययकल्पनया निष्पाद्य आद्यो व्युत्पन्नशब्दः प्रकृतिप्रत्ययकल्पनारहितसमुदायार्थप्रतिपाद्यो द्वितीयोऽव्युत्पन्नशब्दश्च। एतद्शब्द-द्वैविध्यं भगवता पाणिनिनाभ्युपेतं प्रतिपादितञ्च वर्तते। तथा हि प्रातिदिकसञ्ज्ञाविधायकं सूत्रं भगवता पाणिनिना द्वयं निगदितम् — ''अर्थवदधातुरप्रत्ययः प्रातिपदिकम्''[३] ''कृत्तद्धित-समासाश्च''[४]। आभ्यां सूत्राभ्यामेव प्रातिपदिकसञ्ज्ञा पाणिनीयव्याकरणेन सम्पाद्यते।

नन्वत्र अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्येकमेव सूत्रं प्रातिपदिकसञ्ज्ञाविधायकं स्यात् शब्दमात्रस्यार्थाभिधायकत्वादर्थवत्त्वात्। अतः कृत्तद्धितसमासाश्चेति द्वितीयं प्रातिपदिक-सञ्ज्ञाविधायकशास्त्रं सर्वथाव्यर्थमेवेति चेदुच्यते द्विविधो हि शब्दो व्युत्पन्नोव्युत्पन्नश्च यथा रामशब्दे धातुप्रत्ययमूलकत्त्वादत्र सूत्रे च धातुप्रत्ययपर्युदासत्वात् सूत्रेणानेने प्रातिपदिकसञ्ज्ञा नैव सम्भवति तदर्थं द्वितीयं कृत्तद्धितसमासाश्चेति शास्त्रं परमावश्यकम्।

---

१. यास्कचार्यप्रणीतनिरुक्तस्य प्रथमाध्याये प्रथमसूत्रम्।
२. लघुशब्देन्दुशेखरः नित्यानन्दपर्वतीयकृतशेखरदीपकसमलङ्कृतः, चौखम्बासंस्कृतसंस्थानम्, नवमसंस्करणम्, पृष्ठसंख्या ७।
३. पाणिन्यष्टाध्यायी १/२/४५।
४. पाणिन्यष्टाध्यायी १/२/४६।

अस्तु द्वितीयमेव कृत्तद्धितसमासाश्चेति सूत्रं प्रातिपदिकसञ्ज्ञाविधायकम्। सर्वेषां शब्दानां धातुप्रत्ययमूलत्वात् सुतरां प्रातिपदिकसंज्ञा सूत्रेणानेन सम्भविष्यतीति चेदत्र वक्तव्यम् अस्मिन् लोके द्विविधश्शब्दः। अतः अव्युत्पन्नशब्दानां प्रातिपदिकसञ्ज्ञाविधानाय प्रथमम् अर्थवदधातु-रप्रत्ययः प्रातिपदिकमित्यपि परमावश्यकम्। अत एव हरिणा भणितम् — ''अन्वाख्येयाश्च ये शब्दाः ये चापि प्रतिपादकाः''[५] निष्कर्षोऽयं समागतः वैयाकरणानाम्मते शब्दाः व्युत्पन्नाऽव्यु-त्पन्नभेदेन द्विविधाः वर्तन्ते। व्युत्पन्नशब्दाश्च धातुमूलकाः वर्तन्ते धातुमूलकशब्दे धात्वर्थः कः इति जिज्ञासा सुतरामेव समुदेति। तत्र जिज्ञासायाम् आचार्यकौण्डभट्टः प्रतिजानाति—

**फलव्यापारयोर्धातुः आश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम्॥**[६]

**अन्वयः —** फलव्यापारयोः धातुः स्मृतः (अत्र समृताः इत्यत्र वचनविपरिणामेन स्मृतः इत्यत्र प्रथमैकवचनम्। यतो हि यत्र''विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्या विरुद्धसंख्यायाः विशेषणवाचकपदोत्तरविभक्त्याऽविवक्षितत्वं तत्र समानवचनकत्वनियमः। अत एव नीलो घटाः इत्यादेः न साधुत्त्वम्''।[७]) आश्रये तिङः स्मृताः। फले व्यापारः प्रधानम्, तिङर्थस्तु विशेषणं (भवति) इत्यन्वयप्रकारः।

**कारिकार्थविचारः —** वाक्यार्थज्ञानं पदार्थज्ञानाधीनम् अतोऽत्र पदार्थो निरुप्यते।

फलवयापारयोः = फलञ्च व्यापारश्चेति फलव्यापारौ द्वन्द्वे च इति द्वन्द्वसमासविधायक-सूत्रेणेतरेतरयोगश्चार्थे इतरेतरयोगद्वन्द्वसमासः। पुनः सप्तमीद्विवचनविवक्षायां फलव्यापारयोः इति भवति। अत्र सप्तम्यर्थः वाचकत्वमिति। तत्र सप्तम्यर्थवाचकत्वरूपविभक्त्यर्थे प्रकृतिभूतस्य फलव्यापार इत्यस्य निष्ठतासम्बन्धेनान्वयः। तथा चार्थः फलव्यापारोभयनिष्ठवाच्यतानिरुपित-वाचकतेति। एतस्याः पुनराश्रयतासम्बन्धेव धातावन्वयः तथा जाते फलव्यापारोभयनिष्ठ-वाच्यतानिरुपित-वाचकतावान् धातुरित्यर्थः।

आश्रये = आश्रयः आधारः तस्मिन्नन्याश्रये। अत्रापि सप्तम्याः विभक्तेः वाचकत्वमर्थः।

---

५. वाक्यपदीयम् सूर्यनारायणशुक्लप्रणीतभावप्रदीपसहितम्, ४२।

६. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ११।

७. वैयाकरणभूषणसारः, दर्पणटीकायां, चौखम्बासंस्कृतसंस्थानम्, पृ.सं. १२।

तत्र सप्तमीविभक्तौ वाचकत्वरुपार्थे प्रकृतिभूताश्रयस्य निष्ठत्वसम्बन्धेनान्वयः तस्याः सप्तमी-विभक्तेः वाचकत्वरुपार्थस्य तिङि आश्रयतासम्बन्धेनान्वयः तथाचार्थः आश्रयनिष्ठवाच्यता-निरुपितवाचकतावन्तः तिङः स्मृताः इत्यर्थः। फले = फलं विक्लितिरित्यादिः तस्मिन् फलेऽत्र सप्तम्याः निरूपितत्वमर्थः। तस्याः सप्तमीविभक्तेः निरूपितत्वार्थस्य विशेषणतया प्रधानतायां तस्याः अभेदेन व्यापारे तथा च फलनिरूपितप्रधानाभिन्नो व्यापारः। तत्रैव व्यापारे तिङर्थः कर्तृकर्मसंख्याकालाः विशेषतयान्वेति अतः तिङर्थनिष्ठविशेषतानिरुपित-विशेष्यतावान् व्यापार इति फलति। कारिकायाः समुदितार्थो फलति यत् फलनिष्ठवाच्यतानिरुपितवाचकतावान् धातुः, अथ च व्यापारनिष्ठवाच्यतानिरुपितवाचकतावांश्च धातुर्वर्तते। आश्रयनिष्ठवाच्यनिरुपितवाचकता-वन्तः तिङः वर्तन्ते। फलनिरुपितप्रधानता व्यापारे वर्तते तत्रैव च कर्तृकर्मसंख्याकालरुपतिङर्थाः विशेषणानि भवन्ति, एतावता वैयाकरणाः व्यापारमुख्यत्वं स्वीकुर्वन्ति शाब्दबोधे।

**वाक्यार्थविचारः** — फलव्यापारयोर्धातुरित्यत्र कारिकायां पूर्वार्धे पदार्थविचारो वर्तते। उत्तरार्धे च वाक्यार्थविचारविचारप्रसङ्गः वर्तते। वाक्यार्थे व्यापारपदार्थस्य प्राधान्यं वैयाकरणैरङ्गीक्रियते। अर्थात् व्यापारमुख्यविशेष्यकं शाब्दबोधमङ्गीकुर्वन्ति वैयाकरणाः प्राच्याः। ग्रन्थोऽयं वैयाकरणभूषणसारः प्राच्यवैयाकरणानां ग्रन्थः। अथ च व्यापारमुख्यविशेष्य-कशाब्दबोधस्सर्वत्र कर्तृकर्मचाच्ये समङ्गीकृतो वर्तते। अत एव प्राच्यवैयाकरणानामिदं मतं यत् कर्तृप्रत्ययस्थले देवदत्तः ओदनं पचतीत्यादौ, देवदत्तेन ओदनः पच्यते, इति कर्मप्रत्ययस्थले व्यापारमुख्यविशेष्यकः बोधः सञ्जायते। नव्यवैयाकरणानां विशेषतः नागेशभट्टादीनां मतं किञ्चित् भिन्नं वर्तते। तेषां मते ''सुप आत्मनः क्यच्'' सूत्रस्थभाष्यप्रामाण्यात् कर्तृप्रत्ययस्थले व्यापार-मुख्यविशेष्यकः शाब्दबोधः तथा च कर्मप्रत्ययस्थले पच्यते ओदनः इत्यादौ फलमुख्यविशेष्यकः शाब्दबोधो जायते। प्रसङ्गसङ्गतिमादायेदमप्यत्रधेयम् फलव्यापारयोरित्यत्रापि नव्यप्राच्यवैया-करणयोः मतभेदो दरीदृश्यते। अत्र प्राच्याः ''एक वृन्तगतफलद्वयन्यायेन पृथगुपस्थिति-प्रयोजिका खण्डशः एकैव शक्तिरिति''[८] इत्यङ्गीकृत्य फलव्यापारयोः स्वातन्त्र्येणान्वयं कुर्वन्ति।

अत्र पक्षे नव्यवैयाकरणाः क्षिपन्ति यत् एकपदोपस्थापितयोः पदार्थद्वयोः परस्पर-मुद्देश्यविधेयभावेनान्वयः इति सिद्धान्तेन फलव्यापारयोः परस्परम् उद्देश्यविधेयभावेनान्वया-पत्तिः। विषयेऽस्मिन् नव्यवैयाकरणाः निगदन्ति धातोः वाचकताशक्तिः कर्तृवाच्ये फलावच्छिन्न-

८. वैयाकरणभूषणसारः, प्रभाटीकायां, चौखम्बासंस्कृतसंस्थानम्, पृ.सं. ११।

व्यापारे, कर्मवाच्ये व्यापारावच्छिन्नफले च वर्तते। अत एव एकपदोपस्थापितपदार्थद्वया-भावान्नोद्देश्यविधेयभावेनान्वयः। नव्यवैयाकरणान् प्राच्यवैयाकरणाः प्रक्षिपन्ति यत् कर्तृवाच्ये यदि फलावच्छिन्नव्यापारे धातोश्शक्तिः तथा च कर्मवाच्ये व्यापारावच्छिन्नफले धातोश्शक्तिः चेत् फलव्यापारयोः पदार्थैकदेशत्वात् न कर्तृकर्मादिष्वन्वयः, तथा चान्वयाभावे कर्मकतृसंज्ञयोरेव अनुपपतिः व्यापाराश्रयस्य कर्तृत्वात् फलाश्रयस्य कर्मत्वाच्च। पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेत्यनङ्गीकारान्न्यायात् घटो नित्यः इत्यादि प्रयोगापत्तिः। कथमिति चेदुच्यते जाति-विशिष्टव्यक्तौ शक्तिः पदार्थस्य, अत एव घटपदोच्चारणात् घटत्वविशिष्टकम्बुग्रीवादिमत्पदार्थ-स्योपस्थितिर्जायते। अत्र च घटत्वजातिर्नित्या कम्बुग्रीवादिमान् घटो अनित्यः। सिद्धान्तपक्षे घटत्वजातिः न पदार्थः अपितु पदार्थैकदेशः घटव्यक्तिः पदार्थः। अतः घटव्यक्तेरेवान्यत पदार्थान्तरेण सहान्वयः। घटव्यक्तेरनित्यत्वात् नित्यप्रदार्थान्तरेणान्वयविरोधात् अग्निना सिञ्चतीति वाक्यवन्न लोके प्रयोगः योग्यताभावरुपशाब्दबोधकारणाभावात्। अत एवोच्यते न्यासिद्धान्त-मुक्तावल्यां शब्दखण्डे—

**''आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते।[९]''**

परन्त्वत्र पदार्थैकदेशस्यापि पदार्थान्तरेण सह अन्वयाङ्गीकारात् घटत्वरुपनित्यजातेः नित्यपदार्थेन सहान्वयात् क्वायोग्यता। अत एव नित्यो घटः इति प्रयोगापतिः। अत्र प्रभाकाराः **''फलविशिष्टव्यापारे शक्तौ तु फलस्य पदार्थैकदेशत्वेन तत्र पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति न्यायविरोधात् कर्माद्यनन्वयापत्तिः। तन्न्यायास्वीकारे तु नित्यो घटः इत्याद्यापत्तिः[१०]''**।

उपर्युक्तव्याख्यानेन नव्यप्राच्यवैय्याकरणप्रोक्तेनोभयोः मतयोः परस्परमतभेदो वर्तते। उपस्थितयोः मतद्वयोः कस्य मतं न्याय्यमित्यत्राहुः प्रभाकाराः **''वस्तुतस्तु फले व्यापारे च खण्डशः शक्तिरिति प्राचीनमतमेव न्यायः, उद्देश्यविधेयभावेनान्वयनियमकव्युत्पत्तौ धातुभिन्नस्य विशेषणदानेनादोषात्''**[११]। प्राच्यवैयाकरणाः व्यापारमुख्यविशेष्यकशाब्द-

९. न्यायसिद्धान्तमुक्तावली दिनकरीरामरुद्रीविभूषिता हरिरामशुक्लसम्पादिता, चौखम्बाप्रकाशनम्, वि.सं. २०६८, पृ.सं. ३१।

१०. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६८ पृ.सं. ११।

११. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६८, पृ.सं. १३।

बोधमङ्गीकुर्वन्ति सर्वत्रेति उपयुक्तव्याख्यानस्य निष्कर्षः समागतः। तत्रैव व्यापारे फलसध्रीचीन-तिङर्थाः विशेषणानि भवन्ति। कारिकायामुच्यते **आश्रये तु तिङः स्मृताः** अत्र आश्रयपदेन कर्तृकर्मणोः बोधः। कर्तृपदार्थः व्यापाराश्रयः। कर्मपदार्थः फलाश्रयः। फलव्यापारयोः धातु-लभ्यत्वात् आश्रयमात्रं धात्वर्थः। यतः अनन्यलभ्य एव शब्दार्थो जायते। अत एवोक्तं मूले ''**तत्र फलव्यापारयोः धातुलभ्यत्वात् न तिङः तदंशे शक्तिः, अन्यलभ्यत्वात्**''[१२]। ''वर्तमाने लट्''[१३] इत्यनुशासनेन कालस्य लट-लकारवाचकत्वात्, लट्स्थानिकस्य तिङा-देशस्य स्थान्यर्थाभिधानसमर्थत्वाच्चेति कालोपि तिङर्थः। तथैव ''द्व्येकयोर्द्विवचनैकवचने''[१४] ''बहुषु बहुवचनम्''[१५] इत्यनुशासनाभ्यां तिङर्थः संख्यापि वर्तते तिङादिभिः सह उर्पयुक्तानु-शासनयोः अभेदान्वयात्। एतावता निष्कर्षः समायाति यत् तिङर्थाः चत्वारः कर्तृकर्मसंख्या-कालाः।

इदानीमन्वयक्रमो विचार्यते व्यापारे फलस्य अन्वयः अनुकलत्वसम्बन्धेन प्रयोज्यत्व-सम्बन्धेन वा। कर्तृपदार्थस्य च व्यापारे वृत्तित्वसम्बन्धेन अन्वयः। कर्मपदार्थस्य च वृत्तित्व-सम्बन्धेन फलेऽन्वय, तस्य च फलस्य व्यापारेऽन्वयः। अर्थात् फलद्वारामुख्यविशेष्यता व्यापारे एव। संख्यायाः अन्वयः कर्तृकर्मद्वारा वा व्यापारे अभिप्रायोऽयं कर्तृप्रत्ययस्थले संख्यायाः अन्वयः कर्तरि, कर्तुश्च व्यापारे। तथैव कर्म प्रत्ययस्थले कर्मणि कर्मणश्च व्यापारे चान्वयः। अत्रापि मुख्यत्वं व्यापारे एव। ननु संख्यायाः अन्वयः कर्तरि कर्मणि वा स्यादित्यत्र किं मानमित्युच्यते ''**संख्या कर्तृप्रत्यये कर्तरि कर्मप्रत्यये कर्मणि समानप्रत्ययोपात्तत्त्वात्**''[१६]। कालस्यान्वयः व्यापारे च भवति। ननु संख्यावत् कालस्याप्यन्वयः समानप्रत्ययोपात्तत्वात्, कर्तृकर्मणोरेव स्यादिति चेत्, अत्र कर्तृसत्तायां व्यापारविगमे देवदत्तः पचति प्रयोगस्य आपत्तिः भविष्यति लोके च देवदत्तः अपाक्षीत् इति प्रयोगो दरीदृश्यते। अत एवोच्यते मूले ''न च संख्यावत् कर्तृकर्मणोरवान्वयः शङ्क्यः, अतीतभावनाके कर्तरि पचतीत्यापत्तेः अपाक्षीदित्यना-पत्तेश्च। पाकानारम्भदशायां कर्तृसत्वे पक्ष्यतीत्यनापत्तेश्च''[१७]। एतदन्वयं सम्पाद्य कर्तृप्रत्यय-

१२. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६८, पृ.सं. २२।
१३. पाणिन्यष्टाध्यायी ३/२/१२३।
१४. पाणिन्यष्टाध्यायी १/४/२२।
१५. पाणिन्यष्टाध्यायी १/४/२१।
१६. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ३७।
१७. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ४२।

घटितवाक्यप्रयोगे देवदत्तः तण्डुलं पचतीत्यत्र वैयाकरणसम्प्रदाये बोधः विक्लित्यनुकूलः वर्तमानकालकालिको व्यापारः। उपर्युक्तबोधे देवदत्तकर्तृकेण सह तिङर्थकर्तृकस्य तद्गतसंख्यायाश्च अभेदसम्बन्धेनाऽवयः।

**अधुना प्रकृतमनुसरामः धात्वर्थविचारः —** धातोरर्थः फलव्यापारौ इति वैया-करणानां प्रतिज्ञावाक्यम्। अत्रैके नैयायिकाः वदन्ति फलं धात्वर्थ कृतिर्तिङर्थः। अपरे च व्यापारमात्रं धात्वर्थः फलञ्च द्वितीयार्थः कृतिर्तिङर्थ इति प्रवदन्ति। तथैव मीमासका अपि प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्यैव प्राधान्यमित्यङ्गीकृत्य फलं धात्वर्थः तिङर्थः भावना, भावनामुख्यविशेष्यकं बोधं च निगदन्ति। उपर्युक्तमतानां खण्डने स्वमतपोषणे च निम्नलिखितप्रमाणानि समुपस्थापियन्ति महावैयाकरणाः कौण्डभट्टाः। तानि —

व्याकरणसम्प्रदायप्रथितः व्यापार एव मीमांसकनिकाये भावनापदेन प्रोच्यते। तस्यैव व्यापारस्यैव नाम न्यायसम्प्रदाये कृतिपदेन प्रसिद्धः। सर्वादौ भावनादिष्वभेदप्रतिपादयता कौण्डभट्टेनोच्यते —

**व्यापारो भावना सैवोत्पादना सैव च क्रिया।**
**कृञोऽकर्मकतापत्तेः न हि यत्नोऽर्थ इष्यते॥**

सिद्धान्तोऽयं सर्वैरभ्युपेतः यत् विवरणविव्रियमाणयोः समानार्थकत्वमिति यथोच्यते राज्ञः = नृपस्येत्यादि व्याख्याग्रन्थेषु। विवरणो नाम = तत्समानार्थकस्य शब्दान्तरेण कथनमिति विव्रियमाणो नाम विवरणस्य विषयः। अमुं सिद्धान्तमभ्युपेत्य अत्रापि पश्यामः पचति इत्यस्य विवरणं पाकमुत्पादयति पाकानुकूला भावना, पाकानुकूला उत्पादनेति। अतः विवरणविव्रिय-माणयोः पचति पाकमुत्पादयेत्यादीनां समानार्थकत्वमागच्छति। अनेन प्रकारेण यं पदार्थं व्यापारो बोधयति तमेव भावनादयः। एतदेवोक्तम् ''पचति = पाकमुत्पादयति, पाकानुकूलाभावना तादृश्यु-त्पादना इति विवरणात् विव्रियमाणस्यापि तद्वाचकतेति भावः''[१८]। पचति इत्यादौ पाकमुत्पादयति इत्यादिविवरणं प्रकृतिभूतधातोः विवरणं न तु आख्यातार्थविवरणमिति।

अत्र नैयायिकाः ''न च पचति = पाकं करोति इति यत्नार्थक करोतिना विवरणात् यत्न एव आख्यातार्थ इति वाच्यम्, रथो गमनं करोति बीजादिना अङ्कुरः कृतः इति दर्शनात्

१८. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ६२।

कृञो यत्नार्थकतायाः असिद्धेः''[१९]। अयमाशयः न्यायनये धात्वर्थः फलं तिङर्थः कृतिः। पचति इत्यादौ पाकं करोति इत्यपि विवरणं धातोर्वर्तते तथा च करोतीति यत्नार्थकविवरण-माख्यातस्य च वर्तते इत्यङ्गीक्रियताम् विवरणदर्शनादिति भावः। अतः वैयाकरणाः वदन्ति करोतेः विवरणं यत्नः, चेतनवृत्तिधर्मः, तच्च देवदत्तः पचतीत्यादौ सम्भवेपि, रथो गच्छति इत्यत्र रथस्याऽचेतनत्वात् तद्विवरणं न सम्भवति। अतः धातोरेव विवरणमिति स्वीकार्यम्।

पुनः द्वितीयमपि मानं दर्शयति धातोः व्यापारवाचकत्वे। यदि फलमेव धात्वर्थश्चेत् सकर्मकाकर्मकव्यवस्थायाः उच्छेदापत्तिस्स्यात् कथमिति चेदुच्यते सकर्मकत्वन्नाम् स्वार्थफल व्यधिकरणव्यापारवाचकत्वमथवा स्वार्थव्यापारव्यधिकरणफलवाचकत्वमिति। यदि केवलं धातौ फलवाचकता स्यात् चेल्लक्षणासम्भवः। एतदेवोच्यते अत्र मूले — ''अपि च भावनायाः अवाच्यत्वे धातूनां सकर्मकत्वाकर्मकत्वविभाग उच्छिन्नः स्यात्। स्वार्थफलव्यधिकरणव्यापार-वाचकत्वम्, स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्त्वं भावनायाः वाच्यत्वमन्तरेणा-सम्भवति''[२०]। ध्यातव्यमेतत् ग्रन्थकारः धातोर्व्यापारवाचकत्वे प्रयतते यतोहि फलवाचकत्वं धातोः प्रायः सर्वैः समङ्गीकृतमेव।

कृञ् धातुः यत्नार्थकः यदि स्याच्चेत् तदा यतो प्रयत्ने धातुवत् अकर्मकः एव स्यात् अत एव उत्पत्तिफलसहितव्यापारः कृञ्धात्वर्थः इति सर्वैरङ्गीक्रियते तेन फलव्यापारवाचक-त्वात्सकर्मकत्वम् उपपद्यते। एतदेवोच्यते कारिकायाः उत्तरार्धे **कृञो अकर्मकतापत्तेः न हि यत्नोऽर्थ इष्यते।** कृधातुः अत्र धातुमात्रस्यबोधकः उपलक्षणविधया विद्यते अत्रोपलक्षणत्वञ्च स्वबोधकत्वे सति स्वेतरबोधकत्वम् एतदुच्यते मूले ''कृञ् इति धातुमात्रोपलक्षणम् सर्वेषामपि अकर्मकता सकर्मकता वा स्यादितिभावः''[२१]। कृञ्धातोः यत्नः अर्थोनेष्यते इत्यस्य तात्पर्यं यत्नमात्रमर्थो नेष्यते अपितु उत्पत्तिफलसहितं यत्नादिः अर्थः। यत्नव्यापारस्योत्पत्तिफलसहि-ताङ्गीकारे किं फलं मानञ्चेति जिज्ञासामुच्यते ग्रन्थकृद्भिः —

**किन्तूत्पादनमेवातः कर्म्मवत्स्याद् यगाद्यपि।**
**कर्म्मकर्त्तर्य्यन्यथा तु न भवेत् तद दृशेरिव॥**[२२]

१९. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ६४।
२०. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ६८।
२१. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ७०।
२२. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ७३।

यथा दृशधातोरकर्मकत्वान्न कर्मवद्भावः तथैव यत्नमात्रार्थकस्य कृञ्धातोरकर्मकत्वान्न कर्मवद्भावः। अत एव उत्पत्तिफलानुकूलोव्यापार एव कृञ्धात्वर्थो भवेदितिभावः। उपर्युक्तव्याख्यानेन ग्रन्थकारः प्रमाणीकरोति यत् धातोरर्थः व्यापारः अवश्यमेवाभ्युपेयः।

नैयायिकैकदेशिनः प्रवदन्ति यत् धात्वर्थः व्यापारः द्वितीयार्थः फलं तिङर्थश्च कृतिरस्तु। तान्नैयायिकैकदेशिनः प्रति ग्रन्थकारः धातोः फलवाचकत्वे प्रमाणमुपस्थापयति युक्त्यात्मकम् — ''धातूनां फलावाचकत्वे त्यजिगम्योः पर्य्यायतापत्तिः क्रियावाचकत्वाविशेषात्। फलस्योपलक्षणत्वेपि एकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति। तस्मादावश्यकं सकर्मकाणां फलवाचकत्वम्। अकर्मकाणान्तु निर्विवादमेव भू सत्तायाम् इत्याद्यनुशासनाच्च''[२३]। धात्वर्थः संयोगानुकूलव्यापारो गम्धात्वर्थः। तत्र उभयत्र पादविक्षेपादिव्यापारः समानमेव। उभयोः धात्वोः भेदप्रयोजकं विभागसंयोगफलमेव वर्तते। यदि व्यापार एव धात्वर्थो न तु फलं चेत् उभयत्त व्यापाराविशेषात् पर्यायतापत्तिः। अत एव सकर्मकधातुषु फलमवश्यमेवाङ्गीकर्तव्यम्। अकर्मकधातुषु फलवाचकत्वं निर्विवादमेव। यतो हि तत्र द्वितीयायाः कर्मणः अभावात् फललाभाय कश्चन् द्वितीयोपायः नास्त्येव। यथा सकर्मकधातुविषये कर्मणः द्वितीयाविभक्तेः फललाभः अतः धात्वर्थः व्यापार एव तथा न। सकर्मकधातुषु द्वितीयाविभक्तेः कर्मविभक्तेरभावात्। एवं प्रकारेण ''**सिद्धान्तानुपपतितभिः प्रकटये तेषां वचो दूषये**''[२४] इति प्रतिज्ञावाक्यम् अवधारयन् आचार्यकौण्डभट्टः धातौ फलव्यापारवाचकत्वे नैकविधोपपतिं प्रयच्छतीति दिक्।

*****

**डा. अम्बरीशकुमारमिश्रः**
सहायकाचार्यः, व्याकरणविभागः,
भरतमिश्रसंस्कृतमहाविद्यालयः, छपरा
अङ्गीभूतः कामेश्वरसिंहदरभङ्गाविश्वविद्यालयः
दरभङ्गा, बिहारः।

२३. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ८०।
२४. वैयाकरणभूषणसारः, प्रभादर्पणसहितः, चौखम्बासंस्कृतसंस्थानम्, तृतीयसंस्करणम्, वि.सं. २०६३, पृ.सं. ०७।

# पदार्थानां बुद्धिपरिकल्पितत्वम्

— डॉ. सन्तोषकुमारझाः

पदस्य अर्थः पदार्थः। पदार्थः कीदृशः वास्तविको बुद्धिपरिकल्पितो वा? शब्दः तस्य अर्थश्च बुद्धिपरिकल्पित एव। यतो हि बौद्धशब्दस्य बौद्धार्थेन सह एव समानाधिकरणम्। यद्यपि बौद्धार्थविचारः पूर्णतया दार्शनिकस्तथापि संस्कृतव्याकरणमपि आत्मानं दर्शनरूपेण प्रस्तौति। बौद्धार्थस्य सत्ताया अस्वीकारे व्याकरणशास्त्रे अन्तर्विरोधानाम् आवलिरेव आपतिता स्यात्। तस्य निवारणार्थमेव बौद्धार्थस्वीकृतिः नहि कल्पनामात्रम् अपितु आधारसहितं तर्कसम्मतं च। व्याकरणग्रन्थातिरिक्तम् उपनिषत्पुराणागमग्रन्थेष्वपि बौद्धार्थसत्ता स्वीकृता। बौद्धार्थे एव वेदान्तदर्शनस्य सर्वेषां वादानां सिद्धान्तः आधारितः।[१] 'घट' इति शब्दकथनेन कम्बुग्रीवादिमान् इति घटलक्षणं बौद्धार्थसत्तास्वीकारादेव प्रतिफलति यतो हि घट विशिष्टस्वरूपज्ञानं बौद्धम् एव भवति तद्वदेव बाह्यार्थघटस्य स्वरूपं बुद्धौ भवति। इत्थं ईदृक्-तादृक्-रूपप्रत्यभिज्ञा अपि बौद्धसत्तास्वीकारादेव समुपलभ्येति।[२]

नैयायिकानामपि बौद्धसत्तास्वीकारः परमावश्यकः। सिद्धपाकादिः असिद्धपाकादिश्चोभयमपि पूर्वम् बुद्धिस्थं भवति तदा असिद्धपाकादेः सिद्धपाकादिं प्रति इच्छा भवति। तदैव सिद्धासिद्धपाकादेः समानाधिकरणं संगच्छते। अन्यथा असिद्धपाकादेः बाह्यदेशे अभावात् तस्यापि स्थितिः शशशृङ्ग इव स्यात्।[३]

गौतमानुसारमुत्पत्तेः प्रागसतोऽभाव आसीत्, यतोहि नहि असतः उत्पत्तिस्सम्भवा। यथा सिकतायास्तैलम्। सतः अप्यभावः, यतो हि सतः उत्पत्तिरसम्भवा, स्वीकारे चोत्पत्तावपि अनवस्थासम्भावनात्वात्। नैव सदसदेवासीत्। यतो हि सदसतः वैधार्म्यत्वात् सत्त्वासत्त्वसमानाधिकरणभावः असम्भवः। तर्हि किमासीत् उत्पत्तेः पूर्वम्, कस्माच्चोत्पत्तिः? अस्य प्रश्नोत्तरे

१. शब्दा.वि. २०८।
२. म.भा. १.३.२।
३. ल.म. टीका पृ. २०९।

वक्तुं शक्यते यत् असतः एव। यतः कार्योत्पत्तेः विनाशोऽपि निश्चित एव। अतः पूर्वम् असदेवासीत् तस्माच्चोत्पत्तेर्न कश्चिन्नियमो भवितुं शक्नोति। इत्थं शङ्कां कृत्वा गौतमः समाधत्ते — ''बुद्धिसिद्धन्तु तदसत्''[४]। अर्थात् असति च भूते उत्पत्तेः पूर्वम् विनाशादनन्तरं च बौद्धसत्ता भवति। इत्थं नैयायिकैरपि बौद्धसत्ता स्वीकृता।

नागेशः बौद्धार्थसमर्थने वदति यत् बौद्धे एव पदार्थे शक्यता भवति पदं च स्फोटात्मकं भवति पुनस्तयोस्तादाम्येन कार्यप्रभवः। न च वह्निशब्दोच्चारणेन मुखे दाहापत्तिस्स्यात् यतस्तत्र बौद्धे दाहादिशक्तिमत्त्वाभावात्। बहु पूर्वं मारितस्य कंसस्य, बद्धस्य वा बालेः 'कंसं घातयति' 'बलिं बद्धनाति' इत्यादिषु वर्तमानकालत्वं कथं स्यात्? तद्रूपारोपकाभिनेतृषु एतच्छक्यम्। चित्रकाराणां रचनासु ग्रन्थकाराणां वा ग्रन्थेषु स्वबुद्धिविषयस्यैव वर्णनं क्रियते।[५] अत एव भर्तृहरिः लिखति —

**शब्दोपहितरूपांच बुद्धेर्विषयतां गतान्।**
**प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥**[६]

सांख्यानुसारं यथा दर्पणे मुखदर्शनं भवति तथैव स्वच्छे अन्तःकरणे तत्र घटादिविषयस्य प्रतिबिम्बितत्वात् तद्रूपतागच्छति। अतः घटादिविषयरूपम् चित्तवृत्तिः भवति। यथा दर्पणे मुखस्य प्रतिबिम्बदर्शनेन तद्रूपतागच्छति तथैव जडीभूतान्तःकरणे चैतन्यं प्रतिबिम्बितं भवति। अन्तःकरणे संक्रान्ते च चैतन्ये तदाकाराकारे प्रतिभासते। परन्तु नागेशानुसारं नहि विषयः प्रतिबिम्बितो भवति अपितु कल्पितमात्रोभवति। अन्तःकरणविषयदेशगमनेऽपि शरीरसम्बन्धास्तु भवत्येव बुद्धिस्थविषयाकारे एव विपरिणमनेन चित्तस्य शरीराद् बहिः गन्तुमशक्यत्वात्।[७]

स्मृतिवचनमुद्धृतं लघुमंजूषायाम् —

**''विप्र पृथ्व्यादिचित्तस्थं न बहिस्थं कदाचन।**
**स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते॥''**[८]

४. न्या.द. ४.१.४८ तः ५०।
५. म.भा. १.३.२६।
६. वा.प. २.१५।
७. ल. मञ्जूषा – टीका रत्नप्रभा पृ. २१३।
८. तत्रैव पृ. २११।

अर्थात् पृथिव्यादिविषयस्तु चित्ते एव भवति। बहिः किमपि नास्ति। एतादृशी अनुभूतिः स्वप्नभ्रमादिषु सर्वेषां भवति। 'योगवासिष्ठे' बौद्धपदार्थस्य समर्थने लिखितम् —

**''बहिः प्रकटतां याति तथा पृथ्व्यादिचेतसः।**
**सत्यं पृथ्व्यादिचित्तस्थं न बहिष्ठं कदाचन॥**
**आबालमेतत्पुरुषैः सर्वैरेवानुभूयते।**
**स्वप्नभ्रममदावेगरागरोगादिदृष्टिषु॥''**[९]

जगतः सम्पूर्णमपि वस्तु विचारो वा बुद्धावेव। न च बुद्धेर्बहिः किञ्चिदपि विद्यते। स्वप्नावस्थायां यदा कश्चिद् अश्वमारोहति तदा तस्य सर्वाणि अपि बाह्येन्द्रियाणि ज्ञानरूपकर्मोपरतानि भवन्ति। अतः अश्वाद्युपलब्धिर्नहि वास्तविकी अपितु प्रतिभासिकी भवति। यथा स्वप्ने बाह्यवस्तुनः अभावे बौद्धिकसत्तासामर्थ्यादेव वस्तूनामुपलब्धोऽवभासः तथैव जाग्रदवस्थायामपि सर्वाण्यपि वस्तूनि चित्ते स्थितानि भवन्ति। आचार्यः शंकरो ब्रूते 'स्वप्नावस्थायामनुभूतानि वस्तूनि स्वप्नकालपर्यन्तं तद्वदेव सत्यमनुभूयन्ते यथा अस्माभिः जाग्रदवस्थायां बाह्यवस्तूनि। परन्तु निद्रावस्थाया अनन्तरं स्वप्नगतानुभूतयः असत्यं सिद्ध्यन्ति।'[१०]

इत्थमेव बाह्यवस्तुनः सत्तापि असत्यमेव। स्वप्ने नहि रथोऽस्ति, न चाश्वो, न च मार्ग एव तथाप्येतेषामवभासः। यदा कदा तु एते स्वप्नगतविषया इष्टानिष्टसूचका अपि भवन्ति। स्वप्नकालानुभूतयः ज्ञानेन्द्रियाणां निष्क्रियत्वेऽपि भवन्ति। अतः एतेन सिद्ध्यति यत् स्वप्नकालानुभूतयः सर्वाः केवलं बौद्धिक्य एव — ''न तत्र रथा, नाश्वयोगाः न पन्थानो भवन्ति, अथ रथान्, रथयोगान् पथः सृजते।[११]'' ''नास्यरथादिग्रहणाय चक्षुरादीनि सन्ति रथादिनिवर्तने वा कुतो निमेषमात्रेण सामर्थ्यम्? दारुणि च वसन्ति तस्मान् मायामात्रं स्वप्नदर्शनं तादृशमयीष्टानिष्टसूचकम्।[१२]''

इत्थमेव शंकराचार्यानुसारमपि भौतिकानुभवः बुद्धेः मिथ्या परिणाममात्रम् अर्थात्

९. योगवासिष्ठ - ५.४८.५२-५३।
१०. शां.भा. - २.१.१४।
११. बृहदारण्यको ४.३.१०।
१२. तत्रैव ३.२.४।
१३. शांकरभा. ३.२.४।

भ्रम एव। अस्य बाह्यवस्तुनः न कापि सत्यता। यथा जागरणपर्यन्तमेव स्वप्नस्य वास्तविकता सिद्ध्यति तथैव बाह्यजगतोऽनुभवपर्यन्तमेव अस्य मिथ्यासंसारस्य सत्यता भवति। स्वप्नस्य मिथ्यात्वं प्रतिदिनं बाधते परन्तु अस्य संसारस्य मिथ्यात्वं चिरकालपर्यन्तात्यन्तसाधानाज्ञाना-नन्तरमेव बाधितं भवति।[१३]

बाह्यवस्तुसंघः बौद्धिकपरिणामः कथितः परन्तु नह्येतानि बुद्धेः वास्तविकपरिणाम-स्वरूपाणि। अयन्तु स्मृतिरूपानुभवः अध्यासरूपानुभवो वा विद्यते। अत एवैतत् बौद्धिको भ्रमो वक्तुं शक्यते। यथा रज्जौ अहेर्भ्रमः। रज्जुः सर्परूपे परिणतो न भवति अपितु रज्जौ सर्पात्मकप्रतीतिमात्रम् भवति। नह्यहेर्भ्रमः रज्जुं प्रभावयति केनापि प्रकारेण। सम्पूर्णं जगदिदं मिथ्याप्रतीतिः बुद्धेः विवर्तो वा विद्यते। बुद्धिः आत्मानं विभिन्नरूपेषु आकारेषु च परिणमयति। किञ्चिदपि बाह्यवस्तु नहि बुद्धेः बहिः विद्यते।[१४] अतएव भर्तृहरिः लिखति —

**''यो वार्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः।**
**स बाह्यवस्त्विति ज्ञातः शब्दार्थः कैश्चिदिष्यते।[१५]''**

ऐतरेयोपनिषदनुसारं सम्पूर्णं जगदिदं नामरूपात्मकम् प्रज्ञानस्यैवानेकानि नामानि। नह्येतस्य बाह्यसत्ता किञ्चिदपि — ''सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च यच्च स्थावरम्।[१६]'' एतत् सम्पूर्णं जगत् ब्रह्मणः तथा तस्य अविद्याया मायायाः अतिरिक्तं किमपि नास्ति —

**''मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।**
**अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥[१७]''**

वैयाकरणानां मतानुसारम् 'अहं घटं जनामि' इत्यस्यार्थो भवति 'घटविषयकज्ञान-वानहमस्मि।[१८]' अर्थात् मन्निष्ठज्ञानं घटत्ववृत्तित्वावच्छिन्नं घटरूपात्मकं वास्ति। अनेन ज्ञानस्य

१४. परमार्थसारः ३३, शांकरभा. १.१.१।
१५. वा.प. २.१.३४।
१६. ऐत.उप. ५.१२.३।
१७. श्वे. उप. ४.१०।
१८. ल.मञ्जूषा पृ. ३१५।

विषयकारिता सिद्ध्यति।

**''एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
कूर्मक्षीरचये स्नातः शशशृंगधनुर्धरः॥[१९]''**

अर्थात् एष वन्ध्यायाः पुत्रो गच्छति, एषः आकाशकुसुमधारी अस्ति, कूर्मस्य दुग्धे स्नातोऽस्ति, शशकशृंगनिर्मितधनुष्मानस्ति, इत्यादिषु वाक्येषु शशशृंगादीनां बाह्यसत्ताभावात् कथमेतेषाम् अर्थवत्त्वम्? अर्थात् कथमेतेषांशाब्दबोधाः, प्रातिपदिकत्वं च कथम्? अपि च कथं हि वन्ध्यासुतेन सह 'याति' क्रियान्वयः? शशशृंगः नास्ति इत्यत्र 'नास्ति' इति क्रियापदस्य किमावश्यकत्वम्? एतासां शङ्कानां समाधानाय एक एवोपायो वर्तते – बौद्धार्थस्वीकार इति। एतेषां बाह्यसत्ताभावेऽपि बुद्धिपरिकल्पितपदार्थत्वात् शाब्दबोधो भवति प्रातिपदिकत्वमपि जायते। तथा बुद्धिस्थवन्ध्यासुतेन सह 'याति' इति क्रियापदस्यान्वयोऽपि भवति। शशशृंगस्य बाह्यसत्ताभावज्ञापनार्थमेव 'नास्तीति' कथनं सार्थकं भवति। अतएव 'आकाशं न पश्यति' इत्यत्रपि नहि काचित् विप्रतिपत्तिः। अतएव भर्तृहरिर्लिखति —

**''व्यपदेशे पदार्थानामन्या सत्तौपचारिकी।
सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका॥[२०]''**

बौद्धं पदार्थं स्वीकुर्वन् भाष्यकारो लिखति — ''बुद्धौ कृत्वा सर्वाश्चेष्टाः .......... बुद्धिस्त्वस्य विपरिणम्यते।[२१]'' वस्तुनः बुद्धाववधानानन्तरमेव मनुष्यस्य सर्वाश्चेष्टाः प्रवर्तन्ते। सम्पूर्णमपि जगत् बुद्धेरेव परिणामः। नागेशेन मंजूषायां विविधातार्किकयुक्त्याधारेण बौद्धार्थः साधितः। तदनुसारं शक्तिग्रहस्य विषयः बौद्धार्थ एव — ''अर्थश्च बौद्ध एव ज्ञानविषयः शक्तिग्रहविषयश्च।'' बौद्धार्थज्ञानं वृत्तिरूपम् भवति तच्च बुद्धिधर्म एव। शब्दार्थज्ञानयोः स्थितिः समानदेशस्थानात् परस्परम् इतरेतराध्यासः।[२२] अतएव पतंजलिः योगदर्शने लिखति — ''शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरः तत्प्रविभागसंयमात् सर्वभूतरुत ज्ञानम्।'' शब्दो बौद्धमेव पदार्थं प्रकाशते। शब्दः अर्थश्चोभयमपि आत्मनः भेदद्वयम् —

१९. प.ल.मञ्जूषा पृ. २२।
२०. वा.प. ३.३.३९।
२१. म.भा. १.१.५६।
२२. ल.मञ्जूषा पृ. ३६४।

**''अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाशते।**
**एकस्यैवात्मनो भेदौ शब्दार्थौ वा पृथक्स्थितौ॥[२३]''**

'स भूरिति व्याहरत्, स भूमिमसृजत्' इति श्रुतिवचनेन सृष्टेः पूर्वम् भूशब्दादिना सृष्टेः सर्जनं जातम्। अत्र बाह्यस्य 'भू' इत्यस्याभावे बौद्धस्य 'भू' इत्यस्य ग्रहणं भवति।[२४] अत एव मनुः लिखति —

**''सर्वेषां तु नामानि कर्माणि च पृथक् पृथक्।**
**वेद-शब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥''**

महाभाष्यकारः पतंजलिः 'उपदेशेऽजनुनासिक इत्'[२५] इति सूत्रव्याख्यावसरे बौद्धार्थस्य बाह्यार्थस्य च सत्तां साधयति। 'अयं गौः' एतादृशेषु स्थलेषु प्रत्यक्षाख्यानेन ज्ञानं कार्यते तथा इत्थं देवदत्तः 'इत्यत्र देवदत्तस्य अविद्यमानत्वात् अंगदी, कुण्डली, किरीटी, देवदत्तः इत्यादि गुणानामाधारेण बौद्धिकाख्यानेन तस्य ज्ञानं कार्यते — 'प्रत्यक्षं तावदाख्यानमुपदेशः। अयं गौरिति। गुणैः प्रापणमुद्देशः ईदृशो देवदत्त इति।'[२६] अनेन बाह्यार्थस्य बौद्धार्थस्य चोभयविधस्य अर्थस्य स्वीकारोक्तिः। कैयटोऽपि इत्थमेव व्याख्यायनं करोति — ''एतैः शब्दैः यादृशो बुद्धावर्थः प्रतिभासते तादृशो बाह्यः।[२७]'' 'तदस्यास्तस्मिन्निति मतुप्[२८]' सूत्रे भाष्यकारेण अर्थस्य त्रैकालिकसत्ता स्वीकृता। अत एव स धनवान् आसीत् अथवा भविष्यति इत्यादिषु भूते भविष्यत्काले चापि मतुप्प्रत्ययविधानसम्भवः। कैयटः इममेव भावं स्पष्टयन् लिखति यत् न हि पदार्थः कदापि सत्तां मुंचति। पदार्थसत्तामन्तरेण बुद्धावर्थावबोधानाय उच्चारणस्य सम्भवत्वम्, यतो हि सर्वेषां शब्दानां प्रवृत्तौ सत्ता एव कारणम्।[२९]

भर्तृहरिणापि अर्थस्य त्रैकालिकसत्ताया आवश्यकत्वं दर्शितम्। तद्विना शब्दव्यवहार

२३. वा.प. २.३१।
२४. ल.म. पृ. ३६५।
२५. पा.सू. १.३.२।
२६. मा.भा. १.३.२.।
२७. तत्रैव कैयटः।
२८. पा.सू. ५.२.९४।
२९. म.भा. तथा कैयटः ५.२.१४।

एव न शक्यते। वस्तुना सह सत्तायाः कालभेदो न भवति। वस्तुतः भर्तृहरिः न केवलं दार्शनिकः आसीत् अपितु भाषावैज्ञानिकः अपि आसीत्। अतः स भावाभाववादं समन्वयन् लिखति —

**''तस्मात् सर्वमभावो वा भावो वा सर्वमिष्यते।**
**न त्ववस्थान्तरं किञ्चिदेकस्मात् सत्यतः स्थितम्॥**[३०]
**तस्मान्नाभावमिच्छन्ति ये लोके भाववादिनः।**
**अभाववादिनो वापि न भावं तत्त्वलक्षणम्॥**[३१]''

अर्थात् अभाववादिनां मते बुद्धिसत्तासमावेश एव दृग्गोचरी भवति तत् काल्पनिकं मिथ्या वा भवति। ज्ञानरूपं सत्। भाववादिनां मतेन बाह्यवस्तुनोऽतिरिक्तः नहि कश्चिदपि बौद्धपदार्थः भवति। यदपि अस्ति तत् बाह्यमेव। परन्तु भर्तृहरिमतेन अभावस्यैव स्वीकारे तस्य भावः (बाह्यसत्ता) न भवितुं शक्नोति यदि च भावः (बाह्यसत्ता) एव स्वीक्रियते तर्हि तस्य अभावः न स्यात्। भावाभावयोः कस्याप्येकस्य स्वीकारेऽनेकाः विप्रतिपत्तय आगच्छन्ति। अतः भावाभावयोरर्थात् बौद्धार्थबाह्यार्थयोश्चोभयोस्स्वीकारः परमावश्यकः —

**''नाभावो जायते भावो नैति भावोऽनुपाख्यताम् ।**
**एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ॥**[३२]''

गीतायां भगवान् श्रीकृष्णः — ''नासतो विद्यते भावो नाभावो विद्यते सतः।''[३३] सतां निषेधः भवितुं न शक्नोति असतः च निषेधः कथम्? अतः केवलं बाह्यार्थस्वीकारेण नञर्थः निरुद्देश्यः स्यात् —

**''सतां च न निषेधोऽस्ति सोऽसत्सु न च विद्यते।**
**जगत्यनेन न्यायेन नञर्थः प्रलयं गतः॥**[३४]''

भर्तृहरिः यथा केवलं बाह्यार्थस्वीकारं न प्रशंसति तथैव केवलं बौद्धार्थस्वीकारमपि न प्रशंसति। केवलं बौद्धार्थस्वीकारे आपत्तिः दर्शयति यत् अस्ति नास्तीति पदयोरुपयोगिता एव

३०. वा.प. ३.३.३९।
३१. वा.प. ३.३.४२।
३२. वा.प. ३.३.६१।
३३. गीता २.१६।
३४. प.ल. मञ्जूषा।

समाप्ता स्यात्। केवलं बौद्धार्थस्वीकारे 'ओदनं भुंक्ते' इत्यादिव्यवहार: कथं प्रचलेत्? अस्योत्तरे भर्तृहरि: लिखति शब्दात् बौद्ध: अर्थ: ज्ञानरूप:, अत: बौद्ध:, परन्तु तेन ज्ञानेन यस्यार्थस्य निर्देश: क्रियते तेन बाह्यार्थस्यापि ग्रहणं भवति। बौद्धार्थे स्वीकारे असम्भवस्यापि सम्भवत्वं भवति।

**''भोजनाद्यभिमन्यन्ते बुद्ध्यर्थे यदसंभवि।**
**बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते॥[३५]''**

बुद्धिगत: अर्थ: एव शब्दस्यार्थ:, नहि बाह्य:। बुद्धिगत: शब्द: बुद्धिगतस्यार्थस्य बोधं कारयति अर्थात् शब्दस्य अर्थस्य च सम्बन्धा: बौद्धिक एव न हि बाह्य:। बाह्यवस्तूनि भ्रमोत्पादनद्वारा बौद्धार्थेन सम्बद्धानि भवन्ति। विकल्पकात्मकोऽयमर्थ: भ्रमवशात् दृश्यवस्तु-सम्बन्धेन एकाकारतायां यद्यपि बौद्धो भवति तथापि बाह्यवस्तुनाध्यासं प्राप्य बाह्यार्थबोधको भवति इति पुण्यराज:।

**''यो वार्थो बुद्धिविषयो बाह्यवस्तुनिबन्धन:।**
**स बाह्यवस्त्विति ज्ञात: शब्दार्थ: कैश्चिदिष्यते॥[३६]''**

बुद्ध्युपारूढ एव शब्दस्यार्थो न बाह्य: इति पुण्यराज:। अत: एतन्निश्चीयते यत् वाचक: शब्द: बौद्ध एव वाच्यार्थोऽपि बौद्ध एव। तद्यथोक्तं परमलघुमंजूषायाम् — ''वस्तुतो बौद्ध एवार्थ: शक्य:, पदमपि स्फोटात्मकं प्रसिद्धम्। तयोस्तादात्म्यंतत्र बौद्धे वह्न्यादावर्थे दाहादिशक्तिमत्त्वाभावात्। अत एव 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति विकल्पसूत्रं संगच्छते''[३७] इति।

*****

**डॉ. सन्तोषकुमारझा:**
टीजीटी (संस्कृत)
केन्द्रीय-विद्यालय बमनगाची
पोस्ट-सल्किया, जिला-हावडा (प.बं.)

३५. वा.प. ३.३.३३।
३६. वा.प. २.१.३४।
३७. प.ल.म. शक्तिनिरुपणम्।

# इति इति इति

— डॉ. सुधाकरमिश्रः

सत्यमिदं यत् सर्वेषामपि शब्दानामस्ति यत्किञ्चिद् वैशिष्ट्यम्। तेन वैशिष्ट्येन विशिष्टो भूत्वा करोति स्वकीयं कार्यमिति। प्रोक्तं च नागेशेन शब्दशक्तिस्वभावात्। तथैवास्यापि विषय-विन्दोः किं तात्पर्यमिति विचार्यते। प्रथमस्य इतिशब्दस्य तात्पर्यम् इति शब्दस्वरूपम्। द्वितीयः पूर्वस्य सहयोगार्थम्। तृतीयश्च समाप्त्यर्थक इति। इति शब्दस्वरूपस्य किं तात्पर्यमित्यर्थः। यतो हि अस्य शब्दस्य बहुधाप्रयुक्तत्वात्। इतिशब्दस्य एकोनविंशतिसंख्याका अर्थाः दृश्यन्ते। यथा — इति अव्ययम्। १. हेतुः २. प्रकाशनम् ३. निदर्शनम् ४. प्रकारः ५. अनुकर्षः ६. समाप्तिः ७. प्रकरणम् ८. स्वरूपम् ९. सानिध्यम् १०. विवक्षानियमः ११. मतम् १२. प्रत्यक्षम् १३. अवधारणम् १४. व्यवस्था १५. परामर्शः १६. मानम् १७. इत्थमर्थः १८. प्रकर्षः १९. उपक्रमः।

**अत्रायं विशेषः ज्ञेयः —** स्वरूपार्थद्योतकतया त्रिधा। शब्दस्वरूपद्योतकतया, प्रातिपदिकार्थद्योतकतया, वाक्यार्थद्योतकतया चेति। तत्र शब्दस्वरूपद्योतकत्वे यद्योगे न प्रथमा। यथा — कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते इत्यादौ। प्रातिपदिकार्थद्योतकत्वे तु प्रथमा भवति। यथा —

**चयस्त्विषामित्यवधारितं पुरस्ततः शरीरीति विभाविताकृतिम्।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥**[1]

इत्यादौ। वाक्यार्थद्योतकत्वे च न प्रथमा। यथा अत एव गवित्याह भूसत्तायामितीदृशम्।

**न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम्।**
**श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।**
**प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका।**[2]

इत्यादौ। प्रकाशार्थे प्रकरणाद्यर्थे चेतिशब्दस्य समासोपि भवति। यथा इतिहरि। इतिकृत्यम्

१. शिशुपालबधम् १-३।
२. वै.भू.सा. ना.प्र.।

 ISSN - 2231-2129

इत्यादौ।

**पाणिन्यष्टाध्याय्यामितिपदघटितानि यानि सूत्राणि तान्यत्र विचार्यन्ते यथा —**

**सम्बुद्धौ शाकल्येतावनार्षे( पा.सू. १.१.१६ )** अत्र इति शब्दस्य सप्तम्येकवचनस्य इतौ इति रूपम्। शब्दस्वरूपमादाय विभक्तिरुत्पत्तिः। अत्र इति शब्दस्य भेदद्वयं विवेचितमस्ति। लौकिका-लौकिकभेदात्। लौकिकं नाम लोकव्यवहारे प्रयुक्ताः ये शब्दास्तत्र व्यवहृता इत्यर्थः। अलौकिकं तात्पर्यं वैदिकमिति। आर्ष - शब्दस्य तत्रैव प्रसिद्धत्वात्। यथा — ऋग्वेदस्य मन्त्रः वायो इति। विकल्पपक्षे वायविति। गवित्ययमाह इति वाक्ये गो इति अयमाह इति वास्तविकं रूपम्। तत्र भेदविवक्षा अभेदविवक्षा इति पक्षद्वयम्। अत्र अनुकार्यानुकरणयोर्भेदस्या-विवक्षितत्वात्। यदि अनुक्रियमाणस्यानुकरणस्य भेदो विवक्ष्यते, ततोह्यर्थवत्तायां सत्यां स्याद्विभक्तिः, स तु न विवक्ष्यत इति कुतस्तस्याः प्रसङ्गः ? न हीह शब्दशास्त्रे वस्तुतः सत्तैव शब्दसंस्कारस्य प्रधानं कारणम्, किं तर्हि ? विवक्षा च। सा चेह नास्ति। यद्यपि अनर्थकः कथं तर्हि प्रयुज्यते ? प्रयोजनत्वात्। अत्र किं प्रयोजनं अनुकार्यप्रतीतिः। यद्यपि अत्र अभिधानव्यापारो नास्ति, तथापि तदानीमुच्चरितं रूपं सादृश्यादनुकार्यप्रतिपत्तिपरम्। भेदश्च सन्नेव न विवक्षित इति अनुकार्यस्यापशब्देह्यपि नास्यापशब्दत्वम्। (न्यासपदमञ्जरी)

**न वेति विभाषा( पा.सू. १.१.४४ )** अत्र इति पदम् । सूत्रार्थः नेति प्रतिषेधः, वेति विकल्पः, तयोः प्रतिषेधविकल्पयोर्विभाषेति संज्ञा भवति। इतिकरणोह्यर्थनिर्देशार्थः। क्रियते इति करणः, इतिश्चासौ करणश्चेतीतिकरणः। इतिशब्दो हि विपर्यासकृत्। यथा — गवित्यर्थमाहेति गोशब्दात् परतः प्रयुज्यमान इतिशब्दस्तमर्थपदार्थकत्वात् प्रच्याव्यशब्दपदार्थकत्वे व्यवस्था-पयति। तथा नवा-शब्दाभ्यां परः इति शब्दः प्रयुज्यमानः तौ स्वरूपपदार्थकत्वात्। तस्मादर्थ-निर्देशार्थं एवेतिशब्दः कृत इति नवेति यावदर्थौ प्रतीयेते प्रतिषेधविकल्पौ तयोरेव संज्ञाभवति। न नवाशब्दयोः।

**तस्मिन्निति निर्दिष्टे पूर्वस्य ( पा.सू. १.१.६६ )** अत्र इति पदार्थः। इतिकरणं चात्र स्वरूपपदार्थकत्वं निरस्यार्थपदार्थकत्वं तस्मिन्नित्यस्य सम्पादयति, तेनार्थस्यैव ग्रहणं भवति। स त्वर्थोह्यवश्यं येन केनचिच्छब्देन निर्देष्टव्य इति नानार्थकत्वात् सामान्यवाचिना तस्मिन्नित्यनेन पदेन निर्दिष्ट इति। ननु शब्दस्यार्थेन पौर्वापर्यं न सम्भवतीत्यर्थेनासम्भवात् तद्वाचिना सम्भवात् तद्वाचिना शब्देन विज्ञास्यत इत्यदोषः। अत्रेदं चोद्यते यत् — अर्थस्य ग्रहणं यथा स्यात् स्वरूपस्य च ग्रहणं मा भूदित्येवमर्थमिति करणः क्रियते तच्च स्वरूपग्रहणम्, तस्मिन्नणि च

युष्माकास्माकौ इति सूत्रेण सम्भाव्यते, यदि च स्वरूपग्रहणमेव स्यात् तत्रैव पूर्वग्रहणं कुर्यात् न च कृतम्, तस्मादवगम्यते अन्तरेणापि इतिकरणमर्थस्यैव ग्रहणं भविष्यति, न स्वरूपस्येति नार्थस्तेन ? सत्यमेतत्, ये तु मन्दबुद्धय एवं प्रतिपत्तुमसमर्थास्तान् प्रति सुखावबोधनार्थमिति-करणकृतः ।

**तस्मादित्युत्तरस्य ( पा.सू.१.१.६७ )** इति पदम् – यद्यपि अत्र पूर्वसूत्रादेव इतिकरणोह्यनुवर्तयिष्यते, तत् किमर्थः पुनरिहेतिकरणः ? अनेन प्रकारेण पूर्वसूत्रादेकदेशोह्यनुवर्तत इति ज्ञापनार्थः । तेनेतिशब्दवत् निर्दिष्टग्रहणमनुवर्त्ततेत्येतदाख्यातं भवति । केचन वदन्ति इह इतिग्रहणं त्विहावधेरवधिमत्तन्त्रतां निवर्तयति । तेनावधेरेवोत्तरस्य विज्ञायते नावधिमतः ।

**अनुकरणं चानितिपरम् ( पा.सू.१.४.६२ )** इति पदम् । इतिः परो यस्मादिति बहुव्रीहिः । यदि अनुकरणमिति परपदविशिष्टं स्यात्तदा तत्पदं स्वरूपबोधकं भवति । परन्तु यदि इतिपरविशिष्टं नास्ति तदा तस्य गतिसंज्ञा भवति । अत्र इतिपदं पूर्वपदस्य स्वरूपोपस्थापकं भवति ।

**तत्र तेनेदमिति सरूपे ( पा.सू.२.२.२७ )** इतिकरणश्चेह विवक्षितार्थो लौकिकमर्थ-मनुसारयति । अनुगमयति प्रबोधयतीति । तेन ग्रहणं प्रहरणं कर्मव्यतीहारो युद्धं च समासार्थ इति सर्वमितिकरणागभ्यते ।

**तेन सहेति तुल्ययोगे ( पा.सू.२.२.२८ )** अत्र इति पदं सहपदं सहार्थं बोधयति । तेन सह पुत्रेणागतः सपुत्रः ।

**विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ( पा.सू.३.१.४१ )** अत्र इतिकरणः प्रदर्शनार्थः । प्रदर्शनमत्र सूत्रे प्रयुक्तस्य बहुवचनमात्रस्य न ग्रहणमपितु एकवचनस्य द्विवचनस्यापि ग्रहणं भवति, तेन सह सम्पूर्णस्यापि लोट्लकारस्य ग्रहणं भवति ।

**अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद् विदामक्रन्नि-तिच्छन्दसि । ( पा.सू.३.१.४२ )** अत्र इतिकरणः प्रयोगप्रदर्शनार्थः । अन्येह्यपि एवं जातीयाश्छन्दसि वेदितव्या इत्यर्थः ।

**सम्भावनेह्यलमिति चेत् सिद्धाप्रयोगे ( पा.सू.३.३.१५४ )** इतिकरणेनार्थपदार्थक-त्वात् प्रच्याव्यशब्दपदार्थकतयाह्यलंशब्दस्य व्यवस्थापनात् ।

**सख्यशिश्वीति भाषायाम् ( पा.सू.४.१.६२ )** इतिकरणमत्र भिन्नक्रमः । अर्थात् भाषायामनन्तरं प्रयोक्तव्यम् । तेन भाषायां नित्यं सिध्यति क्वचित् वेदेह्यपि । तेन सखी सप्तपदी भव । आ धेनवो

 ISSN - 2231-2129

धुनयन्तामशिश्वीति।

**सास्मिन् पौर्णमासीति ( पा.सू.४.२.२१ )** इतिकरणस्ततश्चेद्विवक्षा भवतीति। विवक्षाह्यर्थे इति।

**सोऽस्यादितिरिति च्छन्दसः प्रगाथेषु ( पा.सू.४.२.५५ )** इतिकरणो विवक्षार्थः।

**तदस्यां प्रहरणमिति क्रीडायां णः ( पा.सू.४.२.५७ )** इतिकरणश्चेद्विवक्षार्थे।

**घञः साह्यस्यां क्रियेति ञः ( पा.सू.४.२.५८ )** इतिकरणो विवक्षार्थः।

**तदस्मिन्नतीति देशे तन्नाम्नि ( पा.सू.४.२.६७ )** इतिकरणो विवक्षार्थः।

**तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ( पा.सू.४.३.६६ )** इतिकरणेन तस्य व्याख्यान इत्येषोह्यर्थः प्रत्यवमृष्यते न तु व्याख्यानप्रत्ययार्थः।

**तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ( पा.सू.४.४.१२५ )** इतिकरणो नियमार्थः।

**तदस्य तदस्मिन् स्यादिति ( पा.सू.५.१.१६ )** इतिकरणो विवक्षार्थः।

**तत्र विदित इति च ( पा.सू.५.१.४३ )** इतिकरणो विवक्षार्थः।

**तदस्मिन्नधिकमिति दशान्ताड्डः ( पा.सू.५.२.४५ )** इतिकरणो विवक्षार्थः।

**तावतिथं ग्रहणमिति लुग्वा ( पा.सू.५.२.७७ )** इतिकरणो विवक्षार्थः।

**इन्द्रियमिन्द्रलिङ्गमिन्द्रमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ( पा.सू.५.२.९३ )** इतिकरणः प्रकारार्थः। सति सम्भवे व्युत्पत्तिरन्यथापि कर्तव्या, रूढेरनियमादिति।

**तदस्यास्त्यस्मिन्निति मतुप् ( पा.सू.५.२.९४ )** इतिकरणो विवक्षार्थः।

**स्थानाद्विभाषा सस्थानेनेति चेत् ( पा.सू.५.४.१० )** इतिकरणो विवक्षार्थः।

**अव्यक्तानुकरणस्यात इतौ ( पा.सू.६.१.९८ )** स्वरूपाश्रितं निमित्तार्थे।

**इत्थं भूतेन कृतमिति ( पा.सू.६.२.१४९ )** इति शब्द अर्थपरः। तेन कृतं नाम क्रियासामान्ये करोतिर्वर्तते। यथा क्रियावचनो धातुः, क्रियायां क्रियार्थायाम् इत्यादौ विशेषाणामपि ग्रहणं भवति।

**साढ्यै साढ्वा साढेति निगमे ( पा.सू.६.३.११३ )** अत्र इति पदं स्वरूपपरम्। तेन वैदिकसाढ्यै साढ्वा साढा इत्यादीनि निपात्यन्ते।

**यस्येति च ( पा.सू.६.४.१४८ )** अत्र इति पदं इकाराकारयोः स्वरूपयोः बोधकः।

**यजध्वैनमिति च ( पा.सू.७.१.४३ )** यजध्वैनम् इति स्वरूपस्य बोधक इति शब्दः।

**इष्ट्वीनमिति च ( पा.सू.७.१.४८ )** इष्ट्वीनम् इति स्वरूपस्य बोधकः।

**ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरुतृवरुतृवरुतृवरूत्रीरुगवलिति क्षरीतिक्षमितिवमित्यमितीति च ( पा.सू.७.२.३४ )** इतिकरणं प्रदर्शनार्थम्। तेन क्वचिदीकारो भवति। रविमभ्यमीति वरणः इत्यपि वैदिकं शब्दं साधयति।

**बभूथाततन्थजगृम्भववर्थेति निगमे ( पा.सू.७.२.६४ )** इतिपदेन वैदिकं वाक्यमात्रं निपात्यते। स्वरूपस्य बोधकमिति यावत्।

**दाधर्ति दर्धति दर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणतसंसनिष्यदत् करिक्रत् कनिक्रदद्भरिभ्रद् दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन् मर्मृज्यागनीन्तीति च ( पा.सू.७.४.६४ )** अत्र इतिकरणमेवंप्रकाराणामन्येषाम्प्युपसंग्रहार्थम्।

**ससूवेति निगमे ( पा.सू.७.४.७४ )** इतिकरणं ससूवस्वरूपबोधनार्थम्।

**नन्वित्यनुज्ञैषणायाम् ( पा.सू.८.१.४३ )** इतिकरणेन त्ववच्छिद्यमानमेकमेवेदं शब्दस्वरूपमिति गम्यते। तात्पर्यमिदं यत् एकमेव ननु इतिशब्दस्वरूपं निपातसंज्ञकमिति। नान्यः कश्चिदिति। इतरव्यावर्तकमितिपदार्थः।

**हेति तितिक्षायाम् ( पा.सू.८.१.६० )** इतिकरणेन हशब्दमात्रस्य निघातकारणत्वमाख्यायते। स्वरूपमात्रप्रधानो हशब्दो निघातस्य कारणं भवतीति। स्वरूपपरो इत्यर्थः।

**आहेति विनियोगे च ( पा.सू.८.१.६१ )** इतिकरणेन अहमात्रस्य निघातकारणत्वमाख्यायते। स्वरूपपरो इत्यर्थः।

**चाहलोप एवेत्यवधारणम् ( पा.सू.८.१.६२ )** अत्र इति पदं अर्थविश्लेषकम्। एव अवधारणविशिष्टमिति।

**वै वावेति चच्छन्दसि ( पा.सू.८.१.६४ )** इतिकरणेन वै वा इत्यनयोर्बोधकम्। नान्येषाम्।

**अम्नरुधरवरित्युभयथा छन्दसि ( पा.सू.८.२.७० )** अम्नस् ऊधस् अवस् इत्येतेषां बोधकः इति शब्दः।

**चिदिति चोपचमार्थे प्रयुज्यमाने ( पा.सू.८.२.१०१ )** चित् मात्रस्य यदि उपमार्थे प्रयोगस्तदैव टेः अनुदात्तः प्लुतो भवति। इति सामर्थ्यात् चित् मात्रस्य ग्रहणम्। नान्येषाम्।

**उपरिस्विदासीदिति च ( पा.सू.८.२.१०२ )** उपरिस्विदासीत् इति मात्रस्य ग्रहणं यथा स्यात्। नान्येषाम्।

**द्विस्त्रिश्चतुरिति कृत्वोर्थेक् ( पा.सू.८.३.४३ )** इति सामर्थ्यात् एते शब्दाः अर्थपराः। तेन

कृत्वोर्थे वर्तमानानामित्यर्थः संगच्छते।

अनितेः ८.४.१९ अत्र श्तिप् इत्यस्य निर्देश अस्ति। न तु इति इत्यस्य। तेन अन् धातुविशिष्टस्य ग्रहणं भवति।

**इतिपदघटितानां पदानामपि एकवाक्यत्वव्यवहारविचारः —**

**इति संवलितं यत्र व्याख्येयस्य वपुः स्थितम्।**
**तत्र श्रोत्रोपस्थितं तदितिना परिमृश्यते॥**[3]

**श्लोकार्थः** यथा — इतिसंविभ्याहृतं पचतीतिवाक्यस्य या आनुपूर्वी श्रावणप्रत्यक्ष-विषयीभूतं पचतीति वाक्यमुपस्थितिविषयीक्रियते। इतिपदद्वयस्य पचति पाकं करोतीति शब्दस्वरूपोह्यर्थः।

**व्याख्यानमित्थं —** यत्र पचतीति वाक्यं करोतीत्यर्थं एवं व्याख्यानग्रन्थः, तत्रेतिद्वयं श्रोत्रोपस्थितस्य पचतिपदस्य पाकं करोतीति वाक्यस्यच परामर्शकम्। तदर्थस्तु प्रतिपाद्यप्रति-पादकभावसंसर्गेणार्थेह्यन्वेतीत्यर्थाद् व्याख्यानव्याख्येययोरेकार्थकत्वं लभ्यते।

**इतिपदं कथं पूर्वार्थं परामृशतीति।** इतिशब्दः सर्वनामप्रकृतिकताय बुद्धिस्थप्रकारेण परामृशति। बुद्धिश्च क्वचिद्यच्छब्दजन्या तदिदमादिसर्वनामपरामर्शबीजम्। यथा यो धूमवान् सोऽग्निमानिति। प्रोक्तं च —

**गवित्याहेत्यादिवाक्ये श्रोत्रेणोपस्थिते गवि।**
**इतिशब्दपरामृष्टे ज्ञेया वचनकर्मता॥**[4]

अयमितिशब्दः क्विचत् पूर्ववाक्यरूपप्रक्रमजन्या, यथा अभून्नृपो दशरथ इत्युदाहृतः। सोह्यध्यैष्ट वेदान् इति। क्वचिद् विद्यमानानुभवात्मकप्रसिद्धिरूपा। यथा घटं दृष्ट्वा गोपदं श्रुत्वा वदति इममानयश्रृणु वेति। क्वचित् स्मरणरूपा, यथा ते लोचने क्षिपति स्म इति।

गवित्याह इत्यादौ तु इतिशब्दपरामर्शबीजमनुभवं सम्पादयुतं प्रयुक्तो गोशब्दो न वृत्तिमानिति न प्रातिपदिकसंज्ञः। नन्वेवमितिशब्दस्य कर्म्मत्वाबोधकतया तद्बोधकपदान्तरविरहाच्च कथमुच्चारणे गोपदकर्मत्वस्य लाभ इत्यत आह —

**इतिशब्दान्तरन्तु लुप्तापि प्रतिसंहिता।**

---

३. पदवाक्यरत्नाकरः १९।

४. पदवाक्यरत्नाकरः १५।

**द्वितीया कर्म्मतां ब्रूयादिदिर्वा वचनान्वयी।।**[५]

गोशब्दार्थकेतिशब्दानन्तरं द्वितीया लुप्तप्रतिसंहिता वाच्यर्थान्वितां कर्म्मतामभिधातुं प्रभवति। अव्ययानां नित्यप्रथमान्तत्वे वा इत्यर्थस्य क्रियाकर्म्मभावसंसर्गेण साक्षाद्वचनान्वयोह्यपि सम्भवति। यथा दृष्टो हि नारद इति पश्यतीत्यत्र निपातोपात्ताया: कर्म्मताया: कर्म्मणो वा, स्तोकमेव पचतीत्यत्रैवकारेण बोधितस्य स्तोकान्यतादात्म्यव्यवच्छेदस्य कुटिलं न गच्छतीत्यत्र नञा प्रतिसंहितस्य कुटिलान्योन्याभावस्य च दर्शनपाकगमनेषु भेदान्वय:।

इति शब्दस्य सामर्थ्यमीदृशं यत् आसाधुष्वपि साधुत्वमुपपादयति। प्रोक्तं च —

**अत एव गवित्याह भूसत्तायामितीदृशम्।**
**न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम्।।**[६]

इतिशब्दस्य साहित्यिका: अलंकारार्थे, पादपूर्त्यर्थे, छन्दसाधनायां, प्रयोगं कुर्वन्ति। तत्रैव दाक्षिणात्या: प्रतिवाक्यं इतिपदं संयोजयन्ति। तेषां कथनपरम्परा एवमेव। इदमितिपदं बहुधा संस्कृतजगति प्रयुक्तो भवति।

**सहायकग्रन्थसूची —**

१. पाणिनीय सूत्राष्टाध्यायी आचार्यसत्यनारायणशास्त्री चौखम्भाकृष्णदास अकादमी वाराणसी २००८।
२. पदवाक्यरत्नाकर: गोकुलनाथोपाध्याय: सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी १९९८।
३. वैयाकरणभूषणसार: चन्द्रिकाप्रसादद्विवेदी चौखम्बासुरभारती, वाराणसी २००१।
४. काशिका न्यासपदमंजरीसहिता जयशंकरलालत्रिपाठी ताराबुकएजेन्सी वाराणसी २०००।
५. वैयाकरणसिद्धान्तकौमुदी चत्वारोभागा: भट्टोजिदीक्षित: मोतीलालवनारसीदास: २००५।

*****

**डॉ. सुधाकरमिश्र:**
श्रीसीतारामवैदिकादर्शसंस्कृतमहाविद्यालय:
७/२ ए, पी.डब्ल्यु.डी. रोड,
कोलकाता–७०००३५

५. पदवाक्यरत्नाकर: १६।
६. बैयाकरणभूषणसार: २७।

# व्याकरणस्य दर्शनत्वचिन्तने वाक्यपदीयकाराणां हार्दम्

**— डॉ. मनोजकुमारद्विवेदी**

यद्यपि पाणिनीयव्याकरणं प्रक्रियाप्रधानं मन्यन्ते, तथापि प्रथमतः अध्येतारः प्रक्रियायामेव विदधति तामेव जानन्ति, किन्तु प्रक्रियापरिष्काराय अव्याप्त्यतिव्याप्त्यसम्भव-दोषनिराकरणाय च परिष्कारपक्षोऽपि वर्तते। व्याकरणस्य तृतीयः पक्षः दर्शनपक्षः वर्तते। प्राधान्येन व्याकरणस्य तं पक्षं भर्तृहरिः नितरां प्रतिपादयति।

भर्तृहरेराचार्यस्य मतानुसारेण संसारोऽयं शब्दस्वरूपस्य ब्रह्मणो विवर्तः। विवर्तलक्षणम् यथा —

**अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदीरितः।**
**सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः॥**[१]

शुक्तौ रजतविवर्तः। दुग्धं दधि भवति इति परिणामः। अधिष्ठानसमसत्ताककार्यापत्तिः परिणामः, अधिष्ठानविषमसत्ताककार्यापत्तिः विवर्तः इत्यस्ति लक्षणम्। अर्थात् अतात्त्विकाऽन्यथा भावो विवर्तः। तादृश एव विवर्तोऽयं संसारः शब्दस्येत्याह हरिः —

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[२]

अर्थात् यद् आदिनिधनम् उत्पत्तिविनाशरहितम्, अत एव नित्यम्, अक्षरं व्यापकं शब्दतत्त्वं शब्दस्वरूपं तद् ब्रह्म। यतः जगतः संसारस्य प्रक्रिया उत्पत्तिस्थितिलयाऽर्थभावेन घट-पटाद्यात्मना विवर्तते अतात्त्विकाऽन्यथाभावापन्नं भवति। ईश्वरं नित्यं व्यापकं ब्रह्मैव अर्थभावेन नदीपर्वतगोघटपटादिरूपेण विवर्तते। अतात्त्विकाऽन्यथाभावापन्नं भवतीति भावः।

अतः जगतः स्वरूपविज्ञानाय शब्दस्वरूपपरिज्ञानमावश्यकं भवति। लघुनोपायेन

१. वेदान्तसारः (सदानन्दः)।
२. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ०१)।

शब्दस्वरूपपरिज्ञानं तु व्याकरणशास्त्राऽन्तरेण नैव सम्भवति। शब्दशास्त्रस्य प्रत्यक्षाप्रत्यक्षोभयफलवत्वेन एतत् उत्तमं तप कथ्यते। तस्मादेव शब्दब्रह्मणः प्रत्यासन्नं भवति व्याकरणम्। संसारोऽयं शब्दस्यैव परिणामश्चेत्याह भर्तृहरिः —

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥[३]**

अयम्भावः — अयं सर्वोऽपि वाच्यवाचकभेदभिन्नः संसारः शब्दस्य सूक्ष्मस्य वाक्तत्त्वस्य परिणामः इत्याम्नायविदः वेदविदो विदुर्जानन्ति, न तु वयं कल्पयामः। अतः प्रथमं सर्गादौ विश्वमेतत् छन्दोभ्यः एव व्यवर्तत व्यजायत इति भावः। यद्यपि इयं जिज्ञासा समुदिता भवति यत् अनादिनिधनम् इत्यस्मिन् श्लोके जगत् शब्दविवर्तरूपतयोक्तम् परञ्च अनेन श्लोकेन परिणामतया उच्यते। तत्र कथं द्वयोर्वादयोः समन्वयः, इत्यत्रोच्यते यत् परारूपां वाचमुद्दिश्य विवर्तवादः, पश्यन्त्याख्यां वाचमुद्दिश्य परिणामवादः इति ज्ञाप्यते।

भर्तृहरेराचार्यस्य मते शब्दाः नित्याः। तदुक्तं हरिणा —

**नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः।**
**सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः॥[४]**

अष्टाध्यायीसूत्राणां वार्तिकसूत्राणां महाभाष्यस्य च प्रणेतृभिः पाणिनिकात्यायनपतञ्जलिभिः शब्दाः शब्दार्थाः शब्दार्थसन्बन्धाश्च नित्याः समाम्नाताः इति। तत्र अष्टाध्यायी सूत्रकृता पाणिनिना ''पृषोदरादीनि यथोपदिष्टम्''[५] इत्यादिसूत्रैः वार्तिककृता कात्यायनेन ''सिद्धे शब्दार्थसम्बन्धे''[६] ''सिद्धन्तु नित्यशब्दत्वात्''[७] इत्यादिवार्तिकैः महाभाष्यकृता पतञ्जलिना ''सङ्ग्रहे एतत् प्राधान्येन परीक्षितं नित्यः शब्दः''[८] नित्येषु शब्देषु ''सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते''[९] ''एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो

३. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - १२०)।
४. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - २३)।
५. पाणिनि अष्टाध्यायी ०६/०३/१०९।
६. व्याकरणमहाभाष्यम् पस्पशाह्निकम् (का.वा.०१/०१)।
७. व्याकरणमहाभाष्यम् (का.वा.०१/०३)।
८. सङ्ग्रह नामक ग्रन्थ, व्याडिकृत पृष्ठ सं. ५२।
९. व्याकरणमहाभाष्यम्।

युगपत्सर्वयागेष्वङ्गं भवति'' प्रभृतिभभाष्यै: शब्दानां नित्यत्त्वम् उक्तम्। परञ्च केचन दार्शनिका: शब्दानामनित्यत्वमुक्तवन्त:। शब्दानित्यत्ववादिषु दार्शनिकेष्वपि शब्दोत्पत्तिविषये मतत्रयं वर्तते। अर्थात् शब्दानित्यत्वपक्षे शब्दोत्पत्तिविषये केचन वायो: शब्दत्त्वं, केचन च ज्ञानस्य शब्दत्त्वं मन्यन्ते। सर्वेषामपि मतानि विचार्य इदानीं शब्दविषये वायो: शब्दत्त्वं हरिणा उक्तम् —

**वायोरणूनां ज्ञानस्य शब्दत्त्वापत्तिरिष्यते।**
**कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थित:॥**[१०]

अपि च शिक्षाकाराभिमतां वायो: शब्दभावापत्तिमाह —

**लब्धक्रिय: प्रयत्नेन वक्तुरिच्छानुवर्तिना।**
**स्थानेष्वभिहितो वायु: शब्दत्त्वं प्रतिपद्यते॥**[११]
**तस्य कारणसामर्थ्याद्वेगप्रचयधर्मण:।**
**सन्निपाताद्विभज्यन्ते सारवत्योऽपि मूर्तय:॥**[१२]

अत्रेदं तत्त्वम् — वक्तुरिच्छानुवर्तिना विवक्षाजन्येन प्रयत्नेन प्रेरितो वायुरूर्ध्वमाक्रमन् उर: कण्ठताल्वादिषु स्थानेष्वभिहित सन् शब्दाकारतया परिणमति। स्वक्रियाकारणस्य प्रयत्नविशेषस्य सामर्थ्याद् वेगरूपधर्मवत: प्रचय: घनीभावस्तद्धर्मवतश्च तस्य वायो: स्थानेषु सन्निपातात् सारवत्योऽपि - घनीभावेन कठिना अपि मूर्तय: विभज्यन्ते -भिद्यन्ते अर्थात् पाषाणसन्निपातेन लोष्ठवद् विशीर्यन्ते इति भाव:।

अपि च जैनमताभिमतम् अणूनां शब्दभावापत्तिमाह —

**अणव: सर्वशक्तित्वाद् भेदसंसर्गवृत्तय:।**
**छायातपतम: शब्दभावेन परिणामिन:॥**[१३]
**स्वशक्तौ व्यच्यमानायां प्रयत्नेन समीरिता:।**
**अभ्राणीव प्रचीयन्ते शब्दाख्या: परमाणव:॥**[१४]

---

१०. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - १०७)।
११. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - १०८)।
१२. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - १०९)।
१३. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ११०)।
१४ वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - १११)।

अणवः रूप-रस-गन्ध-स्पर्श-शब्द-परमाणवः सर्वशक्तित्वात् नानाजातीयस्वकार्यानुकूलशक्तित्वात् छायाऽऽतपतमः शब्दभावेन परिणामिनः तत्र नीलरूपपरमाणवः छायातमोरूपतया, शुक्लरूपपरमाणवः आतपरूपतया, शब्दपरमाणवः स्थूलरूपतया परिणमन्ति। भेदो विभागः संसर्गः संयोगः तयोर्वृत्तिः येषु ते वा भेदसंसर्गवृत्तयः अणवः परमाणवः यदाऽऽदृष्टविशेषनिमित्तात् संयुच्यन्ते तदा परमाणुरूपतया अवतिष्ठन्ते।

शब्दाख्याः परमाणवः स्वशक्तौ अदृष्टसहकृतप्रयत्नेन व्यज्यमानायां कार्योन्मुख्याः परमाणवः स्वशक्तौ अदृष्टसहकृतप्रयत्नेन व्यज्यमानायां कार्योन्मुखमापद्यमानायां प्रयत्नप्रेरितप्राणवायुना समीरिताः संह्रियमाणाः वायुप्रेरितानि अभ्राणीव प्रचीयन्ते इति भावः।

अपि च ज्ञानस्य शब्दत्वम् —

**अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥**[१५]

स्थूलशब्दभावापत्तौ शब्दस्य क्रममाह —

**स मनोभावमापद्य तेजसा पाकमागतः।**
**वायुमाविशति प्राणमथासौ समुदीर्यते॥**[१६]
**अन्तः करणतत्त्वस्य वायुराश्रयतां गतः।**
**तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥**[१७]
**विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।**
**प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते॥**[१८]

अयं शब्द एव अन्तरो ज्ञाता वृत्तिविशिष्टमन्तःकरणं वर्तते। सः सूक्ष्मवागात्मना सूक्ष्मशक्तिरूपे स्थितः सन् स्वस्य रूपस्य प्रकाशनाय स्थूलशब्दभावेन विवर्तते भासितो भवति। वृत्तिविशिष्टमन्तः करणं ज्ञानरूपमेव। तदेव शब्दाकारतया परिणमति। अत एव शब्दो ज्ञानस्य परिणाम इति स्वीकुर्वन्ति वैयाकरणाः। स एव ज्ञाता अर्थबोधनेच्छया मनोभावम्प्राप्य जठराग्नि-

१५. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ११२)।
१६. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ११३)।
१७. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ११४)।
१८. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ११५)।

ISSN - 2231-2129

रूपेण तेजसा पाकमागतः सन् प्राणवायुमाविशति–अभिहन्ति इति भावः। अभिघातानन्तरम् असौ स वृत्तिमनोयुतः प्राणः ऊर्ध्वगमनाय प्रेर्यते। ततोऽन्तःकरणतत्त्वस्य मनसः आश्रयतां गतः प्राणवायुः मनोधर्मेण दाहेन ज्ञानरूपशब्देन वा समाविष्टः तेजसा एव जठराग्निसहकारेण विवर्तते=बहिः शब्दरूपो भवति। दाहवशादेव प्राणः सवृतिकमनोरूपान्तःकरणयुतः स्वात्मनो ग्रन्थीन् कादिवर्णस्वरूपान् विभज्य पृथक् अवस्थाप्यभिन्नैः श्रूयमाणैः ध्वनिभिः वर्णानभि-व्यज्य वर्णेष्वेवोपलीयते।

अयमेव क्रमः शब्दोत्पत्तौ पाणिनिशिक्षायाम् उक्तः —

**आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥**[१९]

भर्तृहरेराचार्यस्य मतानुसारेण शब्दस्य द्वैधं रूपं दृश्यते। तद्यथा —

**द्वावुपादानशब्देषु शब्दौ शब्दविदोविदुः।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुच्यते॥**[२०]

अर्थात् उपादानशब्देषु वाचकशब्देषु मध्ये व्यङ्ग्यव्यञ्जकरूपौ द्वौ शब्दाविति वैयाकरण-सिद्धान्तः तत्रैको ध्वनिरूपः स्फोटरूपाणां शब्दानां प्रकाशकः, अपरो व्यङ्ग्यरूपः स्फोटोऽर्थे अर्थबोधनाय प्रयुच्यते। तदुक्तं तपरसूत्रे भाष्ये —

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।**
**अल्पो महाश्च केषाञ्चिदुभयं तत्स्वभावतः॥**[२१]

स्फोटो व्यङ्ग्यः ध्वनिः व्यञ्जकः। प्राकृतवैकृतभेदेन ध्वनिः द्विविधः। प्राकृतो ध्वनिः स्फोटव्यञ्जकः, वैकृतस्तु द्रुतादिभेदजनकः। तदुक्तं हरिणा —

**शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।**
**ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥**[२२]

---

१९. पाणिनि-शिक्षा।
२०. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ४४)।
२१. व्याकरणमहाभाष्यम् ०१/०१/०९ सू.६०।
२२. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ७७)।

वैकृतास्तु ध्वनयः प्राकृतध्वनिभिः शब्दस्याभिव्यक्तेरूर्ध्वं जायमाना द्रुतादिवृत्तिभेदेन कारणानि भवन्ति। तैः द्रुतविलम्बितवृत्तिभेदैः स्फोटस्तु न भिद्यते इति भावः। कालरहितेऽपि स्फोटे प्राकृतध्वनिगतकालस्य स्फोटे आरोपात् मात्रादिकालः उपाधिभेदेन वृत्तिभेदश्च प्रतीयते। तदुक्तं हरिणा —

**स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः।**
**ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते॥**[२३]
**स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु।**
**प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते॥**[२४]

अत्र चिद्रूपज्ञानस्य नित्यत्वादभिन्नकालस्याऽपि स्थानकरणाभिघातजन्यस्वाभिव्यञ्जक-ध्वनिकालानुपातिनो ग्रहणोपाधिभेदेन गृह्यते। यद्वा बुद्धिस्तस्य भेदेन अभिव्यञ्जकद्वारा प्रतीयते। ध्वनयः तद्रूपोपाधिभेदेन वस्तुतोऽभिन्नस्यापि स्फोटस्य वृत्तिभेदं ह्रस्वत्वादिभेदं प्रचक्षन्ते शब्दैक-त्ववादिनः आचार्याः। शब्दानां नित्यत्वपक्षे ह्रस्वदीर्घप्लुतादिषु कालभेदप्रयुक्तेषु ध्वनिधर्मेषु स्थितेषु ह्रस्वत्वादिधर्मप्रयुक्ताद् ध्वनेः स्वभावभेदात् शब्दाभिव्यक्तिनिमित्तस्य प्राकृतस्य ध्वनेः कालः स्फोटात्मकशब्दस्य इति उपचर्यते। अतः ह्रस्वदीर्घप्लुतादिषु उच्चारणीयेषु वर्तमानः सः शब्दस्य स्फोटस्य नित्यत्वेऽपि शब्दे अध्यारोप्यते।

एवञ्च उभयविधफलप्रसाधकम् एतद् व्याकरणदर्शनम्। व्याकरणदर्शने तु शब्दो ब्रह्मत्वेन स्वीकृतः वर्तते। अतः शब्दब्रह्मणः प्राप्तेः सरलः उपायः व्याकरणम् एव इति भर्तृहरिणा नानाविधप्रकारेण तत्त्वावबोधः उपपादितः।

*****

**डॉ. मनोज कुमार द्विवेदी**
सहायकाचार्यः (व्याकरणविभागः)
श्रीरामसंस्कृतमहाविद्यालयः
जानकीकुण्ड, चित्रकूट (सतना मध्यप्रदेश)।

२३. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ७५)।
२४. वाक्यपदीयम् (ब्रह्मकाण्डम् कारिका संख्या - ७६)।

# इको यणचीति सूत्रसमीक्षणम्

— डॉ. अशोककुमारमिश्रः

पाणिनिविरचिताष्टाध्यायां नैकविधानि शास्त्राणि समुपलभ्यन्ते, तथा हि —

**संज्ञा च परिभाषा विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधम् सूत्रलक्षणम्।**

तेषु मध्ये अन्यतममिदम्। ''इको यणचि[1]'' इति विधिसूत्रं वर्तते, प्रकृते शोधपत्रे प्रौढमनोरमा–लघुशब्देन्दुशेखर–महाभाष्यादीन् ग्रन्थान् समाश्रित्य विचाराः संपादयिष्यन्ते।

भट्टोजिदीक्षितविरचितसिद्धान्तकौमुद्यामच्सन्धिप्रकरणस्यादिमं सूत्रमिदं वर्तते, सर्वप्रथममच्सन्धिरित्यत्र एव शंका जायते यत् चकारस्य कुत्वं कथन्न, तथा हि ''नाऽज्झलौ[2]'' इति सूत्रप्रसङ्गे ''कथमनच्त्वम्'' इति प्रयोगे सिद्धमनच्त्वात् इति वार्तिके ''अल्पाच्तरम्'' इति सूत्रे च कुत्वस्य चुत्वस्य च अभावेन एकः नियमः समायाति यत् **सुप्सकाराव्यवहित–पूर्वत्वाभाववतो अचः कुत्वचुत्वयोरभावः** इति, तथा च उपर्युक्तस्थलेषु दोषः नास्ति। किञ्च उपर्युक्तसमस्यामालक्ष्य पदान्तकार्यस्य–अभावो बोध्यते इति शेखरकृता यदुक्तं तन्न साधु, यतो हि अजनुनासिक इत्यत्र जश्त्वानापत्तिः स्यात् अतः ''**असति बाधके प्रमाणानां सामान्ये पक्षपातः**[3]'' इति नियमाभ्युपगमात् विशिष्टमेव ज्ञापकं वरम्। सकार इति दानेन अचो अक्षु इत्यादिभाष्यप्रयोगाः साधुत्वं भजन्ति। अथ च वर्णसमाम्नाय अचां प्रथमोल्लेखः विद्यते, अतः आदौ अच्सन्धेः निरूपणं विद्यते। तथा चाह ''**इको यणची**''ति त्रिपदात्मकं सूत्रमिदम्, इकः इति षठ्यन्तम्, अत्र सम्बन्धार्थिका शेषे षष्ठी वर्तते। सम्बन्धश्च द्विष्ठो भवति। तथा च षष्ठी तस्यार्थो विशेषणम् प्रकृते इक्पदार्थम् इकारादिभिर्विशेषणम्। विशेष्यपदं सूत्रे नास्ति। अत्र विशेष्यपदाभावात् सम्बन्धस्य निर्णयो न जायते तद्यथा — राज्ञः इति उच्चारणे नैके सम्बन्धाः प्रकटीभवन्ति। तद्धि–स्वस्वामिभावः, जन्यजनकभावः, सेव्यसेवकभावश्च। तदनु पुत्र इति उच्चारणे सत्येव जन्यजनकभावस्य सम्बन्धस्य निश्चयात्मिका प्रतीतिः जायते।

१. पा.सू. ६.१.७७।
२. पा.सू. १.१.१०।
३. प्रौढमनोरमा (शब्दरत्न) - अर्थवत्सूत्रम्।

तथैव इकः इति कथनेन यदि समीपो विशेष्यः तदा अवधित्वम्, यदि अवयवो विशेष्यः तदा निरूपितत्वम्, यदि स्थानं विशेष्यं तदा विषयविषयीभावः इत्यादयः नैके सम्बन्धाः जायन्ते। इत्थं संशयग्रस्तत्वादेव ''षष्ठी स्थानेयोगा[४]'' इति परिभाषा अवतरति, परिभाषाबलात् तत्र स्थानपदार्थ एव विशेष्यो नान्यः। अथ च व्यक्तिपक्षे इक्पदोपस्थाप्योकारादिर्भिदीर्घादिग्रहणं न स्यात् '**उच्चारितः एव प्रत्यायकः शब्दः नानुच्चारितः**[५]' इति नियमाभ्युपगमात् कथं भवेत् अत्र पुनः प्रश्न जागर्ति यत् चेत् उच्चारणं बोधं प्रति कारणं, तदा रहसि पुस्तकमीक्षमाणः जनः बोधं न प्राप्नुयात् तन्न, तत्रापि जनस्य सूक्ष्मोच्चारणसत्त्वात्। पुनश्च दीर्घादीनामग्रहणम् स्यादेव इत्याशंक्य उत्तरयति यत् 'प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढालक्षणा[६]' प्रत्याहारः गृह्यते यत्र तत् प्रत्याहारग्रहणम् तेषु प्रत्याहारग्रहणेषु अर्थात् प्रत्याहारबोधकपदेष्वित्यर्थः तद्वाच्याः इकारादयः तद्वाच्याः अष्टादशभेदाः गृह्यन्ते। निरूढा लक्षणा इत्युक्ते अनादितात्पर्यवती लक्षणा निरूढा लक्षणा। इत्थं लक्षणास्वीकारे ''अणुदित्[७]'' सूत्रेण दीर्घोकारादिभिः बोधे अपि तेषामिक्पदवृत्त्या अनुपस्थितत्वेन तदुत्तरप्रत्ययार्थास्य नान्वयापत्तिः इत्यपास्तम्। पुनरत्र प्रश्नः उदेति यत् यदि लक्षणया एव ग्रहणं स्यात् तदा ''अणुत्सिवर्णस्य चाप्रत्यय'' इत्यस्य नैरर्थक्यं स्यात् इति तन्न, अणक-इत्यादिषु उच्चारितेषु-आद्यवर्णेषु ग्रहणकशास्त्रस्य सार्थक्यम्। तदपि न यथा प्रत्याहारस्य अन्यवर्णानां ग्रहणं लक्षणया भवति तथैव आदिवर्णानामपि लक्षणया एव ग्रहणं स्यात् इति तन्न, ''अस्य च्वौ'' इत्यादौ ग्रहणकशास्त्रस्य चारितार्थ्यम् अर्थात् प्रत्याहारग्रहणं भवति यत्र तत्रैव लक्षणायाः अवसरः समागच्छति, 'अच्य च्वौ' इति सूत्रे प्रत्याहारो गृहीतो नास्ति अतः तत्र लक्षणाप्रसङ्गः नास्ति, तस्मात् सूत्रस्य सार्थक्यं सूपपन्नम्। नच वर्णसमाम्नायस्थाकारात् भिन्नः सूत्रस्थः अकारः, अतः भेदेनाच्त्वाभावः तस्मात् शास्त्राणां स्वीयोद्देश्यतावच्छेदकावच्छिन्ने प्रवृत्तिरिति स्वाभाविकनियमाभ्युपगमात् प्रकृते (अस्य चौ) कथं प्रवृत्तिरिति तन्न, अणुदित् सूत्रं लक्ष्यतावच्छेदकज्ञानार्थमत्यन्तमावश्यकम्, अर्थात् तद्वाच्य-वाच्यत्वरूपा लक्ष्यतावच्छेदकधर्मस्य लक्ष्येषु ज्ञानार्थमित्यर्थः। अन्यथा लक्ष्यतावच्छेदकज्ञाना-भावे लक्षणायाः अप्रवृत्तिः स्यात्, किञ्च ''प्रत्याहारग्रहणेषु'' इति वाक्यघटकीभूतः प्रत्याहार-शब्दः उपलक्षणस्य तद्वाच्यवाच्यस्य बोधकः एवम् ''अच्य च्वौ'' इति सूत्रेऽपि अकारस्य स्वसदृशवाच्येषु लक्षणा करणीया। सा लक्षणा विधीयमानातिरिक्तविषये एव प्रवर्तते। एतस्मात्

४. पा.सू. १.१.४९।
५. प्रो.म. (इको यणचि सूत्रम्) (शब्दरत्न)।
६. प्रौ.म. इको यणचि (मूल)।
७. पा.सू. १.१.६९।

कारणादेव ''त्यदादीनाम्[८]'' इत्यादिषु लक्षणा न प्रवर्तते। अत्र लक्षणायां बीजम् ''दीर्घाज्जसि च[९]'' इति सूत्रमेव। अर्थात् चेत् लक्षणा न स्वीक्रियते दीर्घाणां ''प्रथमयोः पूर्वसवर्णः[१०]'' इति सूत्रेण दीर्घ एव न प्रसक्तः स्यात् 'प्राप्तौ सत्यां निषेधः' इति वचनेन प्राप्तसूत्रस्य वैयर्थ्यं स्यात् तद्व्यर्थीभूय लक्षणां बोधयति। लक्षणां न स्वीकुर्मश्चेत् लू-धातुघटकान्त्यस्योकारस्य यणादेशोऽपि न संगच्छेत्, तस्मात् सूत्रनिर्देशात् लक्षणां बोधयामः। इत्थम् 'इको यणचि' इति सूत्रे दीक्षितेन लिखितं यत् ''**तेनेक्शब्देन षट्षष्टिर्गृह्यन्ते, यण्शब्देन सप्त। भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रहणात्। अतो नास्ति यथासंख्यम्**[११]'' अर्थात् लक्षणास्वीकारेण इक्पदेन षट्षष्टिवर्णाः बोध्यन्ते, पुनश्च वर्णानां विषये पक्षद्वयम्। गुणाः भेदकाः अथ च गुणाः अभेदकाः, यद्यपि यणः विधीयमानत्वात् सवर्णग्राहत्वं न प्राप्नोति, तथापि अभेदकत्वपक्षमादाय यवला द्विधा इति स्वीकारात् तेषां सप्तैव संख्या, अत्र मूले ग्रन्थकर्तुः सवर्णानां ग्रहणे तात्पर्यं नास्ति, अपितु उभयोः विषमसंख्यायामेव तात्पर्यम्। अत एव शब्दरत्नकारेण ''तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः।'' इति उल्लिखितम्। पुनः शङ्का जायते यत् स्वशक्यसम्बन्धो लक्षणा इति स्वीकारात् लक्ष्यार्थबोधात् प्राक् शक्यार्थबोधः आवश्यकः। एवञ्च प्राग्भाविनं शक्यार्थबोधमादाय ''यथासंख्यसूत्रस्य प्रवृत्तिः स्यादिति वाच्यन्तन्न ऋकारलृकारभ्यां त्रिंशत् वर्णानामुपस्थितौ कदाचित् रेफादेशस्य वर्णानाम् ऋवर्णानां लादेशस्य चापत्तिः।'' अतः यथासंख्यन्नोचितम्। तस्मात् 'स्थानेऽन्तरमः' इति सूत्रस्यैव विषयः। अत्र भाष्यकारीयः सिद्धान्तः इत्थं वर्तते — ''स्थानेऽन्तरतमः'' इत्यस्मिन् सूत्रे किमुदाहरणम् इको यणचि, दध्यत्र, मध्वत्र। अत एव शब्दरत्नकारः मूलकारस्याशयमुपवर्ण्य भाष्यकारीय - सिद्धान्तं प्रस्तौति। परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम्। नहि तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाग्रहात्। एवं च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा। एवं ''अइउण्'' इत्यादावपि जातिनिर्देश एवोचितः, अर्द्धजरतीयस्यानौचित्यात्। अर्थात् वर्णसमाम्नाये सर्वत्र जातिपक्ष एव स्वीकार्यः। जातौ शक्तिः व्यक्तौ वा इत्यत्र नैके पक्षाः वर्तन्ते। तत्र केचन जातौ शक्तिम् अभ्युपगच्छन्ति, केचन व्यक्तौ शक्तिं स्वीकुर्वन्ति, तत्र व्यक्तेः आनन्त्याद् लाघवाच्च जातौ एव शक्तिः, किन्तु तथा स्वीकारे घटमानय इत्यत्र आनयनक्रियायां जातेः अन्वयः भवितुं नार्हति, अमूर्त्तत्वात्

८. पा.सू. ७.२.१०२।
९. पा.सू. ६.१.०५।
१०. पा.सू. ६.१.१०२।
११. पा.सू. १.३.१०।

अतः स पक्षः नोचितः तन्न व्यक्तेः बोधस्तु तत्र लक्षणया समुपाजायते। अथ च व्यक्तौ शक्तेः-अङ्गीकारे प्रतिव्यक्तिशक्तिग्रहस्तु आवश्यकतया आनन्त्यदोषः प्रसज्येत् तन्न व्यक्तौ शक्तिं स्वीकृत्य तदितरव्यक्तौ स्वसमवेत-समवायित्व-सम्बन्धेन शक्तिः कल्पनीया, तद्धि स्वं वाच्या व्यक्तिः, तत्समवेता तद्वृत्तिः, जातिः तत्समवायित्वं व्यक्त्यन्तरे। तथैव जातौ शक्तिकल्पने स्वाश्रयत्वमेव सम्बन्धः। स्वं वाच्या जातिस्तदाश्रयत्वं व्यक्ताविति। एवञ्च लक्षणायाः गौरव-ग्रस्तत्वात् लाघवात् जातौ एव शक्तिः कल्पनीया। अत एव भट्टेनोक्तम् —

**अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः।**
**आकृतेः प्रथमज्ञानात् तस्या एवाभिधेयता॥**
**आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।**
**शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥**

इत्थं निष्कर्षतस्तु जातिपक्षः व्यक्तिपक्षश्च उभावपि शास्त्रसिद्धौ वर्तेते। व्यक्तिपक्षे एव प्रकृतग्रन्थः सङ्गच्छते, अथ च तस्मिन्नेव पक्षे अणुदित् सूत्रम् एकशेषारम्भश्च संघटेते। इत्थम् अच्प्रत्याहारे व्यक्तिपक्षः हलादिप्रत्याहारे जातिपक्षः इति नोचितः। सर्वत्र जातिपक्षः एव आदर्तव्यः। अर्द्धजरतीयस्यानौचित्यात्। अत एव 'अस्य च्वौ' इत्यादयः सङ्गच्छन्ते, यथासंख्यसूत्रं व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्तते, तद्यथा "स्यतासी लृलुटोः[१३]" इत्यत्र यथा प्रवर्तते, किञ्च पक्षेऽस्मिन् ऋकारादौ लृकाराद्यापत्तिः नास्ति, तत्र लृत्वादिजाते अभावात्, अत एव जातिपक्षमवलम्ब्य अणुदित-सूत्र प्रत्याख्यानं सङ्घटते। इत्थं संक्षेपरूपेण प्रकृतसूत्र-मवलम्ब्य यथामति विचाराः प्रस्तुताः वर्तन्ते, इतोऽपि अन्ये विचाराः विलसन्ति, विस्तरभिया अत्रैव विरमामि॥ इति शम्॥

*****

**डॉ. अशोककुमारमिश्रः**
सहायकाचार्यः, व्याकरणविभागः,
एस.डी. आदर्श संस्कृत कालेज,
अम्बाला कैन्ट, हरियाणा।

१२. प्रौ.म. भावप्रकाशः (इको यणचि)।
१३. पा.सू. ३.१.३३।

# 'र' प्रत्याहारसमीक्षा

— डॉ. धनुर्धरझाः

''तुल्यास्यप्रयत्नं सवर्णम्'' इति सूत्रे 'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्[१]' इति वार्तिकेन ऋ-लृवर्णयोः सावर्ण्यस्वीकारे 'तवल्कारः' इत्यादौ रपरत्वमाशङ्क्य ''उरण् रपरः[२]'' इति सूत्रे 'लपरत्वं वक्ष्यामि' इति भाष्यवार्तिककाराभ्यामुक्तम्। कैयटश्च 'लपरत्वं वक्ष्यामि' इत्यस्य रप्रत्याहाररूपेण व्याख्यास्यामीत्यर्थमुक्त्वा 'लण्' सूत्रघटकाकारस्यानुनासिकत्वेनेत्संज्ञां विधाय तेन रप्रत्याहारं साधयामास। तन्न स्वीकृतं नागेशैः।

**रप्रत्याहारस्याभावार्थविवेचनमधः प्रस्तूयते —**

**१. 'अतो ल्रान्तस्ये'ति सूत्रे लकारोच्चारणस्यानावश्यकत्वात् रप्रत्याहारो नास्ति** — यदि लण्सूत्रेऽकारस्येत्वमभिमतं सूत्रकारस्य स्यात्, तदा ''अतो ल्रान्तस्ये''त्यत्र लकारोच्चारणं व्यर्थं स्यात्, रप्रत्याहारेणैव निर्वाहात्। अतो ज्ञायते यल्लण्सूत्रेऽकारस्येत्वं नास्तीति। न च तेन रप्रत्याहारस्यानित्यत्वं भवतीति ज्ञापितम्, अत एव कमलानामित्यादौ रषाभ्यामिति णत्वं नेति वाच्यम्, रप्रत्याहारस्य नित्यत्वेऽपि उभयगतिरिह भवतीति न्यायेन क्वचिद्रेफमात्रस्य ग्रहणसम्भववेन ज्ञापनस्यानुपयोगात्।

**२. 'यण्'-प्रत्याहारस्य स्थाने 'य' प्रत्याहारेणैव सर्वत्र कार्यनिर्वाहात् —** इत्संज्ञकत्वपक्षेऽपि पाणिनेर्लकारोच्चारणं व्यर्थं नास्ति। यतो ह्युक्तसूत्रे ज्ञानकृतगौरवं तु वर्तते एव। अतोऽत्र शेखरकारेणापरः पक्षः प्रस्तुतो यल्लण्सूत्रस्थाकारस्येत्संज्ञकत्वेन ''इको यणचि'' इत्यादावर्द्धमात्रालाघवानुरोधात् सर्वत्र 'यण्'-प्रत्याहारस्य स्थाने 'य'-प्रत्याहारेणैव कार्यनिर्वाहः करणीयः। अतः लण्-सूत्रे णकारानुबन्ध एव न करणीयः।

---

१. पाणिनीयसूत्रम् १.१.९ (सिद्धान्तकौमुदीस्थसूत्रसंख्या-१०) वृत्तिः - ताल्वदिस्थानमाभ्यन्तरनप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञः स्यात्।

२. पाणिनीयसूत्रम् १.१.५१ (सिद्धान्तकौमुदीस्थसूत्रसंख्या-७०) वृत्तिः - ऋ इति त्रिंशतः संजेत्युक्तम्। तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते।

**३. 'आचारादप्रधानत्वाल्लोपश्च वलवतरः'- इति भाष्योक्तस्य तृतीयहेतोर-व्यापकत्वापत्तेः —** यदि लण्-सूत्रस्थितणकारस्योच्चारणाभावे सर्वत्र 'य'प्रत्याहारेणैव कार्यनिर्वाहः स्यात्तदा ''इणः षीध्वंलुङ्लिटां धोऽङ्गात्[४]'' इत्यादिसूत्रेष्वपि इणप्रत्ययस्थाने इ + अ = 'य'प्रत्याहारेणैव कार्यनिवाहः स्यात्। एवं हि 'य'प्रत्याहारे संदेहः स्याद् यत् इकारा-दारभ्य 'य' प्रत्याहारः यकारादारभ्य वा। अतः संदेहनिवृत्यर्थ लणित्यत्र 'ण'ग्रहणमावश्यकम्। अच्प्रत्याहारे णकाराद्यनुबन्धानां ग्रहणन्न भवेदेतदर्थं महाभाष्यकारेण दूषणान्तरं प्रदर्शितं यत् ''**आचारादप्रधानत्वाल्लोपश्च बलवत्तरः**''। अत्र तृतीयहेतोः ('लोपश्च बलवत्तरः' इत्यस्य) अव्यापकत्वापत्तिर्भवति। न च हेतोरव्यापकतवं गुणः, व्यापकत्वे हि हेतुर्व्यभिचारी स्यादेवञ्चा-व्याक्त्वाभिधानस्य दोषकल्पनं न समीचनमिति वाच्यम्, हेतोरव्यापकतापत्तिरित्यस्य पक्षता-वच्छेदेकाव्यापतापत्तिरित्यर्थात्। तथा च हेतोः पक्षतावच्छेकाव्यापकत्वे भगासिद्ध्या भष्या-सङ्गतिरित्याशयात्।

**४. पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकसामानाधिकरण्येन हेतोर-सिद्धत्वे भागासिद्धिदोषात् —** अयं भावः — अनुमतिर्हि द्विधा भवति, पक्षतावच्छेदका-वच्छेदेन पक्षतावच्छेदकसामानाधिकरण्येन च। तत्र पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षता-वच्छेदकसामानाधिकरण्येन हेतोरसिद्धत्वे भागासिद्धिदोषो भवति। एतावता पक्षतावच्छेदका-वच्छेदेनानुमितिस्वीकारे पक्षतावच्छेदकव्यापकत्वं हेतोरावश्यकम्, तदव्यापकत्वे भागासिद्ध्या-पत्तिरिति फलितम्। तथा च प्रकृतेऽनुबन्धत्वरूपपक्षतावच्छेदकसामानाधिकरण्येन अर्थात् अनुबन्धत्वसामानाधिकरण तत्तदनुबन्धव्यक्तित्वावच्छेदेन अनुमितिस्वीकारे तत्तदनुबन्धत्वरूप-पक्षतावच्छेदेन अनुमित्यानन्त्यापत्तिगौरवभिया लाघवात् अनुबन्धत्वावच्छेदेन एवानुमितिस्वी-कारस्यावश्यकतया लण्घटाकारस्य रप्रत्याहारसिद्ध्यर्थमित्संज्ञाकल्पनेऽच्प्रत्यहारसिद्धिवेलायाम् 'उपदेशेऽजनुनासिक' इत्यस्याप्रवृत्या 'तस्य लोपः' इति लोपशास्त्रीयोद्देश्यतावच्छेदकेत्संकत्वा-क्रान्त्वरूपहेतोरभावेन इत्संज्ञायोग्यत्वरूपानुबन्धत्वात्मकपक्षतावच्छेदकस्य च तत्रापि सत्वेन लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपपक्षतावच्छेदकव्यापकत्वाभावेन अनुबन्धानामजादि-

३. पाणिनीयसूत्रम् ७.२.२ (सिद्धान्तकौमुदीस्थसूत्रसंख्या-२३३०) वृत्तिः - ल्रेति लुप्तषष्ठीकम्। अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि।

४. पाणिनीयसूत्रम् -८.३.७८ (सिद्धान्तकौमुदीस्थसूत्रसंख्या - २२४७) इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात्।

प्रत्याहारे णग्रहणाभावहेतुतयोपन्यस्तस्य '**आचारादप्रधानत्वाल्लोपश्च वलवत्तरः**' इति बलवत्तरशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपतृतीयहेतोरनुबन्धत्वरूपपक्षतावच्छेदकाश्रयैकदेशभूतलण्सूत्रघटकाऽकारेऽसत्त्वेनाव्यापकत्वापत्या भागासिद्ध्यापत्तिदोषः स्पष्ट एव।

**५. प्रस्तुतप्रसङ्गेऽनुमानप्रक्रिया —** 'अनुबन्धाः' प्रत्याहारजन्यबोधविषयत्वाभाववन्तः 'तस्य लोपः' इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात्। न च 'अ इ उ ण्' इत्यादिघटकणकारादिषु अल्प्रत्याहारजन्यबोधविषयत्वस्य च सत्त्वेन प्रकृतसाध्यस्याभावेन प्रकृतहेतोश्च सत्त्वेन प्रकृतहेतुर्व्यभिचारीति न तस्य साध्यसाधकत्वमिति वाच्यम्, स्वेतरो यः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्तदबोधकप्रत्याहारजन्यबोधविषयत्वाभावस्य साध्यत्वेनादोषादिति।

**६. 'मा मांस्त्रायस्वे'त्यत्र अनुनासिकपक्षे ''मोऽनुस्वार'' इत्यनेनानुस्वारापत्तेः —** ननु रप्रत्याहारोऽङ्गीकार्यः, स्वीकार्या च 'लपरत्वं वक्ष्यामी'तिभाष्यानुरोधमनुस्न्धायानुबन्धत्वसमानाधिकरणतत्तद्व्यक्तित्वावच्छेदेन गुरुभूताप्यनुमितिः, को नामैवं दोषः सम्भाव्य इति चेन्न, हल्प्रत्याहारसिद्धिदशायां 'हलन्त्य'मिति सूत्रस्य वाक्यार्थबोधाभावाप्रयुक्ताच्पदार्थानिष्पत्त्या 'उपदेशेऽजति तस्य वाक्यार्थबोधाभावेन लण्सूत्रघटकाकारस्येत्संज्ञयालोपाभ्यामपहारविरहेण प्रत्याहारेषु जातिग्रहणपक्षस्यैवाङ्गीकृतत्वेन हल्प्रत्याहारेण 'लण्'घटकाकारस्यापि ग्रहणे हे आन्! मां त्रायस्येत्यर्थक — 'मा माँस्त्रायस्वे'त्यत्र अनुनासिकपक्षे ''मोऽनुस्वार[५]'' इत्यनेनानुस्वारापत्तेः। 'माम् + आन् + त्रायस्व' इति दशायां ''नश्छव्यप्रशान्[६]'' इति सूत्रेण नकास्य रुत्वे ''अत्रानुनासिकः पूर्वस्य तु वा[७]'' इति सूत्रेण रोः पूर्वाद् अनुनासिके रेफस्य विसर्गे सत्त्वे चोक्तं रूपं सिद्ध्यति।

**७. सोऽस्तीत्यादौ ''एतत्तदोः-०'' इति सूत्रेण सुलोपापत्तेः —** न च ह्रस्वत्वसमानाधिकरणजातेरेव निर्देशेन न तत्र दोष इति वाच्यम, एवमपि सोऽस्तीत्यादौ

---

५. पाणिनीयसूत्रम् ८.३.२३ (सिद्धान्तकौमुदीस्थसूत्रसंख्या-१२३) मान्तस्य पदस्यानुस्वारः स्याद्धलि।

६. पाणिनीयसूत्रम् ८.३७ (सिद्धान्तकौमुदीस्थसूत्रसंख्या-१४०) अम्परे छवि नकारान्तस्यपदस्य रुः स्यात् न तु प्रशान् शब्दस्य।

७. पाणिनीयसूत्रम् ८.३.२ (सिद्धान्तकौमुदीस्थसूत्रसंख्या-१३६) अत्र रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात्।

‘‘एततदोः सुलोपोऽकोरनञ्समासे हलि[८]’’ इति सूत्रेण सुलोपापत्तेर्दुर्वारत्वात्। लण्सूत्रथकाकारस्य अनुनासिकत्वादेव ‘प्रत्यारेऽनुबन्धानां कथमज्ग्रहणेषु न’ इत्यनेनाज्बोधकसूत्रेषु प्रत्याहारार्थं विधीययमाननुबन्धानामज्ग्रहणेन ग्रहणं कुतो नेत्यच्प्रत्याहारे एव भाष्ये विहिता शङ्का सङ्गच्छते। तदनुनासिकत्वे अच्प्रत्याहार इव हल्प्रत्याहारेऽपि विजातीयाकारानुबन्धग्रहणप्रसक्तेस्तदसङ्गतमेव स्यादिति।

**८. निष्कर्षः —** अतो लण्सूत्रेऽकारस्यानुनासिकत्वे मानाभावात् रप्रत्याहारो नास्तीति ‘उरण् रल्पर’ इति न्यासे भाष्यकाराणामभिप्राय इति दिक्।

*****

**डॉ. धनुर्धरझाः**
राष्ट्रियसम्मानेन
‘डालमिया-श्रीवाणीयुवा - अलङ्करणेन’
ए.ई.ई.एस. पुरस्कारेण विद्वत् सम्मानेन
च सम्मानितः, स्नातकोत्तरशिक्षकः।

८. पाणिनीयसूत्रम् ६.१.१३२ (सिद्धान्तकौमुदीस्थसूत्रसंख्या-१७६) अककारयोरेततदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे।

# ज्योतिषमीमांसा

विषय-सूची

# गण्डान्ताद्यशुभजन्मविचारः

— प्रो. हंसधरझाः

ज्योतिषं नाम ग्रहनक्षत्राधारितं शास्त्रम्। जन्मकालिकग्रहनक्षत्रानुरोधेन शास्त्रेऽस्मिन् जातकस्य शुभाशुभं विचार्यत इति तु तावत् प्रसिद्धमेव। जन्मकालिक-तिथि-नक्षत्र-योग-करणादिवशेनापि विधीयतेऽत्र शुभाशुफलविचार इत्यपि नाविदितं विज्ञैः। तदत्र जन्माङ्ग-चक्रवशेन यो विचारो भवति तस्मादितरोऽप्यस्त्येको विचारो यो जातकस्य जन्मानन्तरं सद्य एव विचारणीयो भवति। जन्माङ्गे यद्यपि ग्रहा अनुकूला भवन्ति तदापि कदाचित् अशुभं जन्म जायते। अशुभजन्मनि सति सद्य एवाशुभफलस्य सम्भावना जायते। तच्चाशुभं जन्म महर्षि-पराशरेण बहुविधमुक्तम्। तद् यथा — अमाजन्म, कृष्णचतुर्दशीजन्म, भद्रावमादिजन्म, सोदरपित्रर्क्षे जन्म, संक्रान्तिजन्म, ग्रहणजन्म, त्र्यन्यजन्म, प्रसूतिविकृतिजन्म, गण्डान्तजन्म, अभुक्तमूलजन्म इत्यादीनि। एतेषु अशुभजन्मसु शान्तिर्विधेयेति शास्त्रस्य सम्मतम्। तदत्र शोधपत्रे सर्वेषामशुभजन्मनां लक्षणानि तथा तेषां शान्तिविधानं सर्वमपि नोपस्थापयितुं शक्यते। किन्त्वत्र प्राधान्येन गण्डान्तविचारः अभुक्तमूलविचारश्चेति द्वयमपि क्रियत एव, स्थालीपुला-कन्यायेन अन्येषामपि साङ्केतिकं वर्णनं समुपस्थापयामि।

तत्र हि महर्षिपराशरेण स्वकीये बृहत्पाराशरहोराशास्त्रस्यान्ते एतत्सम्बन्धी स्वतन्त्रः अध्याय एव प्रकल्पितो यत्र अशुभजन्मनां लक्षणानि तु प्रतिपादितान्येव तत्रैव तेषां सविस्तरं शान्तविधानमपि निर्दिष्टम्। यथा बृहत्पाराशरहोराशास्त्रे महर्षिर्लिखति[1] —

**अथ ब्रवीमि मैत्रेय कारणान्तरमत्र ते।**
**येनाशुभं जनुर्नृणां शुभाङ्गेऽपि ससद्गृहे॥**
**भद्राऽमाऽसितपक्षीया चतुर्दश्यां च संक्रमे।**
**रवेः सोदरपित्रर्क्षे गण्डान्तत्रितयेऽथवा॥**

१. बृहत्पाराशरहोराशास्त्रम्, अशुभजनुर्वर्णनाध्यायः (अध्याय-८६), श्लोकः - १-५।

**सूर्येन्दुग्रहणे दग्धयुतौ पातेऽवमेऽपि च।**
**यमघण्टव्यतीपातादियोगे जन्म चेन्नृणाम्॥**
**कन्यात्रयान्तरं पुत्रः पुत्री पुत्रत्रयान्तरे।**
**जायते यदि वा सूतिर्विकारेऽप्यशुभं जनुः॥**
**शुभाप्तये बुधः कुर्याच्छान्तिं शास्त्रोक्तसम्मतम्।**
**शिवं शान्त्या प्रजायेत वच्म्यतस्तामनुक्रमात्॥** इति॥

अर्थात् जन्माङ्गचक्रे ग्रहाणां स्थितिर्यद्यनुकूला भवेत्, किन्तु जातकस्य जन्मामावास्यायां स्यात्, भद्रायां स्यात्, कृष्णचतुर्दश्याम्भवेत्, रविसंक्रान्तिदिने भवेत्, सोदरस्य पितुर्वा जन्मनक्षत्रे भवेत्, गण्डान्तत्रितये अर्थात् तिथिगण्डान्ते, लग्नगण्डान्ते, नक्षत्रगण्डान्ते वा भवेत्, रविचन्द्र-ग्रहणकाले भवेत्, दग्दतिथौ भवेत्, व्यतीपातयोगेऽथवा वैधृतियोगे भवेत्, अवमे (तिथिक्षये) स्यात्, यमघण्टव्यतीपातादियोगे भवेत्, कन्यात्रयानन्तरं पुत्रस्य जन्म भवेदथवा पुत्रत्रयानन्तरं कन्याया जन्म भवेत्, अथवा सूतिविकारो भवेत्तदा अशुभञ्जन्म कथ्यते। अशुभजन्मनि सति शास्त्रोक्तविधानेन शान्तिङ्कुर्यात्। शान्त्या अशुभजन्मजन्यदोषा नाशमुपगच्छन्ति।

एवमेतेषामशुभजन्मनां विषये महर्षिपराशरेण सविस्तरं सफलं शान्तिविधानादिकं विवेचितम्। किन्त्वत्र विस्तरभिया समासेन विलिख्यते। विस्तृतं ज्ञातुं कृपया ग्रन्थोऽवलोकनीयः।

**१. अमाजन्मफलम्**[२]

**अमावास्योद्भवो जातः पित्रोर्दारिद्र्यदो मतः।**
**दोषप्रशमनायैव शान्तिं कुर्वीत यत्नतः॥** इति॥

अमावास्यायामुत्पन्नो जातकः पित्रोः कृते (मातुः पितुश्च कृते) दारिद्र्यदोषकारको भवति। दारिद्र्यदोषप्रशमनाय शास्त्रोक्तविधानेन शान्तिं कुर्यात्।

**२. कृष्णचतुर्दशीजन्मफलम्**[३]

**पक्षेऽसिते चतुर्दश्यां जन्म चेदशुभं स्मृतम्।**

२. बृहत्पाराशरहोराशास्त्रम्, अमाजन्मशान्त्यध्यायः (अध्याय-८७), श्लोकः - १।
३. बृहत्पाराशरहोराशास्त्रम्, कृष्णचतुद्रशीजननशान्त्यध्यायः (अध्याय-८८), श्लोकः१-३।

**षड्भिर्भक्ते चतुर्दश्या माने तु प्रथमे यदि ॥**
**जनुर्भवेच्छुभं तर्हि द्वितीये चेन्मृतिः पितुः ।**
**तृतीये मातृमरणं चतुर्थे मातुलक्षतिः ॥**
**पञ्चमे वंशनाशः स्यात् षष्ठे सम्पत्तिसंक्षयः ।**
**अपि वाऽत्मविनाशः स्यादतः शान्तिं समाचरेत् ॥** इति ॥

यदि जातकस्य जन्म कृष्णपक्षस्य चतुर्दश्याम्भवेत्, तदा तस्याश्चतुर्दश्या यद् घट्यादि-मानन्तत् षड्भिर्विभजेत्। तत्र केवलम्प्रथमे षष्ठांशे यदि जन्म स्यात्तदा शुभं ज्ञेयम्। अन्यथा अशुभं ज्ञेयम्। तद्यथा — द्वितीये षष्ठांशे यदि जन्म स्यात्तदा पितृमरणम्, तृतीये षष्ठांशे यदि जन्म स्यात्तदा मातृमरणम्, चतुर्थे षष्ठांशे यदि जन्म स्यात्तदा मातुलनाशः, पञ्चमे षष्ठांशे यदि जन्म स्यात्तदा वंशनाशः, तथाऽन्तिमे (षष्ठे) षष्ठांशे यदि जन्म स्यात्तदा सम्पत्तिनाशोऽथवा आत्मविनाशः स्यात्। अतो दोषनिवारणार्थं शास्त्रोक्तविधानेन शान्तिं समाचरेत्।

अत्र गर्गस्याप्येवमेव मतम्, यथा[४] —

**कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम्।**
**चतुर्दशीं च षड्भागं कुर्यादादौ शुभं स्मृतम् ॥**
**द्वितीये पितरं हन्ति तृतीये मातरन्तथा।**
**चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ॥**
**षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम्।**
**तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ॥** इति ॥

**३. भद्रावमादिजन्मफलम्[५]**

**भद्रावमव्यतीपातयमघण्टादिदुर्युतौ ।**
**जनुर्यदशुभं पूर्वमुदितं तत्र संशृणु ॥**
**शान्तिस्तद्दुर्युतावेव कार्या यस्यां जनुर्भवेत्।**
**शान्तेर्विधिं यद्विधानाच्छिवमाप्नोति मानवः ॥**
**शुभे मुहूर्ते सल्लग्ने दैवज्ञेनोदिते नरः ।** इति ॥

४. सङ्ग्रहशिरोमणिः, चतुर्शीप्रभा, श्लोक १२०-१२२।
५. बृहत्पाराशरहोराशास्त्रम्, भद्रावमादिदुष्टयोगशमनाध्यायः (अध्याय-८९), श्लोकः १-३।

यदि भद्रायां (2/7/12 ) तिथौ, अवमतिथौ (तिथिक्षये), व्यतीपातयमघण्टादिदुर्योगेषु वा जन्म भवेत्तदा अशुभं जन्म ज्ञेयम्। तस्य शान्तिस्तदा कार्या यदा स अशुभयोग: (यस्यां अशुभतिथौ, यस्याम् अशुभयोगे वा जन्म जातं स काल: ) पुनरागच्छेत्। अथवा तदसम्भवे यस्मिन् कस्मिन्नपि दैवज्ञेनोपदिष्टे शुभे मुहूर्ते, शुभे लग्नेऽपि शास्त्रोक्तविधानेन शान्तिं कुर्यात्। एवं शान्तिविधानेन जातक: कल्याणमवाप्नोति।

**४. सोदरपित्रर्क्षे जन्मफलम्**[६]

**यदि जन्म भवेत् पित्रोर्जन्मर्क्षे वापि सोदरे।**
**मृतिस्तयोरथैकस्य वा भवेदिति निश्चितम्॥**
**शुभर्क्षे सद्दिने रिक्ताऽमावमादिविवर्जिते।**
**चन्द्रताराबलोपेते शान्तिं कुर्याद् विचक्षण:॥** इति॥

कस्यापि जन्म पितुर्जन्मनक्षत्रेऽथवा मातुर्जन्मनक्षत्रेऽथवा सोदरस्य जन्मनक्षत्रे भवेत्, तदा तयोर्मध्ये कस्याप्येकस्य मरणम्भवति। अर्थादुपर्युक्तानान्त्रयाणाम्मध्ये यस्य जन्मनक्षत्रे जातकस्य जन्म स्यात्तस्याथवा जातकस्य मृत्युर्भवतीति भाव:। एतच्छान्तिकामनया रिक्तावमादिवर्जिततिथौ, शुभनक्षत्रे, शुभदिने, चन्द्रतारानुकूले क्षणे शास्त्रोक्तविधिना शान्तिं कुर्यात्।

अत्र गर्गवचनमेवमस्ति, यथा[७] —

**एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयो:।**
**प्रसूतिश्च तयोर्मृत्युर्भवेदेकस्य निश्चितम्॥** इति॥

अर्थादेकस्मिन्नेव नक्षत्रे यदि भ्रातृभगिन्योर्जन्म भवति तदा तयोर्मध्ये कस्याप्येकस्य मृत्युर्भवति, अथवा यद्येकस्मिन्नेव नक्षत्रे द्वयोर्भ्रात्रोर्जन्म भवति तदापि तयोर्मध्ये कस्याप्येकस्य मृत्युर्भवति। एवं हि एकस्मिन्नेव नक्षत्रे यदि मातृपुत्रयोर्जन्म भवति तदापि तयोर्मध्ये कस्याप्येकस्य मृत्युर्भवति। अथवा एकस्मिन्नक्षत्रे यदि पितृपुत्रयोर्जन्म भवति तदापि तयोर्मध्ये कस्याप्येकस्य मृत्युर्भवति।

६. बृहत्पाराशरहोराशास्त्रम्, एकनक्षत्रोत्थजातकशान्त्यध्याय: (अध्याय-९०), श्लोक: १-३।
७. सङ्ग्रहशिरोमणि:, चतुर्शीप्रभा, श्लो. ११७।

**५. संक्रान्तिजन्मदोष:**[८]

**सूर्यादौ सूर्यसंक्रान्तिर्घोरा ध्वांक्षी महोदरी।**
**मन्दा मन्दाकिनी मिश्रा राक्षसी चेति सप्तधा॥**
**तत्र जातो भवेन्नूनं दुःखदारिद्र्यसंयुतः।**
**शान्तितः शुभमाप्नोति ग्रहाणां यज्ञमाचरेत्॥** इति॥

तात्पर्यमिदं यत् संक्रान्तिदिने यदि जन्म भवति तदा तज्जन्म दुःखदारिद्र्यरोगकरम्भवति। तत्र सूर्यादिवारभेदेन संक्रान्तीनाङ्घोराध्वाङ्क्ष्याद्याः सप्त संज्ञाः कथिताः। यथा, रविवासरे यदि सङ्क्रान्तिर्भवति तदा घोरासंज्ञिका, सोमवासरे ध्वांक्षी, मङ्गलवासरे महोदरी, बुधवासरे मन्दा, गुरुवासरे मन्दाकिनी, शुक्रवासरे मिश्रा तथा शनिवासरे यदि सङ्क्रान्तिर्भवति तदा सा राक्षसीसंज्ञिका संक्रान्तिर्भवति। अतः संक्रान्तिदिने जातस्य शिशोस्तज्जन्या शान्तिर्विधेया।

**६. ग्रहणजन्मदोष:**[९]

**रवीन्द्वोर्ग्रहणे जातो दारिद्र्यक्लेशरोगवान्।**
**म्रियतेऽपि ततः शान्तिमाचरेद्धितकामुकः॥**
**रवीन्द्वोर्ग्रहणं यत्र नक्षत्रे तदधीशजाम्।**
**मूर्तिं स्वर्णमयीं, सूर्यरूपं चापि रविग्रहे॥**
**सुवर्णेन, तथैवेन्दोर्ग्रहणे रजतेन वै।**
**चन्द्रस्वरूपं रचयेद् राहोः शीशकतस्तथा॥** इति॥

अर्थात् पराशरानुसारं सूर्य-चन्द्रग्रहणकाल उत्पन्नो जातको दुःख-दारिद्र्य-रोगयुक्तो भवति। अतो ग्रहणं यस्मिन्नक्षत्रे भवति तस्य नक्षत्रस्य यः स्वामी भवति तस्य सुवर्णमयीं प्रतिमां तथा सूर्यग्रहणे सूर्यस्य सुवर्णमयीं प्रतिमां तथा चन्द्रग्रहणे चन्द्रस्य रजतमयीं प्रतिमां पुनश्च राहोः शीशकमयीं प्रतिमां निर्माय शास्त्रोक्तविधिना शान्तिकर्म समाचरेत्।

एवमेवात्र गर्गेणापि ग्रहणजन्मदोषं प्रतिपादयँल्लिखति, यथा[१०] —

८. बृहत्पाराशरहोराशास्त्रम्, संक्रान्तिजननदोषशान्त्यध्याय: (अध्याय-९१), श्लोक: १-३।
९. बृहत्पाराशरहोराशास्त्रम्, ग्रहणजातदोषशान्त्यध्याय: (अध्याय-९२), श्लोक: १-३।
१०. सङ्ग्रहशिरोमणि:, चतुर्दशी प्रभा, श्लोक ११८।

**ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते।**
**व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत्॥**
**अस्मिन् संजायते यस्तु तस्य मृत्युर्न संशयः।**
**शान्तिस्तत्र विधातव्या नरेण हितकाम्यया॥** इति॥

**७. त्र्यन्यजननदोषः**[११]

**सुतत्रयात्परं कन्याजन्म वा कन्यकात्रयात्।**
**अनन्तरं पुत्रजन्म तदारिष्टं कुलद्वये॥**
**एवं सति ग्रहान् ब्रह्मविष्णुरुद्राँश्च पूजयेत्।**
**यथोक्तेन विधानेन शान्तिं कुर्याद् विचक्षणः॥**
**सूतकान्ते शुभे वाऽह्नि ग्रहाणां यजनं ततः।** इति॥

अर्थात् पुत्रत्रयजन्मानन्तरं कन्याया जन्म भवेत्, अथवा कन्यात्रयजन्मानन्तरं पुत्रस्य जन्म भवेत्तदा मातृ-पितृवंशेऽनिष्टञ्जायते।

शान्त्यर्थं ब्रह्म-विष्णु-महेशानां ग्रहाणाञ्च पूजनन्तथा शास्त्रोक्तविधानेन शान्तिङ्कुर्यात्।

अत्र गर्गेण दोषं स्पष्टयन्नेवं लिखति, यथा[१२] —

**सुतत्रये सुता चेत् स्यात्तत्रये वा सुतो यदि।**
**मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत्॥**
**ज्येष्ठनाशो वसोर्हानिर्दुःखं स्यादुत्तरोत्तरम्।**
**तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः॥** इति॥

**८. प्रसूतिविकृतिदोषः**[१३]

**समयाच्चेद्विलम्बेन पूर्वं हि प्रसवो भवेत्।**
**विकलोङ्गोऽधिकाङ्गो वाऽनेकनेत्रशिरोधरः॥**
**नराकारः पशावेवं पश्वाकारस्त्रियामपि।**

११. बृहत्पाराशरहोराशास्त्रम्, त्र्यन्यजननदोषशान्त्यध्यायः (अध्याय-९६), श्लोकः १-३।
१२. सङ्ग्रहशिरोमणिः, चतुर्दशी प्रभा, श्लोक १२३-१२४।
१३. बृहत्पाराशरहोराशास्त्रम्, प्रसूतिविकृतिशमनाध्यायः (अध्याय-९७), श्लोकः २-५।

**प्रसूतिविकृतिश्चेयं महाविध्वंशकारिणी॥**
**स्त्रियां पशुकुले यस्य प्रसूतिविकृतिर्भवेत्।**
**तस्य वंशे गृहे चापि महोत्पात: प्रजायते॥**
**परिहर्तुं तु तान् दोषान् शान्तिं कुर्याद् विचक्षण:।**
**अथवा तादृशीं नारीं गामश्वां परिवर्जयेत्॥** इति॥

अर्थान्निर्धारितसमयानन्तरमथवा निर्धारितसमयात्पूर्वमेव यदि प्रसवो भवति, अथवा कस्या अपि स्त्रिया गर्भाद् विकलाङ्गजातकस्याधिकाङ्गजातकस्य वा जन्म भवति, अथवा अनेकनेत्रधारिजातकस्यानेकशिरोयुक्तस्य जातकस्य वा जन्म भवति, अथवा पशुगर्भतो नराकारस्य जातकस्य वा स्त्रीगर्भत: पश्वाकारस्य जातकस्य जन्म भवति तदा प्रसूति-विकृति-र्ज्ञातव्या। एष: प्रसूतिविकारो महाविध्वंशकारी भवति। दोषशमनार्थं शास्त्रोक्तविधिना शान्ति: कर्तव्या। अथवा प्रसूतिविकारवत्या: स्त्रिया:, गो:, अश्वस्य वा परित्याग: कर्तव्य:।

एवं हि वयस: अनुरोधेनापि कदाचित् स्त्रिया: गर्भो दोषाय भवति। तत्र पञ्चदशे षोडशे वाऽब्दे (वयसि) गर्भधारणमथवा सिंहस्थे रवौ गो: प्रसव: तथा मकरस्थे रवौ महिष्या: प्रसवो दोषाय भवतीति प्रतिपादयँल्लिखति महर्षिपराशर:[१४] —

**जन्मन: षोडशे पञ्चदशे वाब्दे भवेद् यदि।**
**गर्भ: स्त्रिया वा प्रसवो न शिवायोपकल्पते॥**
**सिंहस्थेऽर्के प्रसूता गौर्महिषी मकरस्थिते।**
**नश्येत् स्वयं तथा सा तु नाशयेदधिपं निजम्॥**
**विप्राय तादृशीं दद्यादथवा शान्तिमाचरेत्।** इति॥

अर्थाद्गर्भत: पञ्चदशे षोडशे वाब्दे कस्याश्चित् स्त्रिया गर्भ: प्रसवो वा भवति तदाऽशुभं जायते। अतस्तच्छान्तिर्विधेया।

पुनश्च सिंहस्थे सूर्ये कस्यापि गौ: प्रसूते, किं वा मकरस्थे सूर्ये महिषी प्रसूते तदा तत्स्वामिनो नाशो भवति। एवं परिस्थितौ ताङ्गाम्महिषीं वा ब्राह्मणाय दद्यात्, अथवा तज्जन्यां शान्तिं समाचरेत्।

१४. बृहत्पाराशरहोराशास्त्रम्, प्रसूतिविकृतिशमनाध्याय: (अध्याय-९७), श्लोक: ६-८।

**९. गण्डान्तजन्मदोष:**

अत्र गण्डशब्दो ग्रन्थिशब्दस्य पर्याय:। अत एव शरीरे ग्रन्थिजन्यो रोगो गण्डशब्देनाख्यायते। यथा गलगण्डरोग:, गण्डमालारोग:, अस्थिगण्ड इत्यादय:। स च ग्रन्थि: शरीरे प्रायस्तत्रैव भवति यत्र सन्धिर्भवति। अतो गण्डशब्दस्थाने ज्योतिषे सन्धिशब्दस्यापि प्रयोगोऽवलोक्यते। अर्थाज्जयोतिषे गण्डशब्द: सन्धिपदवाचकोऽपि। अत एव मुहूर्तचिन्तामणौ विवाहप्रकरणे गण्डान्तप्रसङ्गे पीयूषधाराकारेण स्पष्टं लिखति ''**गण्डान्तं नाम सन्धिविशेष:**''।

वस्तुतश्शरीरे ग्रन्थिस्तत्रैव भवति यत्र शरीरस्य द्वयोर्भागयोस्सन्धिर्भवति। अर्थाच्छरीरे सन्धिस्थानेषु ग्रन्थयो भवन्त्येव। यथा हस्तभुजयोर्मध्ये सन्धिस्थाने ग्रन्थिरस्ति। भुजस्कन्धयोर्मध्ये सन्धिस्थाने ग्रन्थिरस्ति। जानुपादयोर्मध्ये सन्धिस्थाने गुल्फरूपो ग्रन्थिरस्ति।

एवं यथा शरीरे अङ्गानां सन्धिस्थानेषु ग्रन्थयोऽअर्थात् गण्डभागा भवन्ति तथैव तिथि-नक्षत्र-लग्नविशेषाणां सन्धयो गण्डसंज्ञका: प्रकल्पिता: प्राच्यै:। तत्र गण्डसंज्ञकभागविशेषै: सम्बद्धानि यानि षण्णक्षत्राणि, षट्तिथय:, षड् लग्नानि वा तानि सर्वाण्यपि गण्डसंज्ञकानि। तत्र हि त्रयाणामन्ते केचन भागविशेषा अंशात्मका घट्यात्मका वा गण्डान्तभागा:। तथा तैर्गण्डान्तभागै: सम्बद्धास्तदग्रिमनक्षत्रतिथिलग्नानामाद्यभागविशेषा अपि गण्डान्तसंज्ञयैवाख्यायते, अन्तभागसम्पृक्तत्वात्। एवं प्राज्ञैर्नक्षत्रगण्डान्तं, तिथिगण्डान्तं, लग्नगण्डान्तञ्चेति त्रिविधङ्गण्डान्तम्प्रोक्तम्। तत्र त्रिविधेषु गण्डान्तेषु जन्म दोषकारकम्भवति। महर्षिपराशरेण गण्डान्तत्रितयस्य विचारस्त्रिषु कार्येषु कर्तव्य इत्युक्तम्। तद्यथा[१५] —

**गण्डान्तं त्रिविधं प्रोक्तं तिथ्यङ्गर्क्षवशाद् बुधै:।**
**पाणिग्रहादौ जनुषि प्रयाणे च विचिन्तयेत्॥** इति॥

**अथ तिथिगण्डान्तम्**[१६]

**पूर्णानन्दाभिधानां तु तिथीनां सन्धिषु द्विज।**
**घटीचतुष्टयं विज्ञैस्तिथिगण्डान्तमीरितम्॥** इति॥

---

१५. बृहत्पाराशरहोराशास्त्रम्, गण्डान्तोद्भवशान्त्यध्याय: (अध्याय-९३), श्लोक: १।
१६. बृहत्पाराशरहोराशास्त्रम्, गण्डान्तोद्भवशान्त्यध्याय: (अध्याय-९३), श्लोक: २।

अर्थात् तिथिषु पूर्णायास्तथा नन्दायास्सन्धिषु चतस्रश्चतस्रो घट्यस्तिथिगण्डान्तम्भवति। अर्थात् पूर्णिमाया अन्तिमे द्वे घट्यौ तथा प्रतिपदाया आदिमे द्वे घट्यौ, एवमेव दशम्या अन्तिमे द्वे घट्यौ तथा एकादश्या आदिमे द्वे घट्यौ, पुनः पञ्चम्या अन्तिमे द्वे घट्यौ तथा षष्ठ्या आदिमे द्वे घट्यौ, एवं स्थानत्रयेऽपि उभयोस्तिथ्योर्मध्ये चतस्रश्चतस्रो घट्यस्तिथिगण्डान्तम्भवति।

किन्तु नारदसंहितायामुपर्युक्तयोस्तिथ्योर्मध्ये धटीद्वयात्मकन्तिथिगण्डान्तङ्कथयति। तद्यथा[१७]–

**पूर्णानन्दाख्ययोस्तिथ्योः संधिनाडीद्वयं सदा।**
**गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु॥** इति॥

एवमेव नारायणदैवज्ञस्य मते[१८] –

सार्पेन्द्रान्तिमभात्ततोऽब्धिघटिकं **पूर्णा ततोऽब्ध्यर्धकम्**॥ इति॥

स्पष्टतायै सारणी अवलोकनीया–

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| **तिथिगण्डान्तम्** | | | | | | | | |
| **पराशरमते** | | | | | **नारदमते नारायणदैवज्ञमते च** | | | |
| तिथीनाम् अन्तिमाः नाड्यः | | तिथीनाम् आद्याः नाड्यः | | | तिथीनाम् अन्तिमाः नाड्यः | | तिथीनाम् आद्याः नाड्यः | |
| पञ्चदश्याः ⇒ | 2 | 2 | ⇐ प्रतिपदः | | पञ्चदश्याः ⇒ | 1 | 1 | ⇐ प्रतिपदः |
| दशम्याः ⇒ | 2 | 2 | ⇐ एकादश्याः | | दशम्याः ⇒ | 1 | 1 | ⇐ एकादश्याः |
| पञ्चम्याः ⇒ | 2 | 2 | ⇐ षष्ठ्याः | | पञ्चम्याः ⇒ | 1 | 1 | ⇐ षष्ठ्याः |

## तिथिगण्डान्तस्य परिहारः–

शाकल्यसंहितानुसारञ्चन्द्रे सबले सति तिथिगण्डान्तजन्यो दोषो नश्यति। तद् यथा[१९] – ‘‘तथैव तिथिगण्डान्तं नास्तीन्दौ बलशालिने’’॥ इति।

---

१७. नारदसंहिता, २९/३८।
१८. मुहूर्तमार्तण्डः, विवाहप्रकरणम्, श्लोक १९।
१९. मुहूर्त पारिजात, परिचय प्रकाण्ड, प्रकीर्ण प्रशाखा, पृ. ६७।

**लग्नगण्डान्तम्**[२०] –

> **मीन-मेषाङ्ग्योः कर्क-सिंहयोरलि-धन्विनोः**
> **सन्धावेकघटीतुल्यं लग्नगण्डान्तमुच्यते** ॥ इति ॥

अर्थात् मीन-मेषयो:, कर्क-सिंहयोस्तथा वृश्चिक-धनुषोस्सन्धिष्वेकैका घटी लग्न-गण्डान्तम्भवति। मीनस्यान्तेऽर्धघटीतुल्य: कालस्तथा मेषस्यादावर्धघटीतुल्य: कालो लग्न-गण्डान्तम्भवति। एवमेव कर्कस्यान्तेऽर्धघटीतुल्य: कालस्तथा सिंहस्यादावर्धघटीतुल्य: कालो लग्न-गण्डान्तम्भवति। पुनर्वृश्चिकस्यान्तेऽर्धघटीतुल्य: कालस्तथा धनुष आदौ अर्धघटीतुल्य: काल:, आहत्य उपर्युक्तयोर्द्वयोर्द्वयो राश्योर्मध्य एकैका घटी लग्नगण्डान्तम्भवति।

एवमेव नारायणदैवज्ञोऽपि लिखति, यथा[२१] –

> **कीटान्त्यालिविरामत: कुघटिकं गण्डान्तमूर्ध्वाधरम्** ॥ इति ॥

किन्तु नारदेन तूपर्युक्तयो राश्योर्मध्येऽर्धघटीमितमेव तिथिगण्डान्तमुक्तम्। तद् यथा[२२]–

> **कुलीरसिंहयो: कीटचापयोर्मीनमेषयो:।**
> **गण्डान्तमन्तरालं स्याद्घटिकार्धं मृतिप्रदम्** ॥ इति ॥

**स्पष्टतायै सारणी अवलोकनीया –**

| लग्नगण्डान्तम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| पराशरमते नारायणदैवज्ञमते च | | | | | नारदमते | | | |
| राशीनाम् अन्तिम-पलानि | | राशीनाम् आदिम-पलानि | | | राशीनाम् अन्तिम-पलानि | | राशीनाम् आदिम-पलानि | |
| मीनस्य ⟹ | 30 | 30 | ⟸ मेषस्य | | मीनस्य ⟹ | 15 | 15 | ⟸ मेषस्य |
| कर्कटस्य ⟹ | 30 | 30 | ⟸ सिंहस्य | | कर्कटस्य ⟹ | 15 | 15 | ⟸ सिंहस्य |
| वृश्चिकस्य ⟹ | 30 | 30 | ⟸ धनुषः | | वृश्चिकस्य ⟹ | 15 | 15 | ⟸ धनुषः |

२०. बृहत्पाराशरहोराशास्त्रम्, गण्डान्तोद्भवशान्त्यध्याय: (अध्याय-९३), श्लोक: ४।
२१. मुहूर्तमार्तण्ड:, विवाहप्रकरणम्, श्लोक १९।
२२. नारदसंहिता, २९/३९।

**लग्नगण्डान्तस्य परिहारः-**

शाकल्यसंहितानुसारं सबले गुरौ लग्नगण्डान्तदोषः प्रभावहीनो भवति। तद् यथा[२३] – "**तथैव लग्नगण्डान्तं नास्ति जीवे बलान्विते**"॥ इति।

**नक्षत्रगण्डान्तम्**[२४] -

**एवं नक्षत्रगण्डान्तं घटीयुगमितं बुधैः।**
**रेवतीसार्पशक्रेभ्योऽग्रिमभैः सन्धिषु स्मृतम्॥**

अर्थाद्रेवत्यश्विनीनक्षत्रयोस्सन्धौ, आश्लेषा-मघानक्षत्रयोस्सन्धौ, तथा ज्येष्ठा-मूलनक्षत्रयोस्सन्धौ चतस्रश्चतस्रो घट्यो नक्षत्रगण्डान्तम्भवति।

अत्र आचार्यो रामदैवज्ञो मुहूर्तचिन्तामणौ विवाहप्रकरणे गण्डान्तदोषं विवेचयँल्लिखति, यथा[२५] —

**ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्मं च मूलाश्विनी-**
**पित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गण्डान्तकम्।**
**कर्काल्यण्डजभान्ततोऽर्धघटिका सिंहाश्वमेषादिगा**
**पूर्णान्ते घटिकात्मकं त्वशुभदं नन्दातिथेश्चादिमम्॥** इति॥

अत्रापि श्लोके नक्षत्रगण्डान्तं, लग्नगण्डान्तं तथा तिथिगण्डान्तमिति गण्डान्तत्रितयस्य लक्षणं कथितमाचार्येण।

**तत्र प्रथमं नक्षत्रगण्डान्तं कथयति-**

ज्येष्ठाया अन्ते, रेवत्या अन्ते तथा आश्लेषाया अन्ते घटिकाद्वयं गण्डान्तं भवति। तथा च मूलस्यादौ, अश्विन्या आदौ तथा मघाया आदौ घटिकाद्वयं गण्डान्तं भवति। एतेन रेवत्यश्विन्योः, आश्लेषामघयोस्तथा ज्येष्ठामूलयोस्सन्धिस्थाने चतस्रश्चतस्रो घटिका अशुभसूचकं नक्षत्रगण्डा-

२३. मुहूर्तपारिजात, परिचयप्रकाण्ड, प्रकीर्णशाखा, पृ. ६७।
२४. बृहत्पाराशरहोराशास्त्रम्, गण्डान्तोद्भवशान्त्यध्यायः (अध्याय-९३), श्लोकः ३।
२५. मुहूर्तचिन्तामणिः ६/४३, पीयूषधाराम्।

न्तम्भवतीति फलितार्थः। एवमेव लग्नगण्डान्तमेकघटीमितम्, तथा तिथिगण्डान्तङ्घटिकाद्वयं सर्वमपि महर्षिपराशरोक्तघटिकातुल्यमेवोक्तम्।

किं वा नक्षत्रगण्डान्तविवेचनक्रमे पीयूषधाराटीकाकारेण रत्नमालाया वचनं, वसिष्ठस्य च वचनं समुपस्थाय रामाचार्यस्य मतं समर्थितम्। यथा रत्नमालाया वचनम्[२६] —

**पौष्णाश्विन्योः सार्पमित्रर्क्षयोश्च**
**यच्च ज्येष्ठामूलयोरन्तराम्।**
**तद्गण्डान्तं स्याच्चतुर्नाडिकं हि**
**यात्राजन्मोद्वाहकालेष्वनिष्टम्॥** इति॥

पुनः वसिष्ठवचनम्[२७] —

**यदन्तरालं पितृसार्पयोश्च मूलेन्द्रयोराश्विनपौष्णयोश्च।**
**भसन्धिगण्डान्तमिति त्रयं तद्यामप्रमाणं शुभकर्महन्तृ॥** इति॥

एवं हि नारदवचनं यथा[२८] —

**सार्पेन्द्रपौष्णभेष्वन्त्यनाडीयुग्मं तथैव च।**
**तदग्रभेष्वाद्यपादभानां गण्डान्तसंज्ञकाः॥** इति॥

एवमेव नारायणदैवज्ञस्य मते[२९] —

**सार्पेन्द्रान्तिमभात्ततोऽब्धिघटिकं** पूर्णां ततोऽब्ध्यर्धकम्॥ इति॥

पुनश्च ग्रन्थान्तरे तु नक्षत्रगण्डान्तं पञ्चदशघटिकाप्रमाणं कथितम्। तद्यथा[३०] —

**अश्विनीमघमूलादौ त्रिवेदनववनाडिकाः।**
**रेवतीसार्पशक्रान्ते मासरुद्ररसास्तथा॥** इति॥

---

२६. तत्रैव, मुहूर्तचिन्तामणिः ६/४३, पीयूषधाराम्।
२७. तत्रैव, मुहूर्तचिन्तामणिः ६/४३, पीयूषधाराम्।
२८. नारदसंहिता, २९/४०।
२९. मुहूर्तमार्तण्डः, विवाहप्रकरणम्, श्लोक १९।
३०. ज्योतिषचन्द्रिका, जातकप्रकरण, श्लोक ३२।

अर्थादश्विन्या आदौ तिस्रो घटिका:, मघाया आदौ चतस्रो घटिकास्तथा मूलस्यादौ नव घटिका नक्षत्रगण्डान्तम्भवति। पुना रेवत्या अन्ते द्वादशघटिका:, आश्लेषाया अन्त एकादश-घटिकास्तथा ज्येष्ठाया अन्ते षड्घटिका नक्षत्रगण्डान्तम्भवति।

स्पष्टतायै सारणी अवलोकनीया —

| नक्षत्रगण्डान्तम् | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | गण्डान्तघट्य: | | | गण्डान्तघट्य: | | | गण्डान्तघट्य: | | | आहृत्य गण्डान्त घट्य: |
| नक्षत्राणि | रेवत्यन्ते | अश्विन्यादौ | | आश्लेषान्ते | मघादौ | | ज्येष्ठान्ते | मूलादौ | | |
| पराशरमते | 2 | 2 | | 2 | 2 | | 2 | 2 | | 4 |
| रामाचार्यमते | 2 | 2 | | 2 | 2 | | 2 | 2 | | 4 |
| रत्नमालायाम् | 2 | 2 | | 2 | 2 | | 2 | 2 | | 4 |
| वसिष्ठमते | 2 | 2 | | 2 | 2 | | 2 | 2 | | 4 |
| नारदमते | 2 | 2 | | 2 | 2 | | 2 | 2 | | 4 |
| नारायणदैवज्ञ मते | 2 | 2 | | 2 | 2 | | 2 | 2 | | 4 |
| ग्रन्थान्तरे | 12 | 3 | | 11 | 4 | | 6 | 9 | | 15 |

नक्षत्रगण्डान्तस्य परिहार:[३१] -

नक्षत्रगण्डान्तदोषो विवाह-यात्रादिमाङ्गलिककार्येषु त्याज्यो भवति। किन्तु नक्षत्र-शान्त्या नक्षत्रगण्डान्तदोषस्य शमनं भवति।

**त्रिविधगण्डान्तपरिहार:-**

अभिजिन्मुहूर्ते कश्चिदपि गण्डान्तदोष: प्रभावी न भवति। यथा वसिष्ठस्य वचनम्[३२] -

**गण्डान्तदोषमखिलं मुहूर्तोऽभिजिदाह्वय:।**
**हन्ति यद्वन्मृगं व्याध: पक्षिसङ्घमिवाखिलम्॥** इति।

केन्द्रगताश्शुभग्रहा भवन्ति अथवैकादशे चन्द्रो भवति तदा समस्तगण्डान्तदोषा नश्यन्ति। यथा उक्तञ्ज्योतिर्निबन्धे[३३] —

३१. मुहूर्तपारिजात, परिचयप्रकाण्ड, प्रकीर्णशाखा, पृ. ६७।
३२. मुहूर्त पारिजात:, परिचयप्रकाण्ड:, प्रकीर्ण प्रशाखा, पृ. ६७।
३३. तत्रैव, मुहूर्त पारिजात:, परिचयप्रकाण्ड:, प्रकीर्ण प्रशाखा, पृ. ६७।

**तिथ्यादीनां सन्धिदोषं तथा गण्डान्तसंज्ञितम्।**
**हन्ति लाभगतश्चन्द्रः केन्द्रगा वा शुभग्रहाः॥** इति।

**१०. अभुक्तमूलविचारः —**

एवं हि ज्योतिषशास्त्रे गण्डान्तत्रितयमशुभजनकङ्कथितमेव, ज्येष्ठामुलयोर्मध्यगत-गण्डान्तन्तु अभुक्तमूलसंज्ञकमुक्त्वा महाऽशुभप्रदङ्कथितं महर्षिपराशरेण। यथा[३४] -

**गण्डान्तत्रितयं जन्म-यात्रादौ मृतिदं तथा।**
**शाक्रमूलभयोः सन्धौ शरा नागाश्च नाडिकाः॥**
**क्रमादभुक्तमूलाख्या महाविघ्नप्रदायकाः।**
**तस्मात्तत्कालजातानां शान्तिं कुर्याद्विचक्षणः॥** इति॥

अत्र ज्येष्ठामुलयोस्सन्धौ (5+8 = 13) त्रयोदशघटिका महाविघ्नकरा अभुक्तमूलसंज्ञका भवन्तीति विशेषमुक्तम्। अर्थाज्ज्येष्ठाया अन्ते पञ्च घट्यस्तथा मूलस्यादावष्टौ घट्यः, आहत्य त्रयोदशघटिका अभुक्तमूलसंज्ञका इति पराशरस्य मतम्।

किन्तु अत्र महर्षिपराशरेण अभुक्तमूलस्य यल्लक्षणमुक्तन्न तथा नारदस्य नैव च वसिष्ठस्य, नैव हि बृहस्पतेर्मतम्। यथा रामाचार्यस्त्रयाणामपि मतान्येकेनैव श्लोकेन प्रतिपादयँल्लिखति -

**अभुक्तमूलं घटिकाचतुष्टयं ज्येष्ठान्त्यमूलादिभवं हि नारदः।**
**वसिष्ठ एकद्विघटीमितं जगौ बृहस्पतिस्त्वेकघटीप्रमाणकम्॥**

अत्र नारदस्य मते ज्येष्ठाया अन्ते घटिकाचतुष्टयन्तथा मूलस्यादौ घटिकाचतुष्टयम्, आहत्याष्टौ घटिका अभुक्तमूलम्भवति। पीयुषधाराटीकाकारेणात्रोपलक्षणत्वादाश्लेषान्तिमघटी-चतुष्टयम्मघादिघटीचतुष्टयञ्चाभुक्तमूलाख्यः कालः कथितः। तत्रैव तेन प्रसङ्गेऽस्मिन् महर्षिनारद-स्यापि वचनमुपन्यस्तम्, यथा[३६] —

**यो ज्येष्ठामुलयोरन्तरालप्रहरजः शिशुः।**
**अभुक्तमूलजः सार्पमघानक्षत्रयोरपि॥** इति॥

३४. बृहत्पाराशरहोराशास्त्रम्, ९३/५-६।
३५. मूहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५३।
३६. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५३, पीयूषधाराटीका।

किन्तु वसिष्ठस्य मते ज्येष्ठाया अन्तिमैका घटी तथा मूलस्यादिमे द्वे घट्यौ, आहत्य घटीत्रयम् अभुक्तमूलम्भवति। अत्रापि पीयूषधाराटीकाकारो वसिष्ठस्य वचनमुपस्थापितम्, यथा[३७]–

**ज्येष्ठान्त्यपादघटिकामितमेव केचिन्**
**मूलं ह्यभूक्तमपरे पुनरामनन्ति।**
**मूलाद्यपादघटिकाद्वितयेन सार्ध-**
**मष्टौ समाः परिहरेदिह जन्मभाजम्॥** इति॥

ततश्चाचार्यरामदैवज्ञेन बृहस्पतेर्मतं लिखितं यज्ज्येष्ठाया अन्ते अर्धघटिकामितः कालस्तथा मूलस्यादावर्धघटिकामितः कालः, आहत्यैकघटीमितः कालोऽभुक्तमूलम्भवतीति। तत्रापि पीयूषधाराटीकाकारो गुरोर्वचनं समुपस्थापितम्, यथा[३८] –

**ज्येष्ठान्त्यघटिकार्धं च मूलादौ घटिकार्धकम्।**
**तयोरन्तर्गता नाड़ी ह्यभुक्तमूलमुच्यते॥**

एवमभुक्तमूलस्य मतत्रयमुक्त्वा चतुर्थमपि मतं समुपस्थापितमाचार्यरामदैवज्ञेन, यथा[३९]–

**अथोचुरन्ये प्रथमाष्टघट्यो मूलस्य शाक्रान्तिमपञ्चनाड्यः।**
**जातं शिशुं तत्र परित्यजेद्वा मुखं पिताऽस्याष्टसमा न पश्येत्॥** इति॥

अर्थादभुक्तमूलस्य चतुर्थम्मतं यज्ज्येष्ठाया अन्तिमाः पञ्च घट्यस्तथा मूलस्यादिमा अष्टौ घट्यः, आहत्य त्रयोदश घटिका अभुक्तमूलं भवतीति।

वस्तुतो दैवज्ञरामाचार्योक्तमन्यमतमेव महर्षिपराशरस्य मतेन साम्यम्भजते। किन्त्व-भुक्तमूलस्योपर्युक्तेषु चतुर्षु भेदेषु को भेदः साधीयानित्यत्र पीयूषधाराटीकाकारस्य गोविन्ददैवज्ञस्य मते महर्षिनारदस्य पक्षः साधीयान्। तत्कथमित्यत्र तस्य युक्तिर्यन्नारदस्य मतं बहूनां मुनीनां मतैस्सह साम्यम्भजते। यथा तत्रैव कश्यपवचनं लिखति गोविन्ददैवज्ञः पीयूषधारायाम्[४०] –

३७. तत्रैव, मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५३, पीयूषधाराटीका।
३८. तत्रैव, मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५३, पीयूषधाराटीका।
३९. मुहुर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५४।
४०. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५४, पीयूषधाराटीका।

**ज्येष्ठामुलयोरन्तरालयामोद्भवः शिशुः।**
**अभुक्तमूलजः सोप्याश्लेषापितृभयोरपि॥** इति॥

अत्र ध्यातव्यमिदमप्यस्ति यत् पीयूषधाराकारारेणास्मिन् प्रसङ्गेऽपि वसिष्ठस्य वचनानन्तरं समुपस्थापितम्। तत्र प्रहरप्रमाणम् अभुक्तमूलं भवतीति कथितमस्ति। तद् यथा[४१] –

**भुजङ्गपौरन्दरपौष्णभानां तदग्रभानां च यदन्तरालम्।**
**अभुक्तमूलं प्रहरप्रमाणं त्यजेत्सुतं तत्रभवां सुताञ्च॥** इति॥

वस्तुतोऽत्र वसिष्ठस्योभयोरपि वचनयोरवलोकनेनेदन्ध्वनितम्भवति यत् पूर्वोक्तश्लोके वसिष्ठः ''केचिदपरे'' इत्युक्त्वा नहि स्वकीयस्य, किं वा केषाञ्चिदन्येषाम्मतमस्तीत्युक्तम्। अर्थात् पूर्वप्रतिपादितं वसिष्ठवचनोक्तं मतं नहि साक्षाद् वसिष्ठस्य, अपि तु केषाञ्चिदन्येषाम्मतम्। किन्त्वनन्तरोक्तवसिष्ठवचने तस्य स्वकीयं मतमस्ति। तत्र ज्येष्ठामूलयोर्मध्ये तथाऽऽश्लेषामघयोर्मध्ये प्रहरसम्मितः कालः, अर्थात् अष्टौ घट्योऽभुक्तमूलम्भवति।

एतेषामुपर्युक्तानां सर्वेषामप्यभुक्तमूललक्षणजन्यमतानान्दिग्दर्शनमधस्तात् सारणीमध्ये द्रष्टुं शक्यते।

| अभुक्तमूलघट्यः | | | |
|---|---|---|---|
| | ज्येष्ठान्ते घट्यः | मूलादौ घट्यः | आहत्य घट्यः |
| पराशरमते | 5 | 8 | 13 |
| नारदमते | 4 | 4 | 8 |
| कश्यपमतम् | 4 | 4 | 8 |
| वसिष्ठमतम् | 4 | 4 | 8 |
| वसिष्ठोक्तम् मतान्तरम् | 1 | 2 | 3 |
| बृहस्पतिमतम् | 1/2 | 1/2 | 1 |

४१. तत्रैव, मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५४, पीयूषधाराटीका।

अत्र ह्यभुक्तमूलजातस्य शिशो: परित्याग: कर्तव्य इति शास्त्रादेश:। चेत्यागो न सम्भवस्स्यात्तदाऽष्टौ वर्षाणि यावदभुक्तमूलोत्पन्नस्य बालकस्य कन्यकाया वा पिता मुखन्न पश्येदिति शास्त्रादेश:। यथा च्यवनमुनेर्मतं समुपस्थापयत्याचार्यो गोविन्ददैवज्ञ: पीयूषधारायाम्[४२]–

**अभुक्तमूलभे भवं परित्जेच्च बालकं**
**समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत्॥** इति॥

एतेनेदम्फलितम्भवति यदष्टवर्षानन्तरमभुक्तमूलजन्यो दोष: स्वतो नश्यति–इति।

चेदष्टौ वर्षाणि यावच्छिशोरनवलोकनमपि न सम्भवन्तदा शान्ति: कर्तव्या। शान्त्यनन्तरमभुक्तमूलजन्यो दोषो नाशमुपयाति। यथोक्तमपि महर्षिपराशरेण –

**क्रमादभुक्तमूलाख्या महाविघ्नप्रदायका:।**
**तस्मात् तत्कालजातानां शान्तिं कुर्याद् विचक्षण:॥** इति॥

एवमेव नारदेनाप्युक्तम्, यथा[४४] —

**अभुक्तमूलजं पुत्रपुत्रीमपि परित्यजेत्।**
**अथवाष्टाब्दकं तातस्तन्मुखं न विलोकयेत्॥** इति॥

तच्च शान्तिविधानं विस्तरभियाऽत्र नोल्लिख्यते। तस्य विस्तरं वर्णनं ग्रन्थान्तरे बृहत्पाराशरे वा द्रष्टव्यम्।

### ११. मूलाश्लेषाजातस्य चरणवशेन शुभाशुभफलम् —

मूलाश्लेषानक्षत्रयोर्गणना नक्षत्रगण्डान्तविचारे तथा अभुक्तमूलविचार उभयत्र भवतीति पूर्वविवेचनया स्पष्टमेव। इदानीमनयोर्नक्षत्रयोश्चरणवशेनापि शुभाशुभत्त्वम्भवतीति विचार्यते। तदत्र मुहूर्तचिन्तामणौ लिखति रामाचार्य: —

---

४२. तत्रैव, मुहूर्तचिन्तामणि:, नक्षत्रप्रकरणम्, श्लोक ५४, पीयूषधाराटीका।
४३. बृहत्पाराशरहोराशास्त्रम्, ९३/६।
४४. सङ्ग्रहशिरोमणि:, चतुर्दशी प्रभा, श्लोक ८३।

**आद्ये पिता नाशमुपैति मूले पादे द्वितीये जननी तृतीये।**
**धनं चतुर्थोऽस्य शुभोऽथ शान्त्या सर्वत्र सत्स्यादहिभे विलोमम्॥**

अर्थान्मूलनक्षत्रस्य प्रथमे चरणे यदि जन्म भवति तदा पितुर्नाशः, द्वितीयचरणे मातृनाशः, तृतीयचरणे धननाशस्तथा चतुर्थचरणे जन्म भवति तदा शुभं भवति। किन्त्वाश्लेषानक्षत्र एतद्विपरीतम्भवति। अर्थादाश्लेषानक्षत्रस्य चतुर्थचरणे यदि जन्म भवति तदा पितुर्नाशः, तृतीयचरणे मातृनाशः, द्वितीयचरणे धननाशस्तथा आश्लेषानक्षत्रस्य प्रथमचरणे जन्म भवति तदा शुभम्भवति।

एवमेव व्यासेनाप्युक्तम्, यथा[४६] -

**मूलाद्यंशे पितुर्नाशो द्वितीये मातुरेव च।**
**तृतीये धनधान्यादिनाशस्तुर्ये धनागमः॥** इति॥

मरीचिना तु पूर्वापरार्धेन फलमाह, यथा[४७] —

**अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता।**
**पूषाहिशक्रपश्चार्धे जननी बाध्यते पिता॥** इति॥

वसिष्ठस्तु दिनरात्रिभेदेन मूलस्य फलमाह, यथा[४८] —

**मूलाद्यपादो दिवसे यदि स्या-**
**त्तज्जः पितुर्नाशनकारणं स्यात्।**
**द्वितीयपादो यदि रात्रिभागे**
**तदुद्भवो मातृविनाशकः स्यात्॥**
**मूलाद्यपदो यदि रात्रिभागे**
**तदात्मनो नास्ति पुनर्विनाशः।**

४५. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५५।
४६. सङ्ग्रहशिरोमणिः, चतुर्दशी प्रभा, श्लोक ८४।
४७. सङ्ग्रहशिरोमणिः, चतुर्दशी प्रभा, श्लोक ८५।
४८. सङ्ग्रहशिरोमणिः, चतुर्दशी प्रभा, श्लोक ८६।

**द्वितीयपादो दिनगो यदि स्या-**
**न्न मातुरल्पोऽस्ति तदास्ति दोषः ॥** इति।

नारदसंहितायां तु एवमुक्तम्, यथा[४९] —

**दिवाजातस्तु पितरं रात्रौ तु जननीं तथा।**
**आत्मानं सन्ध्ययोर्हन्ति नास्ति गण्डो निरामयः ॥** इति ॥

एतस्यायम्भावः — दिवा जातो मूलोत्पन्नो बालकः पितरं हन्ति, रात्रौ जातो मूलोत्पन्नो बालको मातरं हन्ति तथा सन्ध्ययोर्जातो मूलोत्पन्नो बालको निजस्य हानिं करोति। एतेन नारदसंहिताया वचनेनेदम्फलितम्भवति यन्मूलनक्षत्रस्य कस्मिँश्चिदपि भागे जातकस्य जन्म भवति तदा दोषो भवत्येवेति।

प्रसङ्गेऽस्मिञ्जयार्णवे तु मूलनक्षत्रं वृक्षरूपम्पुरुषरूपञ्च प्रकल्प्य शुभाशुभफलङ्कथितम्। तद्यथा मूलवृक्षे घटीविन्यासस्तत्फलञ्च[५०] —

**मूलं स्तम्भस्त्वचा शाखा पत्रं पुष्पं फलं शिखा।**
**मुनयोऽष्टौ दिशो रुद्राः सूर्याः पञ्चाब्धयोऽग्नयः ॥**
**मूले तु 7 मूलनाशः स्यात् स्तम्भे 8 वंशविनाशनम्।**
**त्वचि 10 मातुर्भवेत्क्लेशः शखायां 11 मातुलस्तथा ॥**
**पत्रे 12 राज्यं विजानीयात् पुष्पे 5 मन्त्रिपदं स्मृतम्।**
**फले 4 च विपुला लक्ष्मीः शिखाया 3 मल्पजीवितम् ॥** इति ॥

स्पष्टतायै मूलवृक्षज्ञानचक्रमवलोकनीयम् —

| वृक्षाङ्गम् | मूलम् | स्तम्भः | त्वचा | शाखा | पत्रम् | पुष्पम् | फलम् | शिखा |
|---|---|---|---|---|---|---|---|---|
| घटी | 7 | 8 | 10 | 11 | 12 | 5 | 4 | 3 |
| फलम् | मूलनाशः (सर्वनाशः) | वंशनाशः | मातृक्लेशः | मातुलकष्टम् | राज्यलाभः | मंत्रीपदम् | विपुलधनाप्तिः | अल्पायुः |
| | | 36 घट्यः (अशुभम्) | | | 21 घट्यः (शुभम्) | | | 3 घट्यः (नेष्टम्) |

४९. सङ्ग्रहशिरोमणिः, चतुर्दशी प्रभा, श्लोक ८८।
५०. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५५, पीयूषधाराटीका।

तत्रैव मूलपुरुषे घटीविन्यासस्तत्फलञ्च —

**मूलस्य घटिकान्यासो मूर्ध्नि पञ्च 5 नृपो भवेत्।**
**मुखे सप्त 7 मृतिः पित्रोः, स्कन्धे वेदा 4 महाबलः॥**
**बाह्वोरष्टौ 8 बली पाण्योस्तिस्रो 3 हस्तान्वितो भवेत्।**
**हृदि खेटा 9 भूपमन्त्री नाभौ द्वौ 2 ब्रह्मविद्भवेद्।**
**गुह्ये दशा 10 तिकामी स्याज्जानुनोः षण् 6 महामतिः॥**
**पादयोः षण् 6 मतिस्तस्येत्युक्तवान् कमलासनः॥** इति॥

स्पष्टतायै मूलपुरुषचक्रमवलोकनीयम् —

| स्थानम् | शीर्षम् | मुखम् | स्कन्धः | बाहू | हस्तौ | हृदयम् | नाभिः | गुह्यम् | जानुनी | पादौ |
|---|---|---|---|---|---|---|---|---|---|---|
| घटी | 5 | 7 | 4 | 8 | 3 | 9 | 2 | 10 | 6 | 6 |
| फलम् | नृपत्वम् | मातृपितृमृत्युः | महाबली | बलम् | हस्तिलाभः | राजमन्त्री | ब्रह्मज्ञानी | अतिकामी | महामतिमान् | मतिमान् |

केचित्तु कन्यायाः कृते पृथगेव मूलाङ्गविभागन्तत्फलञ्चामनन्ति। तद्यथा पीयूषधारायामेव[५१] –

**चतस्रो 4 नाडिकाः शीर्षे कुर्वन्ति पशुनाशनम्।**
**मुखे षड् 6 धनहानिश्च कण्ठे पञ्च 5 धनागमः॥**
**कौटिल्यं हृदये पञ्च 5 बाह्वोर्वित्तागमं च तत्।**
**वेदाः 4 पाण्योर्दयाधर्म वेदा 4 गुह्येऽति कामिनि॥**
**ज्येष्ठमातुलनाशश्च जंघयोर्युग 4 नाडिकाः।**
**ज्येष्ठभ्रातृविनाशश्च चतस्रो 4 जानुयुग्मके॥**
**पादयोर्दशनाड्यश्च 10 तत्र वैधव्यमादिशेत्।**
**इति मूलजकन्यायाः फलमीरितमीदृशम्॥** इति॥

अत्र पीयूषधाराटीकाकार एवं स्पष्टयति भावं, यथा – शीर्षे चतस्रो 4 घटिकाः, मुखे षट् 6, कण्ठे पञ्च 5, हृदये पञ्च 5, बाह्वोर्बाहुद्वये पञ्च पञ्चेति 5/5 कल्प्यावीप्सा। पाण्योर्मणिबन्धादधोभागयोश्चतस्रः चतस्रः4/4 इत्यत्रापि वीप्सा कल्प्या। गुह्ये चतस्रः 4

५१. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५५, पीयूषधाराटीका।

जंघयोर्जंघाद्वये द्वे द्वे 2/2 एवं चतस्त्रः जानुद्वये द्वे द्वे 2/2 एवं चतस्त्रः पादयोः पादद्वये पञ्च पञ्चेत्येवं 5/5 दश एवं मिलित्वा षष्टिघटिकाः 60 भवन्ति।

स्पष्टतायै सारणी अवलोकनीया –

| स्थानम् | शीर्षम् | मुखम् | कण्ठः | हृदयम् | बाहू | पाणी | गुह्यम् | जंघे | जानुनी | पादौ |
|---|---|---|---|---|---|---|---|---|---|---|
| घटी | 4 | 6 | 5 | 5 | 10 | 8 | 4 | 4 | 4 | 10 |
| फलम् | पशु नाशः | धन हानिः | धनाप्तिः | कुटि लता | धना गमः | दया | कामिनी | ज्येष्ठमातुल नाशः | ज्येष्ठभ्रातृ हानिः | वैधव्यम् |

पुनश्च तत्रैव आश्लेषाजातयोस्स्त्रीपुंसोरङ्गविभागेन फलं लिखति पीयूषधाराटीकाकारो यथा[५२] –

**मूर्ध्नि पञ्च 5 सुपुत्राप्तिर्मुखे सप्त 7 पितृक्षयः।**
**नेत्रे द्वे 2 जननीनाशो ग्रीवायां लम्पटस्त्रिषु 3 ॥**
**स्कन्धे वेदा 4 गुरौ भक्तिर्हस्तेऽष्टौ 8 च बली भवेत्।**
**हृद्येकादशभि 11 श्चात्मघाती संजायते नरः॥**
**श्रीमान्नाभौ भ्रमः षड्भि 6 र्गुदे नन्दै 9 स्तपोधनः।**
**पादे पञ्च 5 धनं हन्ति सार्पादेतत्फलं क्रमात्॥** इति॥

स्पष्टतायै सारणी अवलोकनीया —

| स्थानम् | मूर्धा | मुखम् | नेत्रम् | ग्रीवा | स्कन्धः | हस्तौ | हृदयम् | नाभिः | गुदा | पादौ |
|---|---|---|---|---|---|---|---|---|---|---|
| घटी | 5 | 7 | 2 | 3 | 4 | 8 | 11 | 6 | 9 | 5 |
| फलम् | राज्याप्तिः | पितृहानिः | मातृनाशः | लम्पटः | गुरुभक्तिः | बली | आत्मघातः | श्रीमान् | तपस्वी | धननाशः |

एवं हि मूलवृक्षमिव आश्लेषावृक्षमपि प्रकल्प्य तत्र जातस्य शिशोश्शुभाशुभफलविचारो दृश्यते शास्त्रे। तद् यथा[५३] –

**फलं पुष्पं दलं शाखा त्वग्लता कन्द एव च।**
**सार्पवल्यां दशा 10 क्षां 5 क 9**

५२. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५५, पीयूषधाराटीका।
५३. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५५, पीयूषधाराटीका।

**स्वर 7 विश्वा 13 र्क 12 सागराः 4॥**
**नाडिकास्तद्भवे बाले फलं ज्ञेयं यथाक्रमम्।**
**श्रीः श्री राजभयं हानिर्मातृपित्रात्मसंक्षयः॥**
**भवन्त्येवे न सन्देहो ऽनिष्टे शान्तिः शुभावहा॥** इति॥

स्पष्टतायै आश्लेषा-वृक्ष-सारणी अवलोकनीया-

| विभागः | फलम् | पुष्पम् | दलम् | शाखा | त्वक् | लता | मूलम् |
|---|---|---|---|---|---|---|---|
| घटी | 10 | 5 | 9 | 7 | 13 | 12 | 4 |
| फलम् | श्रीः | श्रीः | राजभयम् | हानिः | मातृनाशः | पितृनाशः | स्वनाशः |

उपर्यक्तेषु मूलवृक्ष-आश्लेषावृक्षादिनक्षत्रविभागेषु प्रतिपादितानि घट्यात्मकमानानि नक्षत्रस्य षष्टिघटिकात्मकत्वे ज्ञेयानि। नक्षत्रमानस्य न्यूनाधिकत्वे तु त्रैराशिकेन स्वयं तेषां मानानि ज्ञेयानि।

एवमुपर्युक्तस्य मूलदोषस्य कदाचित् परिहारोऽपि भवतीति शास्त्रसम्मतिः। तदत्र मुर्तचिन्तामणौ लिखति आचार्यः रामदैवज्ञो यथा[५४] -

**स्वर्गे शुचिप्रोष्ठपदेषु माघे भूमौ नभःकार्तिकचैत्रपौषे।**
**मूलं ह्यधस्तात्तु तपस्यमार्गवैसाखशुक्रेष्वशुभं च तत्र॥**

शुचिः = आषाढः, प्रौष्ठपदः = भाद्रपदः, इषः = आश्विनः, नभः = श्रावणः, तपस्यः = फाल्गुनः, शुक्रः = ज्येष्ठा।

अर्थात् आषाढ-भाद्रपद-आश्विन-माघमासेषु मूलस्य स्वर्गे वासः भवति, श्रावण-कार्तिक-चैत्र-पौषेषु तस्य भूमौ वासो भवति तथा फाल्गुन-मार्गशीर्ष-वैशाख-ज्येष्ठमासेषु मूलं पाताललोके तिष्ठति। मूलस्य यत्र वासो भवति तत्रैव तस्य अशुभम्फलमपि भवति।

अत्र पीयूषधाराटीकाकारः सप्रमाणं भावं स्पष्टयँल्लिखति यत्[५५] - ''द्रव्याद्यभावेन शान्तिकं कर्तुमशक्नुवतः पुंसः स्वर्गपातालनिवासित्वेन मूलस्यारिष्टदोषस्तथा न प्रभवेत्। यदा तु भूमावेव निवासस्तदा दोषनिवारणं नैव स्यादित्यशक्तेनापि शान्तिकं विधेयम्। नैतावता

५४. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५६।
५५. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५६, पीयूषधाराटीका।

प्रागुक्ते विषये शान्त्यभाव एव किन्तु यथाशक्ति तत्रापि शान्तिकं विधेयम्। शक्तेन तु सर्वत्रैव विधेयम्। तदुक्तं ज्यौतिषार्णवे[५६] –

**मार्गफाल्गुनवैशाखज्येष्ठे मूलं रसातल॥**
**माघाश्विननभस्येषु शुचौ मूलं सुरालये॥**
**पौषश्रावणचैत्रेषु कार्तिके भूमिसंस्थितम्।**
**भूमिष्ठं दोषबहुलं स्वल्पमन्यत्रसंश्रितम्॥''** इति॥

प्रसंगेऽस्मिन् ज्योतिषरत्ने सङ्क्रान्तिपरत्वेनापि मूलनिवासोऽभिहितः। तद् यथा[५७] –

**वृषालिसिंहेषु घटे च मूलं दिवि स्थितं, युग्मतुलाङ्गनान्त्ये।**
**पातालगं, मेषधनुःकुलीरनक्रेषु मृत्याविति संस्मरन्ति॥**
**स्वर्गे मूले भवेद्राज्यं पाताले च धनागमः।**
**मृत्युलोके यदा मूलं तदा शून्यं समादिशेत्॥** इति॥

अत्र मेषार्के, धनुरर्के, कुलीरार्के, तथा मकरार्के मूलवासः मृत्युलोके कथितः। अर्थात् मेष–धनुः–कर्क–मकरराशिषु यदा भवति सूर्यस्तदा मूलं मृत्युलोके तिष्ठति। एतेषु चतुर्षु राशिषु स्थितेषु सूर्येषु मूलनक्षत्रोत्पन्नस्य जातकस्य मूलशान्तिरवश्यमेव कार्या।

एवं ह्यभुक्तमूलविषयेऽथवा मूलविषय आचार्याणान्नैकमत्यमिति पूर्वविवेचनया स्पष्टमेव। अतस्तत्र विद्भिर्देशकालानुगुणं विवेकेन निर्णयः कर्तव्य इति दिक्॥

**सहायकग्रन्थविवरणम्**

१. बृहत्पाराशरहोराशास्त्रम्, महर्षिपराशरः, सम्पादकः – प. देवचन्द्रझा, चौखम्भा संस्कृत संस्थान, वाराणसी, १९९० ई.।
२. सङ्ग्रहशिरोमणिः, श्रीसरयूप्रसादद्विवेदी, सम्पादकः – आ. कमलाकान्तशुक्लः, सम्पूर्णानन्दसंस्कृतविश्व–विद्यालयः, वाराणसी, १९९६ ई.।
३. नारदसंहिता, महर्षिनारदः, सम्पादकः – आ. रामजन्ममिश्रः, चौखम्भा संस्कृत संस्थान,

५६. तत्रैव, मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५६, पीयूषधाराटीका।
५७. मुहूर्तचिन्तामणिः, नक्षत्रप्रकरणम्, श्लोक ५६, पीयूषधाराटीका।

वाराणसी, १९८४ ई.।
४. मुहूर्तमार्तण्डः, नारायणदैवज्ञः, सम्पादकः - पं. कपिलेश्वर शास्त्री, चौखम्भा संस्कृत संस्थान, वाराणसी, १९९१ ई.।
५. मुहूर्तपारिजात, पं. सोहनलाल व्यासः, सम्पादकः- पं. सीताराम झा, चौखम्बा विद्याभवन, वाराणसी, १९८८ ई.।
६. मुहूर्तचिन्तामणिः, रामदैवज्ञः, सम्पादकः - आ. विन्ध्येश्वरी प्रसाद द्विवेदी, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २०१४ ई.।
७. ज्योतिषचन्द्रिका, पं. रेवती रमण झा, सम्पादकः - दै. चन्द्रशेखर झा, पं. रेवतीरमण झा, ग्राम - मधुपिर, पत्रा-कमतौल (दरभंगा), सं. १९९५।

*****

**प्रो. हंसधर झा**
आचार्यो विभागाध्यक्षश्च, ज्योतिषविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

# भौमचारः

— डॉ. अवधेशकुमारश्रोत्रियः

भौमः इत्युक्ते भूमेः पुत्रः भौमः। चारस्यार्थं चलनम् गतिश्चेति। अर्थात् यथा यथा भूमिपुत्राः द्वादशराशीनां भोगं करोति तथा तथा आकाशे तस्य स्वरूपं दृश्यते, तस्य स्वरूपस्य लक्षणं तत्फलञ्च भौमचाररूपेण कथ्यते। अतः भौमचारस्य लक्षणं तत्फलं विषयेऽस्मिन् पराशर-गर्गादिमुनीनां मतानि। भौमस्य पञ्चमुखानि कथ्यन्ते। तद्यथा —

**उष्णमश्रुमुखं व्यालं रुधिराननमेव च।**
**निस्त्रिंशमुशलं चेति पञ्चवक्त्राणि भूसुते॥**[1]

अर्थात् १. उष्णमुखभौमः, २. अश्रुमुखभौमः, ३. व्यालमुखभौमः, ४. रुधिराननभौमः, ५. असिमुशलमुखभौमश्चेति पञ्चमुखानि।

**१. उष्णमुखमङ्गलस्य लक्षणं तत्फलञ्च**

अत्र मङ्गलस्य उदयनक्षत्रात् अस्तनक्षत्रात् वा वक्रगतिं दृष्ट्वा पञ्चविधमङ्गलानां लक्षणमालोच्यते। ग्रहः कदा वक्री भवति इति प्रश्नस्य समाधानाय उच्यते - यदा ग्रहः अग्रनक्षत्रं न गत्वा पश्चान्नक्षत्रं प्रति आगच्छति तदा ग्रहस्य वक्रत्वम्। अर्थात् श्वस्तनग्रहराश्यादितः अद्यतनग्रहराश्यादिमानमधिकं भवति चेत् ग्रहः वक्री भवति। यथा ग्रहाणां वक्रगतित्वे कारणं सूर्यसिद्धान्ते उच्यते।

**दूरस्थितः स्वशीघ्रोच्चाद् ग्रहः शिथिलरश्मिभिः।**
**सव्येत्तराकृष्टतनुर्भवेद् वक्रगतिस्तदाः॥**[2]

कश्चिदपि ग्रहो यदा स्वशीघ्रोच्चाद् त्रिभाधिकान्तरे अर्थात् स्वशीघ्रनीचोन्मुखो गच्छति

१. बृ.सं.भौचाराध्या. पृ. १५४।
२. सू.सि.स्प.अ. श्लो. ५२।

तदा शिथिलरश्मिभिः वामभागस्तत्राकृष्टा वक्रगतिः भवति। वस्तुतः सर्वएव ग्रहाः स्वस्वकक्षासु क्रमगतिका एव। परन्तु सूर्यमभितो गच्छन्तो भूवासिजनैः कदाचिद् ग्रहाः वक्रत्वमापन्ना दृश्यन्ते। अनन्तरं ग्रहः कदा अस्तं गच्छति ? कदा उदयं गच्छति ? इत्यनयोः प्रश्नयोः समाधानाय उच्यते — सूर्यसान्निध्यात् ग्रहस्य अदर्शनवशात् अस्तत्वम्। सूर्याद्दूरे अस्तमयत्वं यच्च तस्मादन्तरिते ग्रहदर्शने उदयत्वम्।

कथितेषु पञ्चविधमङ्गलेषु उष्णमुखभौमः प्रथमः वर्तते। अत्र अस्य उष्णमुखभौमस्य लक्षणं फलं च वराहमिहिरेण सम्यक्तया लिखितम्। तद्यथा —

**यद्युदयार्क्षाद्वक्रं करोति नवमाष्टसप्तमेषु।**
**तद्वक्रमुष्णमुदये पीडाकरमग्निवार्त्तानाम्॥**[3]

यदि भौमः उदयार्क्षाद् नवमाष्टसप्तमेषु वक्रं करोतु, तर्हि तद् वक्रमुष्णमुदये अग्निवार्त्तानां पीडाकरम्, भवति। भूमिपुत्रः मङ्गलः यस्मिन् नक्षत्रे उदेति तस्मात् सप्तमनक्षत्रे अष्टमनक्षत्रे नवमनक्षत्रे वा गत्वा यदि वक्रं गच्छति तर्हि सः मङ्गलः उष्णमुखनाम्ना कथ्यते। आकाशे दृश्यमानस्य उष्णमुखभौमस्य फल यथा — ये अग्निना आजीविका निर्वहन्ति ते तस्मिन् काले महत् कष्टस्य भोगं कुर्वन्ति। अर्थात् उष्णमुखभौमविलक्षिते तदा लौहकारः, स्वर्णकारः, अग्निर्वापकवाहिन्यः, सैनिकाश्च पीडां प्राप्नुवन्ति।

**लक्षणम् —** यस्मिन् नक्षत्रे स्थितः मङ्गलः आदित्यमण्डलादुदयं करोति। तदुदयनक्षत्रात् सप्तम–अष्टम–नवमनक्षत्रे वा यदि वक्रं प्रति गमनं करोति तर्हि तद्वक्त्रम् उष्णं नाम।

**फलम् —** तदा ये अग्निना जीविका निर्वहन्ति ते सुवर्णकारलोहकारादयः तदानीं कष्टं पीडां च प्राप्नुवन्ति। तथा च वृद्धगर्गेण उच्यते —

**उदयात् नवम् कुर्यादष्टमे सप्तमेऽपि वा।**
**निवृत्तिं लोहिताङ्गस्तु तदुष्णं वक्त्रमुच्यते।**
**नरोऽग्निजीविनो ये च पचन्ति च दहन्ति च।**

३. बृ.सं. भौचाराध्याया. श्लो. ०१।

**तेषामुत्पद्यते तापो जायते धनसंक्षयः ॥**[४]

**२. अश्रुमुखमङ्गलस्य लक्षणं तत्फलञ्च**

कथितेषु पञ्चविधमङ्गलेषु उष्णमुखभौमः प्रथमः वर्तते। तदनन्तरं द्वितीयमङ्गलः अश्रुमुखभौम इत्युच्यते। विषयेऽस्मिन् वराहमिहिरेण लक्षणं फलञ्च लिखितम्। तद्यथा —

**द्वादशदशमैकादशनक्षत्राद्वक्रिते कुजेऽश्रुमुखम्।**
**दूषयति रसानुदये करोति रोगानवृष्टिं च ॥**[५]

यदि द्वादशदशमैकादशनक्षत्रात् कुजे वक्रिते अश्रुमुखम् इति। तच्च उदये रसान् दूषयति रोगान् अवृष्टिं च करोति। कुजः उदयनक्षत्रात् दशमे, एकादशे, द्वादशनक्षत्रे वा गत्वा वक्री भवति तर्हि सः अश्रुमुखभौम इति कथ्यते। अनेन लक्षणेन युक्तः भौमः संसारस्य मधुराम्ललवणतिक्तकटुकषायान् प्रत्येकरसान् दोषयति अर्थात् प्रदूषणं करोति। ते च दुष्टरसान् नराणां भक्षणमात्रात् पीडामुत्पादयन्ति। तथा अवृष्टिम् इत्युक्ते वृष्टिः न पतति। अर्थात् वृष्टिहीनतापि परिलक्षते।

**लक्षणम् —** यदि कुजः उदयनक्षत्रात् दशमे, एकादशे, द्वादशनक्षत्रे या गत्वा वक्री भवति अर्थात् विलोमं गच्छति तर्हि सः अश्रुमुखभौम इति कथ्यते।

**पफलम् —** दृश्यमाने अस्मिन् लक्षणे कुजः संसारस्य रसान् प्रदूषणं करोति। एवं वृष्टिहीनतापि परिलक्षते।

**वि.द्र. —** गर्गमुनिमतेन अश्रुमुखमङ्गलस्य दर्शने पर्जन्यो दूषयित्वा वर्षति। तेन कारणेन शुभरसाः दूषिताः भवन्ति। विषयेऽस्मिन् गर्गमुनिनाह —

**दशमैकादशे वापि द्वादशे वापि वक्रिते।**
**लोहिताङ्गे ग्रहे ज्ञेयं वक्त्रमश्रुमुखं च तत् ॥**
**तत्र वर्षति पर्जन्यो दूषयित्वा शुभान् रसान्।**
**ते दुष्टा दूषयन्त्याशु नृणां धातून् तथा भृशम् ॥**

४. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १६६।
५. बृ.सं. भौचाराध्याया. श्लो. ०२।

**बहवो व्याधयः क्रूरा उत्पद्यन्ते शरीरिणाम्।**
**बहुभिः कारणैरेतैस्ततो लोकः प्रलीयते॥**[६]

## ३. व्यालमुखमङ्गलस्य लक्षणं तत्फलं च

अश्रुमुखभौमस्यानन्तरं व्यालमुखभौमः भवति। विषयेऽस्मिन् वराहमिहिरेणोक्तम् यथा—

**व्यालं त्रयोदशर्क्षाच्चतुर्दशाद्वा विपच्यतेऽस्तमये।**
**दंष्ट्रिव्यालमृगेभ्यः करोति पीडां सुभिक्षं च॥**[७]

यदि, भौमः त्रयोदशचतुर्दशार्क्षात् वा अस्तमये विपच्यते व्यालम्। दंष्ट्रिव्यालमृगेभ्यः पीडां सुभिक्षं च करोति। यदि भौमः उदयापेक्षया अस्तनक्षत्रात् त्रयोदशनक्षत्रात् चतुर्दशनक्षत्रात् वा गत्वा वक्रिते व्यालं नाम वक्रम्। तच्च अस्तमये विपच्यते। अर्थात् यस्मिन् काले भौमोऽर्कमण्डले पुरस्तादस्तमेति तदा तत्र सः परिपाकमायातीति। इत्येव व्यालनामकमङ्गलस्य लक्षणम्। तदा 'दंष्ट्रिणः सूकरकुक्कुरादयः, व्यालाः सर्पजातयः सरिसृपाः, मृगाः आरण्यजातयः। तेभ्यः श्वानशृगालमृगादिप्राणिसकाशात् पीडा जायते। एवं च संसारे सुभिक्षं खाद्यसस्यसम्पत्ति-माधिक्यं भवति।' तथा च गर्गः —

**त्रयोदशे च नक्षत्रे यदि वापि चतुर्दशे।**
**निवृत्तिं कुरुते भौमस्तद्वक्त्रं व्यालमुच्यते॥**
**भवन्ति प्रचुरा व्यालास्तेभ्यो लोकभयं वदेत्।**
**नृपाणामशुभं विन्द्यात् सस्यसम्पत्तिमादिशेत्॥**[८]

## ४. रुधिराननभौमस्य लक्षणं तत्फलञ्च

व्यालमुखभौमस्यनन्तरं चतुर्थभौमस्य नाम भवति रुधिराननम्। तस्य लक्षणं फलञ्च वराहमिहिराचार्येण स्वग्रन्थे उच्यते। यथा —

६. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १६८।
७. बृ.सं. भौचाराध्याया. श्लो. ०३।
८. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १६९।

**रुधिराननमिति वक्रं पञ्चदशात् षोडशाच्च विनिवृते।**
**तत्काले मुखरोगं सभयं च सुभिक्षमावहति॥**[९]

भौम: पञ्चदशात् षोडशनक्षत्रात् च वक्री विनिवृते रुधिराननम् इति। तत्काले मुखरोगं सभयं सुभिक्षं च आवहति।

यदा भौम: उदयापेक्षया अस्तनक्षत्रात् पञ्चदशनक्षत्रे वा षोडशनक्षत्रे गत्वा वक्री भवति तदा रुधिराननमिति लक्षणं कथ्यते। तस्य फलं यथा — जनानां मुखे नानारोगा: भवन्ति। पुन: जनानां मनसि भयं जायते। अत्र जना: भयेन सहितमपि खाद्यसामग्र्य: उत्पादयन्ति। यथा कुफलेनापि सुफलं भवति तथा संसारे भिक्षाया: अभाव: न परिलक्षते। अर्थात् खाद्यशस्यादिनाम् उत्पादनम् अधिकं भवति।

**लक्षणम् —** यदा भौम: स्वाती नक्षत्रात् पञ्चदशे वा षोडशनक्षत्रे गत्वा वक्री भवति तदा रुधिराननमिति लक्षणं कथ्यते।

**पफलम् —** तेन कारणेन जनानां मुखे व्रणादिकं नानारोगा: भवन्ति। पुन: मनसि भयं जायते। अर्थात् नानाशङ्काभि: युक्त: मानव: सुभिक्षमावहति। गर्गस्य मतं यथा —

**यदि पञ्चदशर्क्षे भूसुत: षोडशापि वा।**
**निवृत्तिं कुरुते वक्रस्तद्विदुर्लोपितानम्॥**
**दीप्तिमन्त: पार्थिवाश्च भवन्ति प्रथिता भुवि।**
**क्षत्रकोपश्च सुमहान् मुखरोगा: भवन्ति च॥**[१०]

### ५. असिमुशलं भौमलक्षणम् तत्फलम्

रुधिराननभौमस्यानन्तरं पञ्चभौमस्य नाम भवति असिमुशलम्। तस्य लक्षणं तथा फलं वराहमिहिरेणोक्तम् यथा —

९. बृ.सं. भौचाराध्याया. श्लो. ०४।
१०. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १६९।
११. बृ.सं. भौचाराध्याया. श्लो. ०५।

**असिमुशलं सप्तदशादष्टादशतोऽपि वा तदनुवक्रे।**
**दस्युगणेभ्यः पीडां करोत्यवृष्टिं सशस्त्राभयम्॥[११]**

यदा भौमः सप्तदशाष्टादशतो वा तदनुवक्रे असिमुशलं कथ्यते। तत्काले दस्युगणेभ्यः पीडां अवृष्टिं सशस्त्रभयं च करोति। यदि भूमिपुत्रः सप्तदशे–अष्टादशे वा स्थाने गत्वा वामनक्षत्रं प्रति गच्छति तर्हि असिमुशललक्षणं कथ्यते। फलम् – आकाशे दृश्यमान असिमुशलभौमः चौराणां कृते पीडां ददाति। कष्टमपि भवति तथा अवृष्टिं वा वृष्टिं न करोति। जनानां कृते अस्त्रभयं परिदृश्यते। यथा कस्यापि आक्रमणभयं परिलक्षते। विस्फोटकादिभिः भयं परिलक्ष्यते। तथा च गर्गः —

**सप्तदशेऽष्टादशे वा लोहिताङ्गः निवर्तिते।**
**नास्त्रिांशमूशलं नाम तद्वक्त्रं परिकीर्तितम्॥**
**पशुपुत्रधनं धन्यमाहरन्ते तु दस्यवः।**
**प्राणिनां जीवनं हन्ति जायते शस्त्रासम्भ्रमः॥[१२]**

पराशरस्य मतेन

**सप्तदशेऽष्टादशे वा दस्युगणैः प्रजानामुपद्रवमवृष्टिं शस्त्रभयं च॥[१३]**

### नक्षत्रेषु सञ्चरणात् भौमस्य विशेषयोगफलम्

रविमण्डल सन्निधौ अस्तं गच्छति भौमः, रविमण्डलनिर्गते उदयं गच्छति भौम इति। अतोऽत्र नक्षत्रेषु सञ्चारवशात् भौमस्य विशेषयोगस्य फलानि कथ्यन्ते।

### भौमसंचारात् प्रथमविशेषयोगफलम्

**भाग्यार्यामोदितो यदि निवर्तते वैश्वदैवते भौमः।**
**प्राजापत्येऽस्तमितस्त्रीनामपि लोकान्नि पीडयति॥[१४]**

---

१२. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १७०।
१३. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १७०।
१४. बृ.सं. भौचाराध्याया. श्लो. ०६।

भाग्यार्यामोदितो भौमः यदि वैश्वदैवते निवर्तते तथा प्रजापत्ये अस्तमितः तदा त्रिलोकान् अपि निपीडयति यदि भाग्यं इत्युक्ते पूर्वाफाल्गुनीनक्षत्रे, अर्यमा इत्युक्ते उत्तराफाल्गुनीनक्षत्रे वा उदितो भौमः अर्थात् रविमण्डलनिर्गतो भवति। अग्रतो गत्वा वैश्वदैवते इत्युक्ते उत्तराषाढानक्षत्रे वक्रं करोति। पुनरपि सः यदि प्रजापत्ये इत्युक्ते रोहिणीनक्षत्रे अस्तं गच्छति तर्हि भौमः अशुभ इति। सः अशुभभौमः स्वर्ग–मर्त्य–पातालत्रिलोकान् भूर्भुवः स्वराख्यांल्लोकान् पीडयति। अर्थात् देवताभ्यो–मनुष्येभ्यो–असुरेभ्यो प्रत्येकजीवजन्तुदेवताराक्षसानपि कष्टमुत्पादयति।

**भौमसंचारात् द्वितीयविशेषयोगफलम्**

मङ्गलस्य संचारविशेषफलविषये वराहमिहिरस्य मतम् —

**श्रवणोदितस्य वक्रं पुष्ये मूर्धाभिषिक्तपीडाकृत्।**
**यस्मि न्नृक्षेऽभ्युदितस्तदिग् व्यूहान् जनान् हन्ति॥**[15]

यदि श्रवणोदितस्य पुष्ये वक्रं तर्हि पीडाकृत् मूर्धाभिषिक्तानां। यस्मिन्नृक्षेऽभ्युदितः तत् दिग् व्यूहान् जनान् हन्ति यदि श्रवणनामकनक्षत्रेः उदितः भौमः अग्रे गत्वा पुष्यनक्षत्रे वक्रं प्रति गच्छति, तदा सः भौमः मूर्धाभिषिक्तानां राज्ञां कष्टप्रदायको भवति। तत्र सूत्रमण्डलस्थो यस्मिन्नक्षत्रे स्थितः सः यस्मिन् नक्षत्रे उदितो भवति, तस्य नक्षत्रस्य या दिक् सा दिक् नाशयति। अर्थात् नक्षत्रकूर्मोक्ता व्यूहान् जनाना हन्ति। अर्थात् नक्षत्रोदितायां दिशायां ये निवासं कुर्वन्ति तत्रात्यानां जनानां तथा राज्ञमपि सः भौमः कष्टं प्रयच्छति। पराशरस्य मतेन—

**उदितः श्रवणे भौमः पुष्ये वक्रं चरेद्यदि।**
**मूर्धाभिषिक्ता राजानो विनश्येयुः परस्परम्।**
**यथा जनपदव्यूहे दिग्विभागः प्रदर्शितः।**
**तस्य वै मोहितं कुर्याल्लोहिताङ्गस्तथा मुखम्॥**[16]

भौमसंचारात् तृतीयविशेषयोगफलम्

**मध्ये न यदि मघानां गतागतं लोहितः करोति ततः।**

१५. बृ.सं. भौचाराध्याया. श्लो. ०७।
१६. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १७३।

**पाण्ड्यनृपो विनश्यति शस्त्रोद्यगाद्भयमवृष्टि: ॥**[१७]

यदि लोहित: मघानां मध्ये गतागतं न करोति तत: पाण्ड्यनृपो विनश्यति तथा शस्त्रोद्यगाद्भयमवृष्टि: भवति।

अत्र विशेषयोगविषये कथ्यते यत् यदि भौम: मघानक्षत्रं मध्ये गतागतं न करोति अर्थातृ पृष्ठतारकाणां मध्ये गत्वा पुनर्वक्रगतेरागमनं नैव करोति चेत् तस्मात्कारणात् पाण्ड्यदेशे यो राजा स विनाशमायाति। तस्य प्रदेशस्य लोके च संग्रामभयं जायते। एवं तस्मिन् प्रदेशे अवर्षणं च भवति।

**भौमसंचारात् चतुर्थविशेषयोगफलम्**

**भित्वा मघां विशाखां भिन्दन् भौम: करोति दुर्भिक्षम्।**
**मारकं करोति घोरं यदि भित्वा रोहिणीं याति॥**[१८]

यदि भौम: मघां भिन्दन् विशाखां याति, तदा दुर्भिक्षं करोति, पुन: रोहिणीं याति घोरं मारकं करोति। यदि भूमिपुत्र: मघानामकं नक्षत्रं भेदं कृत्वा विशाखा नक्षत्रं प्रति गच्छति तर्हि तस्मिन् काले खाद्यशस्यस्य अभाव: परिलक्ष्यते। पुन: योगतारा रोहिणीनक्षत्रं भेदं कृत्वा गच्छति चेत्तत्र जनानां कृते अधिकरूपेण मृत्युं विदधाति।

**भौमसंचारात् पञ्चमविशेषयोगफलम्**

**दक्षिणतो रोहिण्याश्चरन्महीजोऽर्घवृष्टिनिर्ग्रहकृत्।**
**धूमायन् सशिखो वा विनिहन्यात् पारियात्रास्थान्॥**[१९]

यदि रोहिण्या: दक्षिणतश्चरन् महिज: तदा अर्घवृष्टिनिर्ग्रहकृत। धूमायन् सशिखो वा पारियात्रास्थान् विनिहन्यात्। योगतारकस्य रोहिणीनक्षत्रस्य दक्षिणभागे भौम: विचरणं करोति चेत् स: अर्घस्य निग्रह: वृष्टिं च विनाशयति। अत्र अर्घस्य निग्रह इत्युक्ते स्वल्पत्वम् तथा विभिसामग्रीणां मूल्यंवृद्धिं करोति। एवं वृष्टेर्निग्रह इत्युक्ते वृष्टेश्चाभावं करोति। पुनश्च तत्र धूमेन

१७. बृ.सं. भौचाराध्याया. श्लो. ०८।
१८. बृ.सं. भौचाराध्याया. श्लो. ०९।
१९. बृ.सं. भौचाराध्याया. श्लो. १०।

युक्त: सशिखि भौमो वा, दृश्यते चेत्तदा परियात्रास्थान् पर्वते स्थितान् जनान् घातयेत्। अर्थात् ते पर्वतस्था: नानाकारणै: मृत्युवरणं कुर्वन्ति।

### भौमस्य नक्षत्रसंचारवशात् मेघनाशकयोग:

**प्रजापत्ये श्रवणमूले त्रिषु चोत्तरेषु शाके च।**
**विचरन् घननिवहानामुपघातकर: क्षमातनय:॥[२०]**

यदि क्षमातनय: प्रजापत्ये श्रवणे मूले त्रिषु चोत्तरेषु शाके च विचरन्, तर्हि घननिवहानाम् उपघातकर: भवति। यदि भौम: रोहिणी-श्रवण-मूलनक्षत्रेषु तथा उत्तराफाल्गुनी-उत्तराषाढा-उत्तरभाद्रपदा-ज्येष्ठानक्षत्रेषु च भ्रमणं करोति तर्हि मेघस्य विनाशकर्ता भवति। अर्थात् मेघस्यागमने स: प्रतिबन्धक: भवति। उपर्युक्तेषु नक्षत्रेषु गमनकाले भौमे यदि आकाशे मेघस्य गर्भसञ्चार: जायते तर्हि स: गर्भ: नष्टप्राय इति।

### भौमस्य नक्षत्रसंचारवशात् शुभफलम्

मङ्गलस्य नक्षत्रसंचारवशात् शुभाशुभफलकथनकाले वराहमिहिराचार्येण नानामुनीनां मतं स्वीकृत्य अपवादविषयोऽपि कथित:। तद्यथा 'यस्मिन्नृक्षेऽभ्युदितस्तदिग्व्यूहान् जनान् हन्ति' तथा 'प्राजापत्ये श्रवणे .....' इत्यस्यापवोदोऽयं श्लोक:। अर्थात् पूर्वस्मिन् श्लोके कथितम् यत् — यदि भौम: रोहिणी-श्रवणनक्षत्र च चलति तर्हि मेघस्य नाशं करोतीति, परन्तु श्लोकेऽस्मिन् तस्य विपरीतार्थ: दृश्यते। भौम: यदा रोहिणी-श्रवणनक्षत्रे च उदेति तदा शुभफलं स्यात्। नक्षत्रसंचारवशात् शुभफलं विषये कथितम्। तदाह —

**चारोदया: प्रशस्ता: श्रवणमघादित्यहस्तमूलेषु।**
**एकपदाश्विविशाखाप्रजापत्येषु च कुजस्य॥[२१]**

यदि कुजस्य श्रवण-मेघा-आदित्य-हस्त-मूलेषु तथा एकपद-अश्वि-विशाखा-प्रजापत्येषु चारोदया: प्रशस्ता: स्यु। भौमस्य कृते श्रवण-मघा-पुनर्वसु-हस्त-मूल-पूर्वाफाल्गुनी-अश्विनी-विशाखा रोहिण्यादिशुभनक्षत्राणि भवन्ति। एतेषु नक्षत्रेषु भौमस्य सञ्चार-

२०. बृ.सं. भौचाराध्याया. श्लो. ११।
२१. बृ.सं. भौचाराध्याया. श्लो. १२।

उदयाश्च भवन्ति चेत्तदा संसारे सर्वे प्रशस्ता: शोभना: भवन्ति। सर्वे सुखेन जीवनं निर्वहन्ति इत्यर्थ:।

**भौमस्य वर्णवशात् फलम्**

**विपुलविमलमूर्त्ति: किंशुकाशोककवर्ण:।**
**स्फुटचिरमयूखस्तप्तताम्रप्रभाभ:॥**
**विचरति यदि मार्गं चोत्तरं मेदिनीज:।**
**शुभकृदवनिपातानां हार्दिदश्च प्रजानाम्॥**[२२]

यदि मेदिनीज: विपुलविमलमूर्त्ति: किंशुकाशोकवर्ण: स्फुटचिरमयूखस्तप्तताम्रप्रभाभ: उत्तरमार्गं च विचरति, तदा अवनिपातानां शुभकृद्, तथा प्रजानां हार्दिद: च करोति।

यदि भूस्तस्या जातो मेदिनीज: विस्तीर्णनिर्मलकिरणयुक्त: मूर्त्ति: स्यात्तदा राज्ञां कृते शुभकृद् एवं प्रजानामपि सन्तोषम्। तथा यदि मेदिनीज: पलाशपुष्पसदृशवर्ण: एवम् अशोक–पुष्पविशेष: अतिलोहितवर्ण: राज्ञां प्रजानां कृते शुभकृद् सन्तोषश्च भवति। यदि गलितस्य ताम्रस्य यादृशी कान्तिस्तत्तुल्या बिम्बच्छया मङ्गलस्य भवति तर्हि राज्ञां प्रजानां कृते शुभकृद् सन्तोषश्च भवति। यदि यस्मिन्नक्षत्रो स्थितस्तस्योत्तरभागेन मङ्गल: विचरणं करोति, तर्हि राज्ञां प्रजानां कृते शुभकृद् सन्तोषश्च भवति। अर्थात् राजा प्रजानां कृते मङ्गलं कार्यं कृत्वा सुखेन राज्यशासनं करोति। गर्गमतेन —

**याम्यादिपितृपर्यन्तं नवर्क्षं मार्गमुत्तरम्।**
**भाग्यादिनैर्ऋतान्तं तु मार्गमुच्यते।**
**आषाढाद्यश्विनान्तं तु दक्षिणं समुदाहृतम्।**
**सौम्यमार्गस्थितो भौम: प्रजानामुपकारक:॥**[२३]

पराशरमतेन

**प्रदक्षिणगति: कान्त: स्निग्श्च कलसोपम:।**

२२. बृ.सं. भौचाराध्याया. श्लो. १३।
२३. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १६१।

**तप्तकाञ्चनसङ्काशो भवेल्लोकविवृद्धये॥**[२४]

योगतारकस्य रोहिणीनक्षत्रस्य दक्षिणभागे भौमः विचरणं करोति चेत् सः अर्घस्य निग्रहः वृष्टि च विनाशयति। अत्र अर्घस्य निग्रह इत्युक्ते स्वल्पत्वम् तथा विभिन्नसामग्रीणां मूल्यवृद्धिं करोति। एवं वृष्टेर्निग्रह इत्युक्ते। वृष्टेश्चाभावः करोति। पुनश्च तत्र धूमेन युक्तः सशिखि भौमो वा, दृश्यते चेत्तदा परियात्रास्थान् पर्वते स्थितान् जनान् घातयेत्। अर्थात् ये पर्वतस्थाः नानाकारणैः मृत्युवरणं कुर्वन्ति।

*****

**डॉ. अवधेशकुमारश्रोत्रियः**
संविदाध्यापकः, ज्योतिषविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः
भोपालपरिसरः, भोपालम्।

२४. अद्भुतसागरे मङ्गलाद्भुतावर्त्ते पृ. १६१।

# चन्द्रस्य दशविधसंस्थानानां लक्षणं तत्फलञ्च

**— डॉ. रविन्द्र प्रसाद उनियालः**

प्रतिदिवसं चन्द्रस्य गतिवशात् चन्द्रबिम्बस्य शुक्लतायाः हानिः वृद्धिश्च भवति। यथा आतपस्थितस्य घटस्य प्रतिक्षणं शुक्लतायां परिवर्तनं भवति। गोलाकारस्य पिण्डस्योपरि प्रकाशः चापात्मकरुपेण दृश्यते। तेन शुक्लभागः पर्यन्तभागे श्रृङ्गमिव दृश्यते। तस्य चन्द्र शृङ्गस्य विविधतिथिषु विविधाकाराः दृश्यन्ते। तेन चन्द्रस्य विभिन्नानां स्वरुपाणां दर्शनं भवति। तेषां स्वरुपाणां दशभेदाः प्राचीनैः वर्णिताः। ते च चन्द्रस्य दशविधसंस्थानानि उच्यन्ते। तेषां दशविधसंस्थानां लक्षणानि[१] फलानि च इदानीं अत्र प्रदर्शयामि। तेषां संस्थानानां नामानि एवं सन्ति — १. नौसंस्थानम्, २. लाङ्गलम्, ३. दुष्टलाङ्गलम्, ४. सम, ५. दण्ड, ६. कार्मुकम्, ७. युगम्, ८. पार्श्वशायिनम्, ९. आवर्जितम्, १०. कुण्डाख्यसंस्थानम्।[२]

**नौसंस्थानम् —**

नौसंस्थानविषये आचार्येण एवं वर्णितम् —

**उन्नतमीषच्छृङ्गं नौसंस्थाने विशालता चोक्ता।**
**नाविकपीडा तस्मिन् भवति शिवं सर्वलोकस्य॥[३]**

यदा चापाकारकस्य चन्द्रबिम्बस्य शृङ्गं किञ्चित् उन्नतं भूत्वा विशालतां च प्राप्य यदि नौकाकारं दृश्यते तदा तस्य संस्थानस्य ''नौसंस्थानम्'' संज्ञा भवति। तस्मिन् संस्थाने नाविकानां पीडा भवति तथा समस्तस्य कल्याणं भवति। वृद्धगर्गमतेन विषयेस्मिन् उक्तं यत् उभयमेव शृङ्गं यदा किञ्चिदुन्नतं भवति तदा नौसंस्थानं भवति। यथा — ''ईषान्मात्रोद्यतं शृङ्गं विशालः

---

१. बृहत्संहिता चन्द्रचाराध्यायः श्लो. सं. - ८।
२. तत्रैव चन्द्रचाराध्यायः श्लो. सं. ९, वृद्धगर्गसंहिता उद्धृतं बृ.सं. चं.चा. पृ.सं. - २८, श्लो. - ९।
३. बृहत्संहिता चन्द्रचाराध्यायः श्लो. सं. - ८।

कुक्षिमान् स च। शशी तत् खलु नौस्थानं क्षेमसौभिक्षकारकम्।[४]'' तत्रैव पाराशरेणापि उक्तम् — ''नाभ्युच्छ्रितोभयं शृङ्ग कुक्षिमान् विशालो नौस्थानम्।''

**लाङ्गलसंस्थाने —**

**अर्द्धोन्नते च लाङ्गलमिति पीडा तदुपजीविनां तस्मिन्।**
**प्रीतिश्च निर्निमित्तं मनुजपतीनां सुभिज्ञं च॥[५]**

यदि चन्द्र शृङ्गस्य अर्धभागम् उन्नतं भवति दा तस्य संस्थानस्य ''लाङ्गल (हलम्)'' संज्ञा भवति। अस्मिन् संस्थाने लाङ्गलोपजीविनः अर्थात् हलमाध्यमेन येषाम् आजीविका भवति (यथा - कृषकाः) ते पीडिताः भवन्ति। परन्तु राज्ञां परस्परं विना कारणमेव स्नेहः परिवर्धयति। लोके धनधान्यादिवृद्धिद्वारा सुभिक्षं कल्याणं च भवति। भट्टोत्पलेन टीकायाम् उल्लिखितं यत् लाङ्गलसंस्थाने चन्द्र शृङ्गम् उत्तरतः उन्नतं भवति। प्रमाणरुपेण वृद्धगर्गस्य मतमपि उल्लिखितम् —

**यदा सोमः प्रतिपदि नौस्थायी सम्प्रदृश्यते।**
**उत्तरोज्जवलशृङ्गो वा लाङ्गली च मनोहरः॥**
**क्षेमं सुभिक्षमारोग्यं सर्वभूतेषु निर्दिशेत्।**
**राज्ञां च विजयं ब्रयाद् वर्द्धन्ते शृङ्गिणस्तथा॥[६]**

**दुष्टलाङ्गलसंस्थाने —**

**दक्षिणविषाणमर्द्धोन्नतं यदा दुष्टलाङ्गलाख्यं तत्।**
**पाण्डयनरेश्वरनिधनकृदुद्योगरकं बलानां च॥[७]**

यदि चन्द्रस्य दक्षिण शृङ्गम् अर्धम् उन्नतं भवति तदा 'दुष्टलाङ्गल' संज्ञकं संस्थानं भवति। तच्च संस्थानं पाण्ड्यदेशस्य यः राजा तस्य निधनं मरणं वा करोति। वृद्धगर्गस्यापि गते तथैव उल्लिखितम्।

४. उद्धृतम् अद्भुतसागरः, चन्द्राद्भुतावर्तः, पृ.सं. - ५८।
५. बृहत्संहिता चन्द्रचाराध्यायः, श्लो. सं. - ९।
६. बृद्धगर्गसंहिता उद्धृतं बृ.सं. चं.चा. पृ.सं. - २८ श्लो. ९।
७. बृहत्संहिता चन्द्रचाराध्यायः श्लो. सं. १०।

**समदण्डसंस्थाने —**

**समशशिनि सुभिक्षक्षेमवृष्टयः प्रथमदिवसदृशाः स्युः।**
**दण्डवदुदिते पीडा गवां नृपश्चोग्रदण्डोऽत्र॥**[८]

यदि चन्द्र शृङ्गे तुल्ये भवतः तदा तस्य संस्थानस्य 'समदण्ड' संज्ञा भवति। अस्मिन् संस्थाने प्रतिपत्सदृशाः सुभिक्षक्षेमवृष्टयः भवेयु अर्थात् प्रतिपद्दिने यादृशः सुभिक्षः, यादृशः क्षेमः, यादृशी वृष्टिः भवति तादृशा एव मासं यावत् स्युः। यदि चन्द्रः दण्डाकरः दृश्यते तदा तस्य 'दण्डसंस्थानम्' संज्ञा भवति। अस्मिन् संस्थाने राजा तीक्ष्णदण्डकारो भवति। वृद्धगर्गेण विस्तरेण विषयेऽस्मिन् वर्णितम् —

**सम शृङ्गे यदा दृष्टः शशी क्षेमसुभिक्षकृत्।**
**प्रतिपत्सदृशं तत्र वासवो वर्षते तदा॥**
**चन्द्ररेखा यदा चोर्ध्वमृज्वी दण्ड इव स्थिता।**
**उदक् शृङ्गाधिकसमो दण्डस्थानं तदुच्यते॥**
**उद्युक्तदण्डा राजानो विनिघ्नन्ति समन्ततः।**
**गवां पीडां विजानीयाद्दण्डस्थाने यदा शशी॥**[९]

**कार्मुकयुगसंस्थाने**

**कार्मुकरूपे यद्धोनि यत्र तु ज्या ततो जयस्तेषाम्।**
**स्थानं युगमिति याम्योत्तरायतं भूमिकम्पाय॥**[१०]

यदि चन्द्रस्य शुक्लत्वं धनुः सदृशं भवति तदा तस्य 'कार्मुकसंस्थानम्' संज्ञा भवति। कार्मुकसंस्थानं यदा दृश्यते तस्मिन् मासे युद्धं भवति तथा यस्यां दिशि धनुषः जीवा भवति तस्यां दिशि स्थितस्य राज्ञः जयः भवति। यदि चन्द्रस्य शृङ्गे दक्षिणोत्तर-दिशि विस्तीर्णं भवति तदा तस्य ''युगसंस्थानम्'' संज्ञा भवति। भट्टोत्पलमतेन दक्षिणसौम्यभागविस्तीर्णं मध्यमं मण्डलं यदि भवति तद्युगं नाम संस्थानम्। युगसंस्थानदर्शनानन्तरं भूमिकम्पः भवतीति

८. बृहत्संहिता चन्द्रचाराध्यायः श्लो. सं. ११।
९. वृद्धगर्गसंहिता उद्धृतं बृ.सं. च.चा. पृ.सं. - ३०, श्लो. १४।
१०. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. १२।

फलं निर्दिष्टम्। आचार्यवराहमिहिर: संक्षिप्तभाषायां विषयप्रतिपादनं करोति। वृद्धगर्गेण द्वयो: संस्थानयो: विस्तरेण वर्णनं विहितम् —

**उदये तु यदा सोमं पश्येद्धनुरिवोदितम्।**
**धनुर्द्धराणामुद्योगो जगद्युद्धकरो भवेत्॥**
**क्षत्रियाः क्षत्रियान् घ्नन्ति वर्णाश्चैव तथापरे।**
**अग्रतष्च जयस्तेषां पृष्ठतश्च पराजयः॥**
**चन्द्ररेखा यदा व्यक्ता दक्षिणोत्तरमायमता।**
**शुक्लादौ प्रतिपद्येत तद्योगस्थानलक्षणम्॥**
**सैन्योद्योगा भवन्त्यत्र भूमिकम्पश्च जायते॥**[११]

**पार्श्वशायिनः संस्थानम् —**

**युगमेव याम्यकोट्यां किञ्चित्तुङ्ग स पार्श्वशायीति।**
**विनिहन्ति सार्थवाहान् वृष्टेश्च विनिग्रहं कुर्यात्॥**[१२]

युगसंज्ञकसंस्थानमेव यदि दक्षिण शृङ्गाग्रे किञ्चित् उन्नतं भवति तदा तस्य संस्थानस्य पार्श्वशायी संज्ञा भवति। अस्मिन् संस्थाने धनेन सम्पन्ना: व्यापारिण: पीडां प्राप्नुवन्ति, वृष्टे: च अभावं भवति। तथैव वृद्धगर्गस्यापि मतेन —

**याम्यकोट्यायतः किञ्चिद्युगकाले यदा शशी।**
**पार्श्वशायीति संज्ञोऽयं सार्थहा वृष्टिनाशनः॥**[१३]

**आवर्जितसंस्थानम् —**

**अभ्युच्छ्रायादेकं यदि शशिनोऽवाङ्मुखं भवेच्छृङ्गम्।**
**आवर्जितमित्यसुभिक्षकारि तद् गोधनस्यापि॥**[१४]

---

११. वृद्धगर्गसंहिता उद्धृतं बृ.सं., च.चा., पृ.सं. - ३०, श्लो. १२।
१२. बृहत्संहिता चन्द्राचाराध्याय: श्लो. सं. १३।
१३. वृद्धगर्गसंहिता उद्धृतं बृ.सं., च.चा., पृ.सं. - ३०, श्लो. १३।
१४. बृहत्संहिता चन्द्राचाराध्याय: श्लो. सं. १४।

यदि अतिशयेन उन्नतिवशात् चन्द्रस्य एकं शृङ्गम् अधोमुखं दृश्यते तदा तत् आवर्जितसंज्ञकं संस्थानं भवति। तच्च संस्थानं लोके दुर्भिक्षकारि भवति। गोधनस्य तृणानाम् अभावात् अपि पीडाकारकं भवति। वृद्धगर्गस्य मते अपि तथैव वर्तते —

**अधोमुखं यदा शृङ्गं शशिनो दृश्यते तदा।**
**संस्थानमावर्जितकं गोहनं दुर्भिक्षकारकम्॥**[१५]

**कुण्डाख्यसंस्थानम् —**

**अव्युच्छिन्ना रेखा समन्ततो मण्डला च कुण्डाख्यम्।**
**अस्मिन् माण्डलिकानां स्थानत्यागो नरपतीनाम्॥**[१६]

यदि चन्द्रस्य परितः अखण्डिता गोलाकारा रेखा दृश्यते तदा तस्य संस्थानस्य 'कुण्डाख्यं' संज्ञा भवति। कुण्डाख्यसंस्थाने मण्डले परिमिते देशे ये राजानः तेषां स्थानचलनं स्वस्थानाच्च्युतिर्वा भवति। परन्तु एतादृशी स्थितिः कदाचित् ग्रहणकाले एव संभवति। पुनः वृद्धगर्गस्य मतं विहितम् —

**अच्छिन्ना मण्डले रेखा शशिनो दृश्यते यदा।**
**कुण्डाख्यं नाम संस्थानं नृपविग्रहदायकम्॥**[१७]

चन्द्रस्य यानि दशसंस्थानानि आचार्येण वर्णितानि तेषां कानिचित् संस्थानानि गणितविधिना शृङ्गोननतिपरिलेखकरणेन न उत्पद्यन्ते। यदि तानि नोपलभ्यन्ते तदानीं किमर्थम् आचार्येण तेषां फलम् उक्तमिति प्रश्न उत्पद्यते। प्रश्नस्य समाधानार्थे टीकाकारेण भट्टोत्पलेन लिखितं यत् यानि संस्थानानि परिलेखविधौ नोपलभ्यन्ते तानि उत्पातरुपाणि भवन्ति कदाचित् एव तेषां दर्शनं भवति। यतो हि तेषां भगवद् गर्गादिविरचितशास्त्रेषु फलानि दृश्यन्ते तानि च आचार्यवराहमिहिरेण पूर्वशास्त्राचारेण उक्तानि। भट्टोत्पलेन पराशरवचनानि, समाससंहितायाः वचनानि च ग्रन्थे प्रमाणरूपेण उद्धृतानि, तेषां वचनानां वर्णनस्य अत्र आवश्यकता नास्ति।

१५. वृद्धगर्गसंहिता उद्धृतं बृ.सं., च.चा., पृ.सं. - ३०, श्लो. १४।
१६. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. १५।
१७. वृद्धगर्गसंहिता उद्धृतं बृ.सं., च.चा., पृ.सं. - ३०, श्लो. १५।

**अन्यसंस्थानानां सामान्यलक्षणानि**

दशविद्यासंस्थानेभ्यः भिन्ना स्थिति अपि कदाचित् चन्द्र शृङ्गस्य परिदृश्यते। तेषां च सामान्य लक्षणानां वर्णनम् आचार्येण अग्रे एवं विहितम् —

**प्रोक्तस्थानाभावादुदगुच्चः क्षेमवृद्धिवृष्टिकरः।**
**दक्षिणतुङ्गश्चन्द्रो दुर्भिक्षभयाय निर्दिष्टः॥**
**शृङ्गेणैकेनेन्दुर्विलीनमथवाद्धप्यवाप्मुखं शृङ्गेम्।**
**सम्पूर्णं चाभिनवं दृष्ट्वैको जीविताद् भ्रश्येत्॥**[१८]

**चन्द्रस्वरुपफलम् —**

प्राचीनाचार्यैः ग्रहपिण्डानां प्रत्येकविषयस्य अत्यन्तसूक्ष्मेक्षिकया अध्ययनं कृतम्। तेषां गति–स्थिति–युतिवशात् फलानि विवेचितानि। ग्रहबिम्बानाम् आकारो वर्णे च यत् परिवर्तनं दृष्टं तस्यापि विशदतया विवेचनं तैः कृतम्। तथैव चन्द्रबिम्बस्यापि विविधस्वरुपाणां फलानि वर्णितानि। तेषां सङ्कलनं कृत्वा आचार्येणस्ववाक्येषु एवं वर्णितम् —

**संस्थानविधिः कथितो रुपाण्यस्माद् भवन्ति चन्द्रमसः।**
**स्वल्पो दुर्भिक्षकरो महान् सुभिक्षावहः प्रोक्तः॥**[१९]

इतः पूर्वं चन्द्रस्य दशविधसंस्थानानि वर्णितानि। ततः परं रूपवशात् चन्द्रस्य फलानि विविच्यन्ते। यदि चन्द्रस्य बिम्बः अत्यल्पः लघ्वाकारः वा दृश्यते तदा लोके दुर्भिक्षं, धनधान्यादिकस्य अभावः भवति तथा यदि चन्द्रबिम्बः बृहद्बिम्बः, दीर्घाकारः वा दृश्यते तदा लोके सुभिक्षम् अर्थात् धनधान्यादिकस्य वृद्धिः भवति। एवं प्रकारेण साधारणफलं लिखितम्। अग्रे बिम्बानां विविधस्वरुपवशात् फलानि विस्तरेण विवेचितानि।

**चन्द्रबिम्बस्य विविधस्वरूपफलम् —**

चन्द्रबिम्बस्य विविधस्वरुपाणां फलानि एवं वर्णितानि —

१८. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. १६-१७।
१९. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. १८।

**मध्यतनुर्वज्राख्यः क्षुद्भयदः सम्भ्रमाय राज्ञां च।**
**चन्द्रो मृदङ्गरूपः क्षेमसुभिक्षावहो भवति॥**
**ज्ञेयो विशालमूर्तिर्नरपतिलक्ष्मीविवृद्धये चन्द्रः।**
**स्थूलः सुभिक्षकारी प्रियधान्यकरस्तु तनुमूर्त्तिः॥[२०]**

यदि मध्यमः चन्द्रबिम्बः दृश्यते तदा सः वज्रसंज्ञकः भवति। वज्रसंज्ञके बिम्बे दृष्टे लोके क्षुद्भयं दुर्भिक्षं च भवति तथा नृपाणां व्यर्थ एव उद्यमः भवति। यदि चन्द्रः मृदङ्गाकारः दृश्यते। तदा लोके कल्याणं धनधान्यादीनां वृद्धिश्च भवति।

यदि चन्द्रः विस्तीर्णबिम्बः दृश्यते तदा सः राज्ञः श्रियः वृद्ध्यर्थं भवति। यदि स्थूलः चन्द्रबिम्बः दृश्यते तदा सः लोके धनधान्यादिवृद्धिकरः सुभिक्षकृत् च भवति। यदि चन्द्रबिम्बः विरलः तनुमूर्तिः वा दृश्यते तदा लोके धान्याल्पता दुर्भिक्षं च भवति। इत्येवं प्रकारेण चन्द्रबिम्बस्य विविधस्वरूपाणां फलानि आचार्येण वर्णितानि। वृद्धगर्गवचनेष्वपि तथैव वर्णितमस्ति —

**विलग्नमध्यो मेघाभो वज्रसंस्थानसंस्थितः।**
**मध्याच्छिद्रो विलीनो वा भयं च जनयेद् महत्॥[२१]**

**कुजादिग्रहैः आहतस्य चन्द्र शृङ्गस्य फलम् —**

चन्द्रस्य शृङ्गदर्शनवशात् दशविधसंस्थानां वर्णनं भवता पठितम्। चन्द्रः सर्वाधिकगतिकः ग्रहः वर्तते। अतः विविधग्रहैः सह चन्द्रबिम्बस्य संयोगः शीघ्रतया भवति। चन्द्रेण सह कस्यचिदपि ग्रहस्य योगः 'समागम' संज्ञया ज्ञायते। चन्द्र शृङ्गेण सह ग्रहस्य समागमेन शृङ्गस्य भेदः भवतीति आचार्यैः विहितः। चन्द्रस्य ताराग्रहैः सह संयोगे समागमाध्या-योक्तगणितविधिना ग्रहणवत्कर्मणि जाते अधोभागेन भौमादयः बिम्बभेदनं कुर्वन्ति। तत्र कुजादिताराग्रहैः शृङ्गभेदेन फलानि एवं वर्णितानि —

**प्रत्यन्तान् कुनृपांश्च हन्त्युडुपतिः शृङ्गे कुजेनाहते**
**शस्त्रक्षुद्भयकृतद्यमेन शशिजेनावृष्टिदुर्भिक्षकृत्।**

---

२०. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. १९-२०।
२१. वृद्धगर्गसंहिता, उद्धृतं बृ.सं. च.चा. पृ.सं. - ३२, श्लो. १९-२०।

**श्रेष्ठान् हन्ति नृपान् महेन्द्रगुरुणा शुक्रकेण चाल्पान्नृपान्**
**शुक्ले याप्यमिदं फलं ग्रहकृतं कृष्णे यथोक्तागमम्।।**[२२]

यदि चन्द्र शृङ्ग भौमेन वेधितं भवति तदा दूरनिवासिनां कुत्सितराज्ञां विनाशं करोति। यदि चन्द्रशृङ्ग शनैश्चरेण वेधितं भवति तदा क्षुधाजनितं भयं शस्त्रैः भयं दुर्भिक्षभयं च भवति। यदि चन्द्र शृङ्ग बुधेन हतं भवति तदा वृष्ट्याभावेन उत्पन्नं भयं धनधान्यादीनाम् अभावेन उत्पन्नं भयं च करोति। यदि चन्द्र शृङ्ग बृहस्पतिना हतं भवति तदा श्रेष्ठान् राज्ञः घातयन्ति। यदि चन्द्र शृङ्ग शुक्रेण आहतं भवति तदा अल्पान् राज्ञः हन्ति। ग्रहैः चन्द्र शृङ्गस्य वेधवशात् यानि फलानि पठितानि तानि शुक्लपक्षे स्वल्पानि भवनित तथा कृष्णे पक्षे एतानि फलानि पूर्णरुपेण भवन्ति अर्थात् यथा पूर्वं निर्दिष्टं तत्सकलं भवतीति ज्ञेयम्।

**शुक्रजीवभौमभिन्नस्य चन्द्रमसः फलानि —**

पूर्वस्मिन् श्लोके विविधग्रहैः आहतस्य चन्द्रशृङ्गस्य फलानि संक्षिप्तरूपेण पठितानि। अग्रे चन्द्रबिम्बस्य विविधग्रहैः भेदवशात् फलानि विस्तरेण विवेचितानि। तत्रापि विशेषरूपेण ये ये प्रदेशाः पीडिताः भवन्ति तेषां वर्णनं विहितम्। सर्वप्रथमं शुक्रभिन्नबिम्बस्य चन्द्रमसः फलम् एवं विहितम् —

**भिन्नः सितेन मगधान् यवनान् पुलिन्दान्**
**नेपालभृङ्गिमरुकच्छसुराष्ट्रभद्रान्।**
**पा चालकैकयकुलूतकपूरुषादान्**
**हन्यादुशीनरजनानपि सप्तमासान्।।**[२३]

यदि चन्द्रबिम्बः शुक्रेण वेधितः भवति मध्यात् विदारितो वा भवति तदा मगधः, यवनः, पुलिन्दः, नेपालः, भृङ्गिः, मरुदेशः, कच्छः, सूरतः, मद्रासः, पाञ्चालः, काश्मीरः, कुलूतकः, पुरुषादः, उशीनरः इत्येतेषां देशानां जनान् सप्तमासाभ्यन्तरे घातयति। अर्थात् यस्मिन् दिने चन्द्रबिम्बः शुक्रेण वेधितः भवति तद्दिनादारम्भ सप्तमासाभ्यन्तरे पूर्वोक्तदेशानां जनानां हानिः भवति।

२२. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २१।
२३. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २२।

यदि गुरुणा चन्द्रबिम्बस्य वेधः भवति तदा किं फलं भवतीति आचार्येण अग्रे निर्दिष्टम्

**गान्धारसौवीरकसिन्धुकीरान्**
**धान्यानि शैलान् द्रविडाधिपांश्च।**
**द्विजांश्च मासान् दश शीतरश्मिः**
**सन्तापयेद्वाक्पतिना विभिन्नः ॥**[२४]

यदि चन्द्रबिम्बः बृहस्पतिना वेधितः भवति तदा गुरुणा विदारितबिम्बोद्धयं चन्द्रः वा भवति तदा गन्धारः, सौवीरकः, सिन्धः, मीरः, पूर्वतीयप्रदेशः, एतेषां प्रदेशानां जनान् दशमा-साभ्यन्तरे विनाशयति। तथा धान्यानि, द्रविडदेशीयाधिपतीन्, ब्राह्मणान् चे वेधकालात् दशमासान् यावत् पीडितं करोति। अर्थात् यस्मिन् गुरुणा चन्द्रबिम्बः विदारितः भवति। तस्मात् दिवसादारभ्य दशमासाभ्यन्तरे फलानि भवन्ति।

यदि भौमेन चन्द्रबिम्बः वेधितः भवति तदा फलं एवं निर्दिष्टम्

**उद्युक्तान् सह वाहनैर्नरपतींस्त्रैगर्तमान् मालवान्**
**कौलिन्दान् गणपुङ्गवानथ शिबीनायोध्यकान् पार्थिवान्।**
**हन्यात् कौरवमत्स्यशुक्त्यधिपतीन् राजन्यमुख्यानपि**
**प्रालेयांशुरसृग्ग्रहे तनुगते षण्मासमर्यादया ॥**[२५]

यदि चन्द्रबिम्बः भौमेन वेधितः भवति। चन्द्रशीरस्थेन अङ्गरकेन चन्द्रस्य बिम्बः विदारितः भवति तदा अश्वादिभिः वाहनैः सह उद्योगस्थितान् (युद्धे उद्युक्तान्), नरपतीन् षण्मासावधि यावत् हन्यात्। तथा त्रिगर्तप्रदेशस्य जनान्, मालवप्रदेशस्य जनान्, कुलिन्ददेशस्य जनान् च विनिहन्ति। समूहप्रधानान्, शिबीदेशस्य जनान्, अयोध्याप्रदेशचीनप्रदेशानां नामानि वयं पठितानि, परन्तु देशानां एतानि नामानि इदानीं च प्राप्यन्ते अतः फलज्ञानाय प्राचीनप्रदेशानाम् आधुनिकस्थितेः ज्ञानम् आवश्यकं भवति। अतः बृहत्संहिता ग्रन्थस्य चतुर्थे खण्डे नक्षत्रकूर्मचक्राध्याये एतेषां देशानां नामानि विस्तरेण विवेचितानि सन्ति अतः एतेषां पूर्वपठितानां प्रदेशानां परिचयः आधुनिकसन्दर्भे प्राप्त्यर्थं तत्रैव पठनीयम्।

२४. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २३।
२५. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २४।

**शनिबुधकेतुभिन्नस्य चन्द्रमसः फलम्**

शुक्रगुरुभौमभिन्न चन्द्रबिम्ब फलानि भवता पठितानि। अग्रे आचार्येण शनिबुधकेतु-भिन्नस्य चन्द्रमसः फलानि वर्णितानि। तत्र शनैश्चरेण वेधितस्य चन्द्रस्य फलम् एवं वर्णितम्—

**यौधेयान् सचिवान् सकौरवान् प्रागीशानथ चार्जुनायनान्।**
**हन्यादर्कजभिन्नमण्डलः शीतांशुर्दशमासपीडया॥**[२६]

यदि चन्द्रः शनैश्चरेण विदारितबिम्बो भवति अर्थात् यदि शनिः चन्द्रबिम्बं भेदयति तदा यौधयप्रदेशस्य जनान्, मन्त्रिणः, कौरवजनैः सह पूर्वस्यां ये अधिपयः तान्, अर्जुनायन (पाण्डुवंशीय) जनान् च वेधदिवसात् दशमासावधिपर्यन्तं नाशयति। अर्थात् यस्मिन् दिवसे शनैश्चरः चन्द्रबिम्बस्य भेदं करोति, तस्मात् दिवसादारभ्य दशमासं यावत् एते जनाः पीडिताः भवन्ति।

यदि चन्द्रबिम्बः बुधेन वेधितः भवति तदा किं फलं भवतीति आचार्येण अग्रे वर्णितम्—

**मगधान् मथुरां च पीडयेद्वेणायाश्च तटं शशाङ्कजः।**
**अपरत्र कृतं युगं वदेद्यदि भित्त्वा शशिनं विनिर्गतः॥**[२७]

यदि चन्द्रबिम्बं विदार्य बुधः विनिर्गतः भवति अर्थात् चन्द्रबिम्बं बुधः वेधयति तदा मगधप्रदेशस्य जनान्, मथुराप्रदेशनिवासिनो जनान्, वेणानद्याः तीरे निवासिनः जनान् घातयति। एतान् पूर्वोक्तान् प्रदेशान् वर्जयित्वा अन्यदेशेषु सत्युगं भवति अर्थात् प्रदेशेषु धनधान्याधिक्यं तथा सर्वप्रकारेण सम्पन्नं भवति। बुधेन पीडिते चन्द्रबिम्बे निश्चितकालान्तरेण फलं न निर्दिष्टम्।

बुधवेधितचन्द्रबिम्बस्य फलवर्णनानन्तरं केतुना विदारितस्य चन्द्रबिम्बस्य फलम् एवं विर्णतम् —

**क्षेमारोग्यसुभिक्षविनाशी शीतांशुः शिखिना यदि भिन्नः।**
**कुर्यादायुधजीविविनाशं चौराणामधिकेन च पीडाम्॥**[२८]

२६. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २५।
२७. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २६।
२८. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २७।

चन्द्रः यदि केतुना विदारितबिम्बः भवति अर्थात् यदि चन्द्रबिम्ब केतुना वेधितः भवति तदा क्षेमस्य आरोग्यस्य सुभिक्षस्य च विनाशं करोति। अस्त्रशस्त्रद्यायुधैः येषाम् आजीविका भवति (यथा — सैनिकाः, रक्षकाः, आयुधनिर्मातारः) ते सर्वे विनाशम् उपयान्ति। तथा लोके तस्कराणाम् अतिशयेन पीडा भवति। अत्रापि कालनिर्धारणं न कृतम्। यथा फलानि ग्रहाणां चन्द्रबिम्ब भेदवशात् वर्णितानि तानि एव पराशरेणापि वर्णितानि। भट्टोत्पलेन अन्ते पराशरस्य वचनानि विस्तरेण उद्धृतानि सन्ति।

**ग्रहणकाले उल्काहतस्य चन्द्रस्य फलम्**

चन्द्रग्रहणकालं यदि चन्द्रः उल्कया हतः भवति तदा किं फलं भवतीति अग्रे निर्दिष्टम्—

**उल्कया यदा शशी ग्रस्त एव हन्यते।**
**हन्यते तदा नृपो यस्य जन्मनि स्थित॥**[२९]

यदि ग्रहणकालिकचन्द्रः उल्कया हतः भवति अर्थात् चन्द्राबिम्बाभिमुखी उल्का याति, तदा यस्य राज्ञः जन्मनक्षत्रे सः चन्द्रः स्थितः भवति तस्य विनाशः भवति। यथा यदि मघानक्षत्रे स्थितः ग्रस्तचन्द्रः उल्कया वेधितो भवति तदा मघानक्षत्रे प्राप्तजन्माः राजानः (मा, मी, मू, मे जन्माक्षराणि येषां, यथा — महेन्द्रः, मानवेन्द्रः = इत्यादय) म्रियन्ते। यथा चोक्तं समाससंहितायाम् — उल्काभिहतो ग्रहणे तन्नक्षत्रं नृपं हन्ति इति।

**चन्द्रस्य वर्णलक्षणं तच्छुभाशुभफलञ्च**

प्राचीनाचार्यैः चन्द्रबिम्बस्य विविधवर्णानां च सूक्ष्मेक्षिकया अध्ययनं कृतम्। वर्णानां फलानि च वर्णितानि। आचार्यवराहमिहिरेण तेषां सङ्कलनं कृत्वा एवं विहितम् —

**भस्मनिभः परुषोद्धरुणमूर्त्तिः शीतकरः किरणैः परिहीणः।**
**श्यामतनुः स्फुटितः स्फुरणो वा क्षुड्डमरामयचौरभयाय॥**[३०]

२९. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २८।
३०. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. २९।

यदि चन्द्रबिम्बः भस्मवर्णः, कलुषः, रुक्षः, लोहितशरीरः, रक्तवर्णो वा, रश्मिभिः हीनः, कृष्णवर्णः, श्यामशरीरः, खण्डितबिम्बः, भग्नः, कम्पितबिम्बो वा भवति तदा लोके यतः एतादृशः चन्द्रबिम्बः दृश्यते तत्र दुर्भिक्षं, खाद्यान्नस्य अभावः, शत्रुकलहः, रोगानं वृद्धिः तस्करैः च जनाः पीडिताः भवन्ति। इत्येवं प्रकारेण चन्द्रवर्णस्य अशुभफलानि वर्णितानि। अग्रिमे श्लोके चन्द्रवर्णस्य शुभफलमपि निर्दिष्टम् —

**प्रोलेयकुन्दकुमुदस्फटिकावदातो**
**यत्नादिवाऽद्रिसुतया परिमृज्य चन्द्रः।**
**उच्चैः कृतो निशि भविष्यति मे शिवाय**
**यो दृश्यते स भविता जगतः शिवाय॥**[३१]

श्लोकेऽस्मिन् आचार्यस्य काव्यप्रतिभायाः परिचयः प्राप्यते। स्वच्छचन्द्रस्य श्वेतकुन्द्रकुमुदपुष्पसदृशेन स्फटिकमणिना तुलना कृताऽस्ति। रात्रौ महेश्वराय पार्वतिनान्द्रस्य निर्मलीकरणं कृतम्। चन्द्रः हिमकुन्दकुमुदसदृशः शुक्लः तथा स्फटिकमणिसदृशः स्वच्छः निर्मलीकृत्य उपरि न्यस्तः। एवं विधः चन्द्रः यः जनः रात्रौ आकाशे अवलोक्यते सः चन्द्रः तस्य मनुष्यस्य कृते कल्याणकारी भवति। अर्थात् आकाशे यदि श्वेतकुन्दकुमुदपुष्पसदृशः स्फटिकसदृशी निर्मल कान्तियुक्तः चन्द्रः यदि दृश्यते तदा लोककल्याणाय भवति। इत्येवं प्रकारेण चन्द्रवर्णस्य शुभफलमपि वर्णितम्। अत्र पार्वती शिवाय (शिवस्य कृते) चन्द्रं निर्मलीकृत्य रात्रौ चन्द्रं स्थापयति स च लोकानां शिवाय (कल्याणाय) भवति इत्यनेन 'शिवाय' शब्दस्य प्रयोगेण आचार्येण काव्यचमत्कार उत्पादितः।

*****

**डॉ. रविन्द्रप्रसाद उनियालः**
(स.अध्यापकः) ज्योतिषविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

३१. बृहत्संहिता चन्द्राचाराध्यायः श्लो. सं. ३०।

# कृषिशास्त्रदिशा आढकीवपनस्य प्रायोगिकाध्ययनम्

— डॉ. नवीनतिवारी

कृषिक्षेत्रे प्रायोगिकाध्ययनेन विना सार्थकनिष्कर्षस्य परिकल्पिना नैव कर्तुं शक्यते। अतः प्राचीनकृषिविज्ञानस्य महत्त्वम् अभिलक्ष्य कृषिपाराशरग्रन्थे नैके कृषिविज्ञानसम्मताः पक्षाः विराजन्ते। तेषु पक्षेषु बीजवपनस्य महत्त्वपूर्णपक्षः विद्यते। अत्र आढकीबीजवपनस्य कृषिशास्त्रदृष्ट्या प्रायोगिकाध्ययनं शोधपत्रे प्रस्तूयते। अस्मिन् शोधकर्मणि न्यादर्शरूपेण– मध्यप्रदेशस्य रायसेनमण्डलान्तर्गतः ग्रामः सुल्तानगञ्जः स्वीकृतः। यथा – कृषिकार्याय ग्रामसुल्तानगञ्जस्य पटवारी हल्का क्रमांकस्य ३३ इत्यस्य क्षेत्रक्रमाङ्कस्य ३०२ इत्यस्य २.५ एकड़ परिमिता भूमेः इत्यस्य कृषेः प्रयोगार्थं चयनं कृतम्। यथा –

**कृषिकार्याय भूमेः न्यादर्शः**

| कृषिप्रयोगाय भूमिपरिमाणम् | बपनार्थं बीजस्य परिमाणम् | बीजानां नामानि | बीजानां जातयः | कृषिकार्यस्य पद्धतिः |
|---|---|---|---|---|
| ५० डिसमिलभूमिः | ३ किलोग्रामाः | आढकी (अरहरः) | लक्ष्मी | कृषिपाराशरोक्तपद्धतिः (वैशाखे वपनम्) |
| ५० डिसमिलभूमिः | ३ किलोग्रामाः | आढकी (अरहरः) | लक्ष्मी | कृषिपाराशरोक्तपद्धतिः (ज्येष्ठे वपनम्) |
| ५० डिसमिलभूमिः | ३ किलोग्रामाः | आढकी (अरहरः) | लक्ष्मी | कृषिपाराशरोक्तपद्धतिः (आषाढे वपनम्) |
| ५० डिसमिलभूमिः | ३ किलोग्रामाः | आढकी (अरहरः) | लक्ष्मी | कृषिपाराशरोक्तपद्धतिः (श्रावणे वपनम्) |
| ५० डिसमिलभूमिः | ३ किलोग्रामाः | आढकी (अरहरः) | लक्ष्मी | कृषिवैज्ञानिकोक्तपद्धतिः (आषाढे वपनम् जूनस्य अन्तिमसप्ताहे जुलाईमासस्य प्रथमसप्ताहे वपनं श्रेष्ठम्) |

प्रयोगभूमौ बीजपनाय बीजस्य नैका: संस्कारा: सम्पादिता: तेषाम् संस्काराणां क्रमेण परिचय: प्रदीयते —

**बीजसंहरस्य प्रायोगिकाध्ययनम् —**

माघमासस्य शुक्लपक्षस्य दशमीतिथौ तदनुसारेण २०१६ तमे ख्रीष्टे फरवरीमासे १७ तमे दिनाङ्के वर्षे रायसेनमण्डलान्तर्गते सुल्तानगञ्जनामकग्रामे कृत: बीजसंहरस्य विधि: कृषिपाराशरग्रन्थानुसारं विहित:। तच्च वचनं यथा —

**माघे वा फाल्गुने मासि सर्वबीजानि संहरेत्।**
**शोषयेदातपे सम्यक् नैवाधो विनिधापयेत्॥**[1]

**बीजस्य पुटिकां कृत्वा विधान्यं तत्र शोधयेत्।**
**बीजं विधान्यसंमिश्रं फलहानिकरं परम्॥**[2]

मया पराशरवचनानुसारेण माघमासे आढकीतिल-धान्यानां एकत्रीकरणं कृत्वा, सूर्यतापेन शुष्कं कृत्वा सर्वेषां बीजानां तृणकरकटादीनां शोधनं कृत्वा पृथक्-पृथक् पुटिकां वध्वा पवित्रस्थले सर्वं स्थापितम्, अयं विधि: अत्यन्तम् अल्पव्ययसाध्यो वर्तते। अनेन विधिना बीजस्य संहरं अत्यधिकशस्योत्पादनं भवति ।

**बीजोपचारस्य प्रायोगिकमध्ययनम् —**

फाल्गुनमासशुक्लपक्षस्य त्रयोदशीतिथौ तदनुसारेण २०१६ तमे ख्रीष्टे मार्चमासस्य (एकविंशति) २१ तमे दिनाङ्के वर्षे रायसेनमण्डलान्तर्गतसुल्तानगञ्जनामकग्रामे प्रयोग: कृत: बीजोपचारस्य विधि: कृषिपाराशरग्रन्थानुसारं विहित:। तच्च वपनं यथा —

**एकरूपं तु यद्बीजं फलं फलानि निर्भरम् ।**
**एकरूपं प्रयत्नेन तस्माद्बीजं समाचरेत्॥**

अनेन श्लोकानुसारेण संहृतबीजस्य स्वहस्तेन शोधनयन्त्रेण तेषां बीजानाम् एकरूपता

१. कृषिपाराशर:, कृषिखण्ड:, श्लोक -७७।
२. कृषिपाराशर:, कृषिखण्ड:, श्लोक -१५८।

मया कृता, तत्पश्चात् एकरूपबीजानां सूर्यतापेन शुष्कं कृत्वा पुट्टिकां बद्ध्वा पवित्रस्थाने स्थापनं कृतम् । तस्य पाराशरीयवचनं यथा —

**न वल्मीके न गोस्थाने न प्रसूता निकेतने।**
**न च वन्ध्यावति ग्रेहे बीजस्थापनमाचरेत्॥**
**नोच्छिष्टं स्पर्शयेद् बीजं न च नारीं रजस्वलाम्।**
**न वन्ध्या गर्भिणी चैव न च सहाः प्रसूतिका॥**
**घृतं तैलं च तक्रं च प्रदीपं लवणं तथा।**
**बीजोपरि भ्रमेणापि कृषको नैव कारयेत्॥**[३]

पाराशरानुसारेण बल्मीकस्थले गोस्थाने, स्त्रीप्रसूतस्थले, बन्ध्यागृहे च बीजं नैव स्थापयेत्। मयापि बीजस्थापनकाले पराशरोक्तवर्ज्यस्थानेषु बीजस्य स्थापनं कृतम्। अयं बीजोपचारस्य विधिः आधुनिकविधिना अल्पव्ययसाध्यः वर्तते तथा च कृषकः स्वमेव कर्तुं शक्यते। बीजस्य गुणवत्तापि कृषकेण प्रत्यक्षरूपेण द्रष्टुं शक्यते। अतः पाराशरीयविधिः समाजोपयोगि, कृषकोपयोगि च वर्तते।

**हलप्रसारणस्य प्रायोगिकमध्ययनम् —**

फाल्गुनमासशुक्लपक्षे दशमीतिथौ तदनुसारेण २०१६ तमे वर्षे मार्चमासे अष्टादशदिनाङ्के रायसेनमण्डान्तर्गते सुल्तानगञ्जनामग्रामे कृषिपाराशरग्रन्थोक्तविहित–कालमुहूर्त्तानुसारेण हलप्रसारणं कृतम्।

**वैशाखमासे आढकीबीजवपनस्य प्रायोगिकमध्ययनम्-**

वैशाखमासशुक्लत्रयोदशीतिथौ तदनुसारेण २०१६ तमे ख्रीष्टे वर्षे मई मासे १९ दिनाङ्के रायसेनमण्डलान्तर्गते सुल्तानगञ्जनामकग्रामे केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपाल–परिसरस्य ज्योतिषविभागस्य आचार्याः गुरुचरणाः हंसधरझामहाभागानां सन्निधौ कृषिपाराशर–ग्रन्थनिहितवपनमुहूर्त्तकालादीनामनुसारेण अर्धैकड़ऽपरिमित भूमौ ३ किलोग्रामपरिमित–आढक्याः बीजानां वपनं मया कृतम् । तच्च पाराशरीय वचनं यथा —

३. कृषिपाराशरः, कृषिखण्डः, श्लोक -८१-८३।

**वैशाखे वपनं श्रेष्ठं ज्यैष्ठे तु मध्यमं स्मृतम्।**
**आषाढे चाधमं प्रोक्तं श्रावणे चाधमामम्॥**
**उत्तरात्रयमूलेन्द्रमैत्रपेत्रेन्दुधातृषु।**
**हस्तामयमध रेवत्यां बीजवपनमुत्तमम्॥**[४]

आढकीबीजानां वपनकालात् चतुर्दशदिनाभ्यन्तरेषु–अङ्कुरणं सञ्जातम् । परन्तु मध्य-प्रदेशस्य वैशाखमासे जलवायु–अत्यधिकः उष्णः सञ्जातः । तेन कारणेन अङ्कुरणेन प्राप्ताः लघु–लघु पादपाः किञ्चित् श्यामवर्णीयाः सञ्जाताः वपनात् मासद्वयाभ्यन्तरे आढक्याः पादपेषु चतुः पञ्च वा शाखाः समागताः। आढक्याः पादपाः मासद्वयाभ्यन्तरे एकहस्तपरिमितं वृद्धिं सम्प्राप्नुवन्। आढकीपादपैः सह केदारेषु लघु–लघु वपानि समागतानि तदा आढकापादपानां विकासो अवरुद्धः न स्यात् एतदर्थं मासद्वय–मासत्रयाभ्यन्तरे वा तृणादीनाम् उन्मूलनं कृतम्। तथा च वपनात् चतुर्मासाभ्यन्तरे आढकीपादपेषु प्रसूनानि जातानि, परन्तु पुष्पेषु कीटपतङ्गादीनां प्रकोपोऽपि दृष्टः, तत् प्रकोपनिवारणाय कृषिपाराशरग्रन्थोक्त धान्यव्याधिखण्डन (ऊँ सिद्धिः श्री गुरुपादेभ्यो नमः। स्वस्ति हिमगिरि) इति मन्त्रस्य प्रयोगः मया कृतः। तेन मन्त्रेण कीट-पतङ्गादिप्रकोपाणां निवारणं जातम्। तत्पश्चात् वपनकालात् सपादपञ्चमासाभ्यान्तरे सर्वाणि पुष्पाणि प्रकृतिपेलवफलेषु परिणितानि जातानि। सुकुमारफलेषु यदा ईत्यः (इल्ली) दृष्टाः तदा तत् शमनार्थं पुनः धान्यव्याधिखण्डनमन्त्रस्य प्रयोगः कृतः तस्मात् ईतीप्रकोपस्य निवारणं सञ्जातम्। वैशाखमासे यदि आढक्याः वपनं क्रियते तदा ईतीभयोऽल्पः भवति तथा फलेषु अन्तः ईतीप्रवेशः न कर्तुं शक्नुवन्ति इति अस्मिन् प्रयोगे अनुभूतः। वपनकालात् सार्द्धपञ्चमासा-भ्यन्तरे आढकीपादपानां कर्तनं कृतम्। तथा च शोधनं कृत्वा ३५० किलोग्रामपरिमितं आढकी-दलहनम् अर्धएकऽक्षितौ सम्प्राप्तम्।

अस्मिन् आढकीप्रयोगकृषिकर्मणि बीजक्रयपरिश्रमकर्तृभ्यः मया त्रिसहस्त्ररुप्यकाणि प्रदत्तानि त्रिसहस्त्रानि विहाय षोडशसहस्त्ररुप्यकाणां लाभाः प्राप्तः।

**ज्यैष्ठमासे आढकीबीजवपनस्य प्रायोगिकमध्ययनम् —**

ज्यैष्ठमासशुक्लदशमीतिथौ तदनुसारेण २०१६ तमे ख्रीष्टे वर्षे मईमासे २८ दिनाङ्के रायसेनमण्डलान्तर्गते सुल्तानगञ्ज नामकग्रामे कृषिपाराशरग्रन्थोक्तविहितवपनकालमुहूर्त्तादीना-

४. कृषिपाराशरः, कृषिखण्डः, श्लोक -८८-९०।

मनुसारेण अर्धैकड़ऽपरिमितभूमौ ३ किलोग्रामपरिमित-आढक्याः बीजानां वपनं मया कृतम्। तच्च पाराशरीयवचनं यथा —

**वैशाखे वपनं श्रेष्ठं ज्यैष्ठे तु मध्यमं स्मृतम्।**
**आषाढे चाधमं प्रोक्तं श्रावणे चाधमामम्॥**
**उत्तरात्रयमूलेन्द्रमैत्रपेत्रेन्दुधातृषु।**
**हस्तामयमध रेवत्यां बीजवपनमुत्तमम्॥**[५]

आढकीबीजानां वपनकालात् एकादशदिनाभ्यन्तरेषु अङ्कुरणं सञ्जातम्। वपनकालात् चत्वारिंशतदिनान्तरेषु सम्पूर्णकेदारं हरितवर्णं दृष्टम्। वपनात् मासद्वयाभ्यन्तरे आढक्याः पादपेषु चतुः पञ्च वा शाखाः समागताः आढक्याः पादपाः सार्द्धमासद्वयाभ्यन्तरे एकहस्तपरिमितं वृद्धिं सम्प्रप्नुवन्। आढकीपादपैः सह केदारेषु लघु लघु अत्यधिकं तृणानि सञ्जातानि तदा आढकीपादपानां विकासावरोधं प्रभावितो न स्यात् एतदर्थं मास द्वय-मासत्रयाभ्यन्तरे वा तृणादीनाम् उन्मूलनं च कृतम्। तथा च वपनात् सार्द्धत्रयमासाभ्यन्तरे आढकीपादपेषु पुष्पाणि जातानि, परन्तु पुष्पेण कीटपतङ्गादीनां प्रकोपोऽपि दृष्टः तत् प्रकोपनिवारणाय कृषिपाराशर-ग्रन्थोक्तधान्यव्याधिखण्डनमन्त्रस्य प्रयोगः मया कृतः। तेन मन्त्रेण कीटपतङ्गादि प्रकोपानां निवारणं जातम्। तत् पश्चात् वपनकालात् सपादचतुर्मासाभ्यन्तरे सर्वाणि पुष्पाणि कोमलफलेषु परिणितानि जातानि। सुकुमारफलेषु यदा ईत्याः दृष्टः तदा शमनार्थं पुनः धान्यव्याधिखण्डन-मन्त्रस्य प्रयोगः कृतः तस्मात् ईतीप्रकोपस्य निवारणं सञ्जातम् । वपनकालात् पञ्चमासाभ्यन्तरे आढकीपादपानां कर्त्तनं कृतम् । तथा च शोधन कृत्वा ३०० किलोग्रामपरिमितम् आढकी दलहनम् अर्धैकड़ऽक्षितौ सम्प्राप्तम्।

अस्मिन् आढकीप्रयोगकृषिकार्याणि बीजक्रयपरिश्रमकर्तृभ्यः मया त्रिसहस्त्ररूप्यकाणि प्रदत्तानि त्रिसहस्राणि विहाय १३५०० रुप्यकाणां लाभाः प्राप्तः।

**आषाढमासे आढकीबीजवपनस्य प्रायोगिकमध्ययनम् —**

आषाढमासशुक्लदशमीतिथौ तदनुसारेण २०१६ तमे ख्रीष्टे वर्षे मईमासे २८ दिनाङ्के रायसेनमण्डलान्तर्गते सुल्तानगञ्ज नामकग्रामे कृषिपाराशरग्रन्थोक्तविहितवपनकालमुहूर्त्तदीना-

५. कृषिपाराशरः, कृषिखण्डः, श्लोक -८८-९०।

मनुसारेण अर्धैकड़ऽपरिमितभूमौ ३ किलोग्रामपरिमित-आढक्याः बीजानां वपनं मया कृतम्। तच्च पाराशरीयवचनं यथा —

**वैशाखे वपनं श्रेष्ठं ज्यैष्ठे तु मध्यमं स्मृतम्।**
**आषाढे चाधमं प्रोक्तं श्रावणे चाधमामम्॥**
**उत्तरात्रयमूलेन्द्रमैत्रपेत्रेन्दुधातृषु।**
**हस्तामयमध रेवत्यां बीजवपनमुत्तमम्॥**[६]

आढकीबीजानां वपनकालात् नवदिनाभ्यन्तरेषु अङ्कुरणं सञ्जातम्। वपनकालात् विंशतिदिनान्तरेषु सम्पूर्णकेदारं हरितवर्णं दृष्टम्। वपनात् मासद्वयाभ्यन्तरे आढक्याः पादपेषु चतुः पञ्च वा शाखाः समागताः आढक्याः पादपाः तथा च एकहस्तपरिमितं वृद्धिं सम्प्रप्नुवन्। आढकीपादपैः सह केदारेषु लघु लघु अत्यधिकं तृणानि सञ्जातानि तदा आढकीपादपानां विकासावरोधं प्रभावितो न स्यात् एतदर्थं मास द्वय-मासत्रयाभ्यन्तरे वा तृणादीनाम् उन्मूलनं च कृतम्। तथा च वपनात् त्रयमासाभ्यन्तरे आढकीपादपेषु पुष्पाणि जातानि, परन्तु पुष्पेण कीटपतङ्गादीनां प्रकोपोऽपि दृष्टः तत् प्रकोपनिवारणाय कृषिपाराशरग्रन्थोक्तधान्यव्याधिखण्डन-मन्त्रस्य प्रयोगः मया कृतः। तेन मन्त्रेण कीटपतङ्गादि प्रकोपानां निवारणं जातम्। तत् पश्चात् वपनकालात् सपादचतुर्मासाभ्यन्तरे सर्वाणि पुष्पाणि कोमलफलेषु परिणितानि जातानि। सुकुमारफलेषु यदा अत्यधिक-ईत्याः दृष्टः तदा शमनार्थं पुनः धान्यव्याधिखण्डनमन्त्रस्य प्रयोगः कृतः तेन मन्त्रप्रभावेण ईतयः अल्पमात्रासु मृतः एव जाता। वपनकालात् सार्धचतुर्थ-मासाभ्यन्तरे आढकीसस्यानि पक्वानि जातानि। तदा सम्पूर्ण सस्यस्य कर्त्तनं शोधनं च कृत्वा २५० किलोग्रामपरिमितम् आढकी दलहनम् अर्धैकड़ऽमितौ सम्प्राप्तम् ।

अस्मिन् आढकीप्रयोगकृषिकर्मणि बीजक्रयपरिश्रमकर्तृभ्यः मया सार्धत्रिसहस्ररूप्य-काणि प्रदत्तानि सार्धत्रिसहस्राणि विहाय १०२५० रुप्यकाणां लाभाः प्राप्तः ।

### श्रावणमासे आढकीबीजवपनस्य प्रायोगिकमध्ययनम् —

श्रावणमासशुक्लदशमीतिथौ तदनुसारेण २०१६ तमे ख्रीष्टे वर्षे मईमासे २८ दिनाङ्के रायसेनमण्डलान्तर्गते सुल्तानगञ्ज नामकग्रामे कृषिपाराशरग्रन्थोक्तविहितवपनकालमुहूर्त्तादीना-

६. कृषिपाराशरः, कृषिखण्डः, श्लोक -८८-९०।

मनुसारेण अर्धैकड़ऽपरिमितभूमौ ३ किलोग्रामपरिमित-आढक्याः बीजानां वपनं मया कृतम्। तच्च पाराशरीयवचनं यथा —

**वैशाखे वपनं श्रेष्ठं ज्यैष्ठे तु मध्यमं स्मृतम्।**
**आषाढे चाधमं प्रोक्तं श्रावणे चाधमाधमम्।।**
**उत्तरात्रयमूलेन्द्रमैत्रपेत्रेन्दुधातृषु।**
**हस्तामयमध रेवत्यां बीजवपनमुत्तमम्।।**[७]

आढकीबीजानां वपनकालात् सप्ताष्टदिनेषु वा अङ्कुरणं सञ्जातम्। परन्तु अत्यधिक वृष्टिकारणात् सर्वाणि अङ्कुराणि नष्टानि जातानि।

**कृषिवैज्ञानिकमतानुसारं आढकीवपनस्य प्रायोगिकमध्ययनम्** —

कृषिवैज्ञानिकानां आढकीवपनकालविषये मतं अस्ति-शीघ्रपक्कादीनां वपनं जूनमासस्य प्रथमपक्षे करणीयम् तदनुसारेण २०१६ जूनमासे त्रयोदशे दिनाङ्के रायसेनमण्डलान्तर्गते सुल्तानगञ्जनामकग्रामे अर्धैकडपरिमितभूमौ ३ किलोग्राम आढकबीजानां वपनं कृतम्। वपनकालात् नवदिनान्तरं बीजस्य अङ्कुरणं जातम्। वपनकालात् अष्टदशदिनान्तरं सर्वं केदारं हरितवर्णमयं दृष्टम्। वपनकालात् सार्धैकमासाभ्यन्तरे आढकीपादपैः सह घासतृणादीनामपि विकासः जाता। घासतृणादीनां विकासात् आढकीपादपानां वृद्धिविकासः अवरुद्धः जाता। तत् घासतृणादीनां निवारणाय आढकीपादपान् परितः भूमेः कर्षणेन घासतृणादीनामुन्मूलनं कृतम्। आढकीपादपानां विकासाय १५० मिलिग्रामपरिमितः उर्वरकन्ट्रोलप्लसनामक-ओषधेः प्रयोगः कृता तेन प्रयोगेण आढकीपादपानां शीघ्रविकासः सञ्जाता। वपनकालात् मामद्वयभ्यन्ते आढकीपादपेषु पञ्च षष्ठ शाखा एवञ्च हस्तद्वयपरिमितस्य वृद्धिः जाता। वपनकालात् मासत्रयभ्यान्तरे आढक्याः पादपेषु पुष्पाणि समागतः। पुष्पेषु कीटपतङ्गादीनां प्रकोपः दृष्टः। तत् प्रकोपनिवारणाय २५ किलोग्रामः (D.A.P.) डी.ए.पी. नामकस्य ओषधेः प्रयोगः कृतः। तेन प्रयोगेण कीटपतङ्गादीनां विनाशः जाता एवञ्च आढकीपादपेषु पुष्पाणां विकासोऽपि जाता। वपनकालात् सार्द्धत्रयामासान्तरे सर्वाणि पुष्पाणि फलेषु वरिणितानि जातानि, परन्तु फलेषु ईतिप्रकोपस्य ईतिप्रकोपः दृष्टः ता ईतयः फलेषु छेदनं कृत्वा अन्तः प्रवेशं कृतवती। तत्

७. कृषिपाराशरः, कृषिखण्डः, श्लोक -८८-९०।

ईतिप्रकोपनिवारणाय ५० मिलिग्रामफसीनामकस्य ओषधे: प्रयोग: कृत: तेन प्रयोगेण प्रकोपस्य शमनं जाता:। वपनकालात् चतुर्थमासाभ्यन्तरे सर्वाणि फलानि पक्वानि जातानि तेषां छेदनं कृतं मया तत: शोधनं कृत्वा ३४२ किलोग्रामपरिमितं आढकीदलहनं अर्धेकडमितौ सम्प्राप्तम्।

अस्मिन् कृषिवैज्ञानिकाढकीप्रायोगिकवपनकर्मणि बीजोषधिक्रयपरिश्रमकर्तृभ्य: मया षष्ठसहस्त्ररूप्यकाणि प्रदत्तानि षष्ठसहस्त्राणि विहाय १०,६१० रूप्यकाणां लाभा: प्राप्ता:।

अस्मिन् प्रायोगिकशोध-अध्ययनेन ज्ञायते यत् प्राचीनकृषिपद्धति: वर्तमानकाले श्रेयस्करी लाभकरी अल्पव्ययकरी च वर्तते। आधुनिकयुगे सर्वत्र जना: रोगग्रस्ता: दृश्यन्ते। रोगानां मुख्यकारणं रासायनिकपद्धतिद्वारा सस्योत्पादनमस्ति परन्तु प्राचीनकृषिपद्धौ रासायिनक-उर्वरकाणां प्रयोगो न भवति। अत: प्राचीनकृषिपद्धति: कृषकाय समाजाय च कल्याणकारी वर्तते।

**सहायकग्रन्था: -**

१. कृषिपाराशर:, पाराशर:, मोतीलालबनारसीदास, वाराणसी।
२. काश्यपीयकृषिसूक्ति:, कृषि अनुसन्धान केन्द्र, नई दिल्ली।
३. सस्यविज्ञान के मूल सिद्धान्त, आगरा।
४. कृषि जगत, समाचार पत्र।
५. अनुसन्धान संदर्शिका, गुप्ता डॉ. एस्.पी., शारदा पुस्तक भवन।

*****

**डॉ. नवीनतिवारी**
सहायकाचार्य: (अ.), ज्योतिषविभाग:
केन्द्रीयसंस्कृतविश्वविद्यालय:,
श्रीरणबीरपरिसर:, जम्मू।

# साहित्यमीमांसा

## विषय-सूची

# महिमभट्टसम्मतप्रकृतिप्रक्रमभेदानौचित्यविमर्शः

— डॉ. सनन्दनकुमारत्रिपाठी

अपारे काव्यशास्त्रसंसारे व्यक्तिविवेककर्तुर्महिमभट्टस्य ध्वनिविरोधित्वेन महती प्रसिद्धिः। एतदीयं काव्यशास्त्रीयं चिन्तनं सूक्ष्मतरं मौलिकञ्च। अयं हि कश्मीरवास्तव्यो बभूव। अस्य पितुर्नाम 'श्रीधैर्यः' गुरोश्च 'श्यामल' इति। एकादशताब्द्या मध्यभागोऽस्य स्थितिकालः। अलङ्कारशास्त्रसंसारे महिमभट्टस्यैक एव ग्रन्थः समुपलभ्यते। ग्रन्थस्यास्य मुख्यमुद्देश्यं वर्तते ध्वनेरनुमानेऽन्तर्भावः। एतद्धि प्रतिज्ञातं व्यक्तिविवेकमङ्गलाचरण एव —

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥**[१]

महिमभट्टेन स्वसिद्धान्तस्थापनाय व्यक्तिविवेके प्रौढपाण्डित्यं प्रदर्शितम्। तत्र प्रथमविमर्शे ध्वनिलक्षणं खण्डयित्वाऽनुमाने तदन्तर्भावो दर्शितः। द्वितीयविमर्शे शब्दार्थविषयक-मनौचित्यं विवेचितम्। अनौचित्यं प्रमुखं काव्यदोषं मत्वाऽन्तरङ्गबहिरङ्गदोषा विवेचिताः। वस्तुतोऽन्त-रङ्गानौचित्यं नाम रसदोषः। बहिरङ्गानौचित्यं पञ्चविधम्। एतत्सर्वं द्वितीयविमर्शे निरूपितम्। तृतीयविमर्शे ध्वनेरुदाहरणानामनुमानेऽन्तर्भावः प्रदर्शितः।

ध्वनिप्रस्थापनपरमाचार्येण मम्मटेन काव्यप्रकाशे यद्यपि महिमभट्टसिद्धान्तस्य खण्डनं कृतम्, किन्त्वनौचित्यविषयकं समग्रमेव तद्विवेचनं काव्यप्रकाशस्य दोषप्रकरणे स्वीकृतमेव।

महिमभट्टो ध्वनिसिद्धान्तस्य महान् विरोधी बभूव। तेन ध्वनिसिद्धान्तस्य समूलमुन्मूल-नायैव व्यक्तिविवेकः कृतः। तन्मतेऽभिधैवैका शब्दशक्तिः। ध्वनये व्यञ्जनावृत्तिर्नावश्यिकी। शब्दार्थयोर्व्यङ्ग्यव्यञ्जकभावो नाभ्युपगतस्तेन। असौ ध्वनिं ध्वंसयित्वाऽनुमानेऽन्तर्भावयति। महिममते प्रतीयमानार्थोऽनुमेयार्थ एव। रसस्य काव्यत्मत्वं स्वीकृत्यापि तेन तदनुभूतिरनुमानविषया मता। एवं काव्यशास्त्रे महिमभट्टस्य महत्त्वपूर्णं स्थानमुगसति।

---

१. व्यक्तिविवेकः - १/१।

प्रस्तुतेऽस्मिन् शोधपत्रे 'महिमभट्टसम्मतप्रकृतिप्रक्रमभेदानौचित्यविमर्श' इति विषयः स्वीकृतः। तदनुरोधेन विचार्यते चेत् महिमभट्टेन व्यक्तिविवेकस्य द्वितीयविमर्शेऽनौचित्यविवेचन-प्रस्तावे प्रकृतिप्रक्रमभेद उल्लिखितः। अनौचित्यस्य लक्षणसामान्यं महिमभट्टेन प्रत्यपादि —

**'विवक्षितरसादिप्रतीतिविघ्नविधायित्वं नाम सामान्यलक्षणम्'**[२]। तत्र दोषापर-पर्यायमनौचित्यं द्विधा- अर्थगतं शब्दगतञ्चेति। अर्थगतमनौचित्यमन्तरङ्गम् शब्दगतञ्च बहिरङ्गम्। तत्रान्तरङ्गबहिरङ्गभावश्च साक्षात् परम्परया च रसभङ्गहेतुत्वादिष्टः। मम्मटेनाऽपि —

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः।**[३] इत्याद्युक्तम्। तत्र मुख्यार्थोरसः। हतिरपकर्षः इति। ध्वनिकारादिभिरप्युक्तम् —

**अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।**
**औचित्योपनिबन्धस्तु रसस्योपनिषत् परा॥**[४]

एवं हि रसनिष्पत्तिप्रसङ्गे सम्भावितो विघ्न एव दोषः। स च महिम्नानौचित्यपदेन व्यपदिष्टः। तत्रार्थगतमन्तरङ्गमनौचित्यं विभावानुभावव्यभिचारिणामयथायथं रसेषु यो विनियोगस्तन्मात्रलक्षणं पूर्वाचार्यैरेव सविस्तरं विवेचितमिति महिमभट्टेन तन्न प्रातन्यत। द्वितीयं हि शब्दगतमनौचित्यं सविस्तरं विवेचितमाचार्येण। तच्च पञ्चविधम्-विधेयाविमर्शः, प्रक्रमभेद, क्रमभेदः, पौनरुक्त्यम्, वाच्यावचनञ्चेति। अवाच्यवचनं नाम षष्ठोऽपि प्रकार उक्तः, किन्तु वाच्यावचनेनौचित्येन सामर्थ्यादवाच्यवचनमपि सङ्गृह्यते। तस्यापीष्टार्थविपर्ययात्मकत्वात्। अतः पञ्चविधत्वमक्षुण्णमेव। इमे हि विधेयाविमर्शादयो दोषा इत्युच्यन्ते।[५] अनौचित्यस्यैव नामान्तरं दोष इति वदन्त्याचार्याः।

एवमेतेष्वनौचित्यभेदेषु दोषेषु प्रक्रमभेदो नामानौचित्यमन्यतमम्। प्रक्रमभेदस्यापि अनौचित्यस्य प्रकृतिप्रक्रमभेदः, सर्वनामप्रक्रमभेदः, प्रत्ययप्रक्रमभेदः, पर्यायप्रक्रमभेदध, विभक्तिप्रक्रमभेदः, उपसर्गप्रक्रमभेदः, वचनप्रक्रमभेदः, तिङन्तप्रक्रमभेदः, कालप्रक्रमभेदः,

२. व्यक्तिविवेकः - पृ. १८२।
३. काव्यप्रकाशः - ७.१।
४. व्यक्तिविवेकः - पृ. १८२।
५. व्यक्तिविवेकः - पृ. १७९-१८३।

कारकशक्तिप्रक्रमभेदः, शाब्दप्रक्रमभेदः, आर्थप्रक्रमभेदः, क्रमप्रक्रमभेदः, वास्तुप्रक्रमभेदः इति चतुर्दश प्रक्रमभेदा विवेचिताः।

एवमेतेष्ववनौचित्येषु प्रकृतिप्रक्रमभेदोऽन्यतमः। प्रकृते शोधपत्रे प्रकृतिप्रक्रमभेदमधि–कृत्य विचारः प्रस्तूयते। अत्रेदमवधेयं यत् प्रक्रमभेदो हि रसभङ्गहेतुः। अयं हि प्रक्रमानुसारेण वर्धमानां ज्ञातृज्ञानधारां निपात्य गर्त इव खेदं जनयति। अतः प्रक्रमो नाम प्रारम्भो यथा येन वा प्रकृतिविशेषेण प्रत्ययविशेषेण वा स्यादुपसंहारोऽपि तथा तेनैव विधेयः। यथा हि प्रक्रमे ताम्रशब्दः प्रयुक्तश्चेद् उपसंहारेऽपि ताम्रशब्दः प्रयोक्तव्यः — 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च।' इति शब्दार्थव्यवहारे सर्वत्र लोकसम्मतः पारम्परिकक्रमोऽनुसर्तव्यः। लोकप्रवृत्तिश्च रसास्वादप्रतीतौ परिम्लानता न स्यादित्युपक्रमानुसारेणैव शब्दार्थव्यवहार आदरणीय इति। महिमभट्टात् परवर्तिनो मम्मटविश्वनाथादय आचार्या भग्नप्रक्रमं नाम प्रक्रमभेददोषं मन्यन्ते।[६]

प्रक्रमभेदाख्यास्यास्य दोषस्य मूलं व्याकरणशास्त्रेऽपि लभ्यते। व्यक्तिविवेकस्य द्वितीयविमर्शे प्रारम्भ एव रुय्यकेणेदं टीकायां प्रत्यपादि। रुय्यकेण विधेयाविमर्शादिदोषपञ्चकस्य मूलं व्याकरणसूत्रे महाभाष्ये व्याहृतम्। तत्र '**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च**'[७] इति सूत्रे निर्दिष्टं यत् स्वामीश्वराधिपतिप्रभृतिशब्दयोगे सप्तम्यपि भवति विकल्पेन षष्ठ्यपि विधीयते। यथा गवामश्वानां च स्वामी अथवा गोषु अश्वेषु च स्वामी। व्याकरणदृष्ट्योभयमपि सङ्गच्छते। तत्र भाष्यकारेण लिखितं यत् न हि भवति गवां स्वामी अश्वेषु च। तात्पर्यमिदं भाष्यकारवचनस्य यदोभे विभक्ती प्राप्येते स्वामिशब्दयोगे, किन्तु यदि च सप्तम्यारभ्यते तर्हि सप्तम्यवोभयत्र प्रयोक्तव्या। यदि च षष्ठ्यारभ्यते तदोभयत्र षष्ठ्येव विधेयेति। अतः प्रयोक्तव्ये सति 'गवामश्वानाञ्च स्वामी, किंवा गोष्वश्वेषु च स्वामीति वाच्यम्, न तु गोष्वश्वानाञ्च स्वामी किंवाश्वेषु गवाञ्च स्वामीति। एकत्र षष्ठ्यन्यत्र च सप्तमीति सूत्रदृष्ट्या साध्वपि नैव सङ्गच्छत एतादृशः प्रयोगः। यदि प्रक्रमः सप्तम्या तर्हि सप्तम्यैवोपसंहारः समपोक्षितः, तदभावे प्रक्रमभेदो नाम दोष इति बीजम् भाष्यकारेण प्रक्रमभेदस्य प्रस्तुतम्।[८]

---

६. काव्यप्रकाशः – भग्नः प्रक्रमः प्रस्तावो यत्र (स भग्नप्रक्रमः) काव्यप्रकाशः – पृ. २२८।
साहित्यदर्पणः – वाच्यस्यानभिधानं च भग्नप्रक्रमता तथा। (साहित्यदर्पणः – ७/७८)।

७. अष्टाध्यायी – २, ३, ३९।

८. एता अवान्तरभेदभिन्ना पञ्चदूषणजातयः। यदेतदिह ग्रन्थकृता विचारसरणिमाश्रित्य विधेयाविमर्शादिदोषपञ्च–कमुद्भावितम्, न तत्राद्यतनपुरुषमात्रबुद्धिप्रणयनासूययानादरः करणीयः। पूर्वैरेवं विधदोषोद्भावनरूपस्य

तत्र प्रकृतिप्रक्रमभेदे प्रकृतिश्च यतः प्रत्ययो विधीयते। प्रकृतिश्च द्विधा प्रातिपदिकरूपा धातुरूपा च। अत्र प्रकृतेः प्रातिपदिकरूपाया धातुरूपायाश्च प्रक्रमभेदः प्रदर्श्यते।

प्रक्रमभेदो हि शब्दानौचित्यम्। रसप्रतिपत्तौ समाहितचित्तस्य प्रवृत्तस्य पाठकस्य दर्शकस्य वा समक्षं यदा प्रक्रमनिर्वाहाभावः समुपतिष्ठते तदा स रसास्वादने विघ्नमनुभवति। यतः शब्दार्थव्यवहारे मनीषिणः सहृदया लौकिकमेव क्रममनुसरन्ति। लोकेऽप्ययं व्यवहारो विलोक्यतेऽभिव्यक्तौ यद् यस्य प्रक्रमः प्रारम्भः कृतस्तस्य समाप्तिपर्यन्तं निर्वाहो विधेयः। यद्येवं न विधीयते तर्हि सहृदयसमाजे वैरस्यमुत्पद्यते रसास्वादने च सहृदयो विघ्नमनुभवत्येव। आचार्यमहिमभट्टेन स्वीकृतं प्रक्रमभेदं नाम दोषं वीक्ष्य वक्तुं शक्यते यत् प्रकृतिर्वा प्रत्ययो वा भवतु सर्वस्यैव स्वतन्त्रोऽर्थः, सोऽर्थ शब्दान्तरेण प्रकटयितुं नैव शक्यते। साम्येन केचन शब्दाः पर्यायवाचिनः समानार्थकाः प्रत्ययाश्चाभिधीयन्त इति त्वन्यद्। एतद्विषये महिमभट्ट आह —

**प्रक्रमभेदोऽपि शब्दानौचित्यमेव। सहि यथाप्रक्रममेकरसप्रवृत्तायाः प्रतिपत्तृ-प्रतीतोरुत्खात इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यति। किञ्च सर्वत्रैव शब्दार्थ-व्यवहारे विद्वद्भिरपि लौकिकक्रमोऽनुसर्तव्यः। लोकश्च माभूद् रसास्वादप्रतीतेः परिम्ला-नतेति यथाप्रक्रममेवैनमाद्रियते नान्यथा।**[९]

अयं हि प्रक्रमभेदः प्रकृतिप्रत्ययपर्यायादिभेदेन नानाविधः। तत्र प्रकृतिप्रक्रमभेदो महिम्नाव्याख्याताः।

तत्र प्रकृतिप्रत्ययपर्यायविभक्त्युपसर्गादिप्रक्रमस्य निर्वाहः कुन्तकेनाऽपि समाम्नातः। स हि विशिष्टयोः शब्दार्थयोः काव्यत्वं स्वीकुर्वन् शब्दं सविशेषं परिभाषते यत् शब्दस्य नानापर्यायेषु सत्स्वपि कवेः विवक्षितार्थविशेषवाचक एक एव शब्दो भवति।[१०] प्रक्रमभेदप्रस्तावे महिमभट्टस्येदं मतं यदेकस्य शब्दस्य स्थाने शब्दानां कस्याश्चित् प्रकृतेः प्रकृत्यन्तरं प्रत्ययस्थाने

---

विचारस्य प्रणीतत्वात्। तथाहि दास्याः पुत्र इत्यादावाक्रोशे षष्ठ्या अलुकं प्रतिपादयता सूत्रकृता विधेयाविमर्शः सूचितः एव। तथा स्वामीश्वराधिपतिदायादे (२/३/३९) त्यत्र सूत्रे नहि भवति गवां स्वामी अश्वेषु चेति वदता भाष्यकृता स्पष्टमेव प्रकमभेदः प्रतिपादितः। व्यक्तिविवेकटीका पृ. १८०।

९. व्यक्तिविवेकः - पृ. २८७।

१०. शब्दो विवक्षितैकार्थैकवाचकोन्येषु सत्स्वपि। वक्रोक्तिजीवितम् - १-९।

वा समानार्थकं प्रत्ययान्तरं प्रयोगानर्हम्। यदि क्वचित् काव्ये व्यतिक्रमो दृश्यते तर्हि तत्र प्रक्रमभेददोषो मन्तव्यः। यथा प्रकृतिप्रक्रमभेदः —

**''सततमनभिभाषणं मया ते परिपणितं भवतीमनानयन्त्या।**
**गतधृतिरवलम्बितुं बतासूननलमनालपनादहं भवत्याः॥''**

प्रस्तुतेऽस्मिन्नुदाहरणे वार्तालापरूपार्थमभिधातुं प्रथममभिभाषणशब्दः प्रयुक्तः, पुनस्ते-मेवार्थमभिधातुमालपनशब्दः प्रयुक्तः। प्रयोगोऽयं सहृदयदृशा नोचितः। अत्र प्रकृतिप्रक्रमभेदो नाम दोषः। अत्राधोलिखितः पाठः समुचितः स्यात् —

**'गतधृतिरवलम्बितुं बतासूननलमभाषणतो ह्यहं भवत्याः'॥**

अत्रेदमवधेयं यत् पाणिनीयधातुपाठे 'लप व्यक्तायां वाचि' तथाच 'भाष व्यक्तायां वाचि' इति पाठात् लप् धातुः, भाष् धातुश्च व्यक्तवचन एव पठितौ। अतो लपनम् भाषणञ्च पर्यायवाचिनौ शब्दौ। अतः समान्येन एकस्य स्थानेऽपरस्य प्रयोगो नाऽनुचितः। किन्तु वस्तुतः प्रत्येकं शब्दस्य प्रयोगे किमपि सूक्ष्ममन्तरं स्यादेव। अतएव कस्यापि शब्दस्य स्थानेऽपरस्य प्रयोगोऽथवैकेन शब्देनोपक्रम्यान्येनोपसंहारः नोचितः।[१२] यतः एवं प्रक्रमाभेदस्य शब्दौचित्यस्य विध्यनुवादभावत्वेन परिणतिर्जायते।[१३] किञ्च प्रक्रमभेदस्थितौ विध्यनुवादभावो न सम्भाव्यते। परिणामतः प्रक्रमभेदः सहृदयहृदये वैरस्यं जनयति। असति प्रक्रमभेदे वाक्ये साम्यजनितं सविशेषं चारुत्वमनुभूयते। यथा —

**तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।**
**रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥**[१४]

यथा च —

**एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम्।**

११. शिशुपालवधम् - ७/९-१०।
१२. अत्र हि भाषतिलपत्योरुभयोरपि वचनार्थाविशेषेऽपि यदा भाषतिप्रयोगक्रमेण वस्तु वक्तुमुपक्रान्तं तदा तेनैव निर्वाहः कर्तुमुचितो नेतरेण। व्यक्तिविवेकः - पृ. २८८।
१३. एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात्। व्यक्तिविवेकः पृ. २८८।
१४. अलङ्कारसर्वस्वध्वन्यालोकादिग्रन्थेषु विषमबाणलीलातः समुद्धृतमिदं पद्यम्।

**परमार्थविचारे पुनश्चन्द्रश्चन्द्र एव वराकः।**

उपर्युक्तयोरुदाहरणयोः कमलचन्द्रशब्दाभ्यामुपक्रमो विहितः, ताभ्यामेव च कमल-चन्द्रशब्दाभ्यां तदनुवादो व्यधायि। यद्यपि द्वितीये कमलशब्दे चन्द्रशब्दे च पूर्णगुणशालितार्थस्य सत्त्वात् प्रतीयमानार्थभेदस्तथापि प्रक्रमाभेदनिर्वाहायैव पुनरपि तौ शब्दौ प्रयुक्तौ। द्वितीयोदाहरणो 'शशिबिम्बम्' इति पदस्य स्थाने 'चन्द्रबिम्बम्' इति पदप्रयोगे विहिते चारुत्वोत्कर्षः स्यात्।[१५]

एवमेव —

**'एवमुक्तो मन्त्रिमुख्यैः रावणः प्रत्यभाषत।'**[१६]

इति पद्ये वच्-धातुना प्रक्रमः कृतः, किन्तु तदुत्तरवाक्ये भाष्-धातोः प्रयोगेण प्रतीतिसाम्यनिर्वाहो न कृतः। अतोऽत्र प्रकृतिप्रक्रमानौचित्यं नाम दोषो मन्तव्यः। दोषनिरासाय 'प्रत्यभाषत' इति पदस्थाने 'प्रत्यवोचत' इति पाठः समुचितः।[१७]

एवमेव —

**नाथे निशाया नियते नियोगादस्तं गते हन्त निशापि याता।**
**कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति॥**[१८]

अत्रापि गम्-धातुना प्रक्रान्तम्, अतस्तस्य 'या'धातुनाऽनुवादो नोचितः। अतः पाठविपर्यासेन न '**हन्त गता निशापि**' इति पाठः सङ्गच्छते।[१९]

तत्रदेमवधार्यं यददोषरूपत्वेनाभिमतं प्रक्रमाभेदं दृष्ट्वा क्वचित् पुनरुक्तिभ्रमोऽभिजायते '**नैकं पदं द्विः प्रयोज्यन्**' इति न्यायेन। किन्तु प्रक्रमाभेदशब्दपुनरुक्त्योः क्षेत्रं सर्वथा भिद्यते। पूर्वोद्दिष्टस्य प्रतिनिर्देशः प्रक्रमाभेदविषयः। तत्राऽभेदेऽसति दोषत्वम्। यत्र चोद्दश्यप्रतिनिर्देश्यभावे

१५. अत्र ह्युत्कर्षमात्रविवक्षता परिकल्पितभेदेऽप्येकस्मिन्नर्थे विधेयानुवाद्यविषयेण एकेनैवाभिधानेन विध्यनुवादभावो भणित इति प्रक्रमाभेदप्रकार एवायमिति मन्तव्यम्। केवलं पर्यायप्रक्रमभेदनिवृत्तये शशिबिम्बमित्यत्र चन्द्रबिम्बमिति पाठः परिणमयितव्यः। व्यक्तिविवेकः - तत्रैव।

१६. व्यक्तिविवेकः - पृ. २९०।

१७. तेन प्रत्यवोचत इति अत्र पाठो युक्तः। व्यक्तिविवेकः - पृ. २९०।

१८. व्यक्तिविवेकः - पृ. २९०।

१९. अत्र हि 'गता निशोपी'ति युक्तः पाठः। व्यक्तिविवेकः - तत्रैव।

सति पुनस्तस्यैव शब्दस्य प्रयोगाभावे प्रक्रमभेददोषः। वक्तुरसामर्थ्याभिव्यक्तये क्वचिद् विकृत–शब्दप्रयोगेऽपि शब्दान्तरभ्रमहेतुतयोद्देश्यविशेषेण प्रयोगात् न प्रक्रमभेददोषः।[२०]

यथा —

**व्रजतः क्व तात! 'वजसीति' परिचयगतार्थमस्फुटम्।**
**धैर्यमभिनदुदितं शिशुना जननीनिर्भर्त्सनविवृद्धमन्युना॥**[२१]

अत्र 'व्रजतः' इति पदेन प्रक्रान्तस्य 'वजसि' इति पदेनानुवादो विहितः। अत्र व्रज्–धातुस्थाने 'वज्' धातुप्रयोगे प्रक्रमभेददोषभ्रमो न पालनीयः, कविना स्वनिबद्धवक्तुरत्यन्तशैशव–द्योतनाय रेफरहितस्य 'व्रज्'धातोरेव प्रयोगात्, नतु 'वज्' धातोः। अतो नात्र प्रक्रमभेददोषः।[२२]

एवं महिमभट्टः धातुरूपायाः प्रकृतेः प्रक्रमभेदं प्रदर्श्य प्रातिपदिकरूपायाः प्रकृतेः मध्ये च सर्वनामादीनां प्रकारवैचित्र्येण प्रक्रमभेदं दर्शयति। यथा —

**ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।**
**सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥**[२३]

पद्येऽस्मिन् भगवान् शङ्करः प्रकरणप्राप्तः। तस्य चास्मै इत्येन इदमा निर्देशः कृतः, अतस्तेनैव 'इदमा' परामर्शः समुचितः, न तु तच्छब्देन। अत्र तदुत्तरप्रयोगे तत् शब्दः प्रयुक्त इति सर्वनामप्रक्रमो भग्नः इति नोचितः। अतोऽत्र सर्वनामप्रक्रमभेदो नामाऽनौचित्यं दोषः।[२४]

अत्रेदमाशङ्क्यते यद् यथा 'यत्तदोर्नित्यसम्बन्धः' इति नियमेन यच्छब्देन प्रक्रान्तस्य विषयस्योपसंहारः कृतः सन्न दोषाय मन्यते तथैव इदमापि प्रक्रान्तस्य विषयस्य तच्छब्देनोप–

२०. न चैवं शब्दपुनरुक्तिदोषप्रसङ्गः – यथान्ये मन्यन्ते 'नैकं पदं' द्विः प्रयोज्यं प्रायेण (वामनस्य – का.सू. ५/१/१) इति, तयोर्भिन्नविषयत्वात्। यथोद्देशं हि प्रतिनिर्देशोऽस्य विषयः। उद्देश्यप्रतिनिर्देश्यभावाभावविषयस्तु शब्दपुनरुक्तिदोष इति कुतस्तस्य प्रसङ्गः। व्यक्तिविवेकः – पृ. २९०।

२१. व्यक्तिविवेकः – पृ. २९०।

२२. शिशुना व्रजतिरेव प्रयुक्तो न वजति, तत्रैव परिचयगतार्थत्वास्फुटत्वधैर्यभेदत्वसम्भवात्। केवलं शक्तिवैकल्याद्रेफोऽनेन नोच्चादित इति प्रत्युदाहरणमेतत्।

२३. कुमारसंभवम् – ६/९४।

२४. अत्र हि भगवन्तं शूलिनं प्रक्रान्तमिदमा परामृश्य तेनैवोक्तरीत्या तत्परामर्शः कर्तुं युक्तो न तदा। तयोर्देवदत्तयज्ञदत्त–शब्दयोरिवभिन्नार्थत्वात्। न चासौ कृत इति सर्वनामप्रक्रमभेदः। व्यक्तिविवेकः – २९२।

संहारो दोषाय न कल्पते। किन्त्वत्रावधेयं यद्यथा यत्तदोर्नित्यसम्बन्धस्तथा तदिदमोर्न नित्य-सम्बन्धः। इदम् शब्दस्तु सन्निकृष्टार्थस्य परामर्शकः, किन्तु तच्छब्दो दूरस्थस्य। एवमुभयं भिन्नार्थम्। अतश्तच्छब्दो इदमः परामर्शको न स्यात्। एवं सति अभिन्नार्थकानाम् इदमेतदद-सामन्यतमस्य प्रयोगेऽपि दोषोऽयं सम्भावयितुं न शक्यते, स्वभावत एव इदम्-एतद्-अदस्-शब्दानां अन्योन्यसापेक्षसम्बन्धप्रतिपादनात्। अतः इदमः परामर्शः इदमेतददसामन्यतमेन कर्तुं शक्यते, न तदेति व्यक्तिविवेकवृत्तावपि स्पष्टम्।[२५] एतद्धि पूर्वमेव व्यक्तिविवेककारेण स्पष्टीकृतम्—

**यश्चैकवाक्ये कर्तृत्वेनोक्तो यश्चेदमादिभिः।**
**तच्छब्देन परामर्शो न तयोरूपपद्यते॥**
**यतोऽध्यक्षायमाणोऽर्थः स तेभ्यः प्रतिपद्यते।**
**न चाऽसौ तत्परामर्शसहिष्णुरसमन्वयात्॥**[२६]

एवं व्याकरणशास्त्रसूचितः प्रकमभेदः, यो महिमभट्टेन विचारितः। तस्य नैके भेदा यद्यपि भवन्ति तथाप्यत्र मया प्रकृतिप्रक्रमभेद एव विचारितः। यतः प्रत्ययो भवति सा प्रकृतिरिति प्रसिद्धमेव। प्रक्रमभेदस्यानौचित्ये इदमेव बीजं वर्तते यत् यत्र द्वयोः अर्थयोः भेदः विवक्षितः भवति तत्र यदि शब्दे भेदः जायते तदा अर्थप्रतीतावपि भेदो भवति। शाब्दबोधे शब्दोऽपि विशेषणत्वेन भासते। एवं पर्यायशब्दस्य प्रयोगे सति शब्दभेदजन्यः बोधभेदोऽपि भवति। एवं समरसत्वं विनश्यति। अतः प्रक्रमभेदोऽनौचित्येन स्वीकृतः। शब्दोऽपि शाब्दबोधे विशेषणत्वेन भासते इति भर्तृहरिणाऽपि वाक्यपदीये कथितमेव —

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥** इति।

एवमत्र प्रक्रमभेददोषेषु प्रकृतिप्रक्रमभेदः सोदाहरणं विचारितः। यथा सततमनभि-भाषणमित्युदाहरणे यमर्थममिधातुं प्रथममभिभाषणशब्दः प्रयुक्तस्ततस्तमेवार्थमभिधातुं तदग्रे

२५. न चैवं यत्तदोरिदमेतददसां चाभिन्नार्थत्वेऽप्येतद्दोषविषयत्वप्रसङ्गः। तेषामुक्तप्रकारेण स्वभावतोऽन्योन्या-पेक्षसम्बन्धोपपादनात्। तेनेदमादिभिस्त्रिभिस्तस्य परामर्शो न तदेति स्थितम्। व्यक्तिविवेकः - २९२।

२६. व्यक्तिविवेकः - २/६-७।

लपनशब्द इति प्रकृतिप्रक्रमभेदो नाम दोषः। असति प्रक्रमभेदे साम्यजनितं चारुत्वमाविर्भवति। यथा — **'तदा जायन्ते गुणा'** इत्यादि श्लोके किञ्च **'चन्द्रश्चन्द्र एव वराकः'** इत्यत्र च द्वितीयकमलचन्द्रशब्दयोः पूर्णगुणशालितार्थस्य सत्त्वात् प्रतीयमानार्थभेदे सत्यपि प्रक्रमाभेद-निर्वाहायैव द्वयोः शब्दयोः प्रयोगः। **'एवमेव जनस्तस्याः'** इत्यादि पद्य एव चन्द्रबिम्बमिति प्रयोक्तव्ये 'शशिबिम्बम्' इति प्रयुक्तम्। **'एवमुक्तो मन्त्रिमुख्यैः रावणः प्रत्यभाषत।'** इत्यत्र वच्-धातुना प्रक्रमः कृतः, किन्तु भाष्-धातुनोपसंहार इति प्रकृतिप्रक्रमभेदोऽनौचित्यम्। अत्र **प्रत्यभाषत** इति पदस्थाने **प्रत्यवोचत** इति पाठः समुचितः। एवं ह्यत्र विविधोदाहरणप्रत्युदाहरण-सङ्गतिपूर्वकं व्यक्तिविवेके महिमभट्टसम्मतप्रकृतिप्रक्रमभेदानौचित्यं विमृष्ट इत्यलमतिविस्तारेण।

*****

**डॉ. सनन्दनकुमारत्रिपाठी**
सहाचार्यः साहित्यविभागाध्यक्षश्च
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

# ध्वनिविमर्शः

**— डॉ. वेङ्कटरमण. एस्. भट्ट**

समग्रे काव्यप्रपञ्चे ध्वनिकारः आनन्दवर्धनः व्यञ्जनां प्रतिष्ठापयामास। अभिधा–लक्षणा–व्यञ्जना चेति तिस्रः वृत्तयः। अभिधया वृत्त्या वाच्यार्थः मुख्यार्थो वा प्रतीयते। लक्षणया वृत्त्या लक्ष्यार्थस्य प्रतीतिर्जायते। व्यञ्जनावृत्त्या व्यङ्ग्यार्थस्य भानं भवति। अभिधावृत्तौ वाचकः शब्दः इति प्रकीर्तितः। लक्षणावृत्तौ लक्षणिकः शब्दः इति कीर्तितः। व्यञ्जनावृत्तौ व्यञ्जकः शब्दः भणितः। व्यञ्जनामाधृत्यैव काव्यस्य द्वौ भेदौ निरुपितौ। यस्मिन् काव्ये व्यङ्ग्यार्थः प्रधानः तत् काव्यं ध्वनिकाव्यमिति व्यपदिश्यते। तस्मिन् काव्ये अन्येऽपि अर्थाः स्युर्नाम। परन्तु ते सर्वेऽपि अर्थाः गौणाः भवन्ति। अधिकचमत्कारकारित्वं व्यङ्ग्यार्थस्यैव इति हेतुना तत् काव्यं ध्वनिकाव्यमिति व्यवह्रियते। यत्र काव्ये व्यङ्ग्यार्थः गौणः अप्रधानो वा तत् गुणीभूत–व्यङ्ग्यकाव्यमिति व्यवहारः। अनयोः द्वयोः प्रधानाप्रधानत्वकल्पनं व्यङ्ग्यार्थचमत्कारेणैव ज्ञायते। अनयोः व्यञ्जनाव्यापारद्वारैव अन्यार्थः बुध्यते। यदा कवेः अभिप्रायः प्राधान्येन अन्यार्थ–प्रकाशने एव तात्पर्यं तदा ध्वनिकाव्यविषयो भवति। यदि तत्र अन्यार्थः किञ्चिन्यमात्रेण वा शब्दशः कथितो भवति चेत् सः गुणीभूतव्यङ्ग्यकाव्यविषयो भवति। अपि च वाच्यस्योपकारको भूत्वा तस्य चारुत्वस्योत्कर्षे तत्परो भवति चेत् गुणीभूतव्यङ्ग्यकाव्यस्य संज्ञां भजते। गुणीभूत–व्यङ्ग्यकाव्यस्य यदि रसादिदृष्ट्या चिन्तनं क्रियते तत् ध्वनित्वं प्राप्नोति।

आनन्दवर्धनाचार्यः ध्वनिनिरुपणानन्तरं गुणीभूतव्यङ्ग्यकाव्यस्य निरुपणं व्यधासीत्। आनन्दवर्धनाचार्यानन्तरं समागताः मम्मटादय आलङ्कारिकाः ध्वनिकाव्यस्य उत्तमकाव्यत्वसंज्ञां प्रदाय गुणीभूतव्यङ्ग्यकाव्यस्य मध्यमकाव्यत्वसंज्ञां प्राहुः। द्वितीयप्रकारककाव्यस्य विचारात् प्राक् प्रथमप्रकारस्य ध्वनिसंज्ञकस्य काव्यस्य ज्ञानं नितान्तमपेक्षितम्।

यद्यपि काव्यशास्त्रवाङ्मये ध्वनिसम्बद्धः विचारः ध्वनिकारस्य पूर्वमेव समजनि। किन्तु ध्वनिकारस्य पूर्ववर्तिभिराचार्यैः तन्नलक्षितम्। ध्वनिकारः पूर्वप्रकाशितं ध्वनिसम्बद्धं विचारं वैज्ञानिकदृष्ट्या स्वीये ध्वन्यालोकनामके ग्रन्थे प्रास्तौत्। ग्रन्थोऽयं ध्वनिसिद्धान्ते अत्यन्तं प्रामाणिकः इति सर्वैः पुरस्क्रियते।

ध्वनिकारः आनन्दवर्धनः आत्मनः सिद्धान्तं ध्वनिरिति नाम्ना किमर्थं समाह्वयत्? प्रश्नस्यास्य समाधानं ध्वनिकारस्य वचसा एव अस्माभिः ज्ञातव्यम्। तस्य कथनमस्ति यत् वैयाकरणाः श्रूयमाणवर्णानेव ध्वनित्वेनाङ्गीकर्वन्ति। काव्यतत्त्वज्ञाः तान् वर्णान् व्यञ्जकत्वनाम्ना व्यवहृत्य, तेन यः व्यङ्ग्यार्थः प्रकाशितो भवति सः ध्वनिरिति अभिप्रयन्ति। सैव ध्वनिः काव्यस्य प्रधानः अंशः इति तेषामाशयः। श्रूयमाणवर्णानां सम्बन्धे स्फोटसिद्धान्तोऽपि विचार्यते। अतः वैयाकरणानां एषा शब्दविषयकमीमांसा एव आलङ्कारिकाणां ध्वनिसिद्धान्तस्य प्रेरकमिति (पोषकम्)।

व्याकरणशास्त्रस्य स्फोटसम्बद्धः विचारः पाणिनिमहर्षेः पूर्वमेवासीत्। पाणिनिः ''अवङ् स्फोटायनस्य''[१] इति सूत्रे आचार्यस्फोटायनं समसूचयत्। महर्षिः पतञ्जलिरपि महाभाष्ये स्फोटसम्बद्धं विचारमकार्षीत्। परन्तु स्फोटसिद्धान्तस्य विस्तृतं वैज्ञानिकं विवेचनं भर्तृहरिकृत-वाक्यपदीये समुपलभ्यते। श्रूयमाणवर्णानां शब्दार्थयोः विषये परिशील्य स्फोटसिद्धान्तः विचार्यते। श्रूयमाणप्रक्रियायां अंशद्वयं वर्तते।

१. श्रूयमाणवर्णानामुत्पत्तिः २. श्रूयमाणवर्णानां ग्रहणम्

श्रूयमाणवर्णानामुत्पत्तेः चतस्रः अवस्थाः परिगण्यन्ते।

१. परा २. पश्यन्ती ३. मध्यमा ४. वैरवरी

परा अवस्थायां वक्तुः विवक्षा काचित् भवति। पश्यन्ती अवस्थायां वक्तुः अस्याः विवक्षायाः विश्लेषणं जायते। तथा च इच्छायाः शब्दस्वरपं निश्चितं भवति। शब्दसमूहानुसारं उच्चारणावयवेषु श्वासस्य अवरोधादिप्रयत्नानामवस्था भवति मध्यमा। अस्य प्रयत्नस्य फलमेव वैखरी इति कथ्यते। वैरवरी वाक् एव ध्वनिरुपेषु व्यक्ता भवति। वाक्यपदीयकारेण एतेषु अन्तिमत्रयमेव व्याकरणक्षेत्रे स्वीकृतमस्ति।

व्यक्तध्वनयः श्रोतुः पर्यन्तं नादरुपेण गच्छन्ति। एते ध्वनयः तरङ्गरुपेषु प्रसारिताः भवन्ति। कर्णविवरेषु एते प्रविश्य कर्णपटलेषु परिभ्रम्य वर्णरुपेण पुनरुत्पद्यन्ते। वक्ता एकस्मिन् क्षणे एकमेव वर्णमुच्चारयितुं शक्नोति। तेन उच्चारणक्रमानुसारेणैव नादः समुत्पन्नो भवति। अत्र प्रश्नोऽयं समुत्पद्यते यत् नादरुपेण समुत्पन्नस्य शब्दस्य पूर्णतायाः ज्ञानं केन प्रकारेण जायत इति। यतः वर्णानां स्वभावः उच्चारणप्रतिध्वंसत्त्वम्। वर्णः सकृदुत्पन्नो भूत्वा क्षणद्वयं

१. पा.सू. ६.१.१२३।

ISSN - 2231-2129

स्थिरो भवति। पश्चात् स: तिरोहितो भवति। यावत् द्वितीयवर्णस्य तरङ्ग: कर्णविवरं प्राप्नोति तावत् प्रथमवर्णस्य तरङ्ग: तिरोहितो भूत्वा निर्गच्छेत्। अनेन प्रकारेण पूर्ववर्णस्य तरङ्गे तिरोहिते सति परवर्तिवर्णैस्सह तस्य सम्बन्ध: न तिष्ठेत। तदानीं पदस्य स्थिति: न सम्भवति। पदानां पूर्णताया: अभावे अर्थज्ञानं केन प्रकारेण सम्भवेत्? अस्या: समस्याया: समाधानमस्ति स्फोट–सिद्धान्त:। येन शब्देन अर्थ: प्रस्फुटितो भवति स: स्फोट: इति व्यत्पत्तिपरक: अर्थ:। उच्चरितानां वर्णानां नादद्वारा ग्रहणसमनन्तरमेव श्रोतु: स्फोटद्वारा एव पूर्णताया ज्ञानं सिध्यति। श्रोतु: कृते वैरवरी वाक् निमित्तं भवति। स्फोट: अर्थबोधको भवति। अत: स्फोट एव वास्तविक: शब्द: भवति। ध्वनि: तस्य स्फोटस्य गुण: भवति। अनयो: व्यङ्ग्यव्यञ्जकभावसम्बन्ध: वर्तते। ध्वनि: व्यञ्जक: स्फोट: व्यङ्ग्यश्च भवति।

अस्यैव स्फोटसिद्धान्तस्य कल्पनया आलङ्कारिका: स्वीयध्वनिसिद्धान्तस्य विचारं विस्तृतरुपेण प्राचीर्कषन्। अपि च सादृश्यकारणेन स्वीयसिद्धान्तं ध्वनिनाम्ना प्रत्यपीपदन्। आचार्य आनन्दवर्धनानुसारेण यथा — ''ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। व्याकरणमूलत्वात् सर्व–विद्यानां काव्यतत्त्वदर्शिभिर्वाच्यवाचकसम्मिश्र: शब्दात्मा काव्यमिति व्यपदिश्य व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्त:।''[२]

आनन्दवर्धनस्य कथनमिदं लोचनकारै: इत्थमभिहितम् यत् —

(१) नाद: व्यञ्जक:, स्फोट: व्यङ्ग्य:। नादवर्णोऽसौ ध्वनिर्वा उत्पन्न:। अत: स: ध्वनिरुप एवास्ति। यत: स्फोटस्य अभिव्यञ्जक: वर्ण: ध्वनिरिति कथ्यते। तद्वत् प्रतीययान–स्यार्थस्य अभिव्यञ्जक: शब्द: अर्थो वा ध्वनिरिति व्यपदिश्यते।

(२) येन प्रकारेण स्फोटस्यानन्तरम् अनुरणनरुपस्य शब्दस्य ध्वनिरिति व्यपदेश: तथैव वाच्यार्थानन्तरं प्राप्यमाणानुरणनरूपव्यङ्ग्व्यार्थोऽपि ध्वनिरिति कथ्यते।

(३) ध्वनौ रूपद्वयमस्ति प्राकृतवैकृतभेदेन। अनयो: प्राकृतध्वनिरेव स्फोटस्य व्यञ्जको भवति। वैकृतध्वनिस्तु स्फोटस्यानन्तरं जायमानानां द्रुतविलम्बितादि वृत्तीनां जनकोऽस्ति। अनेन प्रकारेण अभिधादिप्रसिद्धशक्तीनामपेक्षया अधिक: व्यापार: य: भवति स: ध्वनि:।

(४) व्यञ्जक: शब्द:, व्यञ्जक: अर्थ:, व्यङ्ग्यार्थ:, व्यञ्जनाव्यापार: इत्येतै समन्वितं काव्यमपि ध्वनिरिति कथ्यते। विषयेऽस्मिन् आचार्यमम्मटस्य कथनमस्माभि: चिन्त्यते यत् — ''बुधै: वैयाकरणै: प्रधानभूतस्फोटरुपव्यङ्ग्यव्यञ्जकस्य ध्वनिरिति व्यवहार: कृत:।

२. ध्वन्यालोके।

ततस्तमतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमं शब्दार्थयुगलस्य।''

यद्यपि एतयोः द्वयोः सिद्धान्तयोः परस्परं विशेषरुपेण सम्बन्धो नास्ति। स्फोटसिद्धान्ते स्फोटनादयोः व्यङ्ग्यव्यञ्जकभावः सम्बन्धः कथितः। समानतायाः कारणेन आलङ्कारिकाः ततः ध्वनिशब्दं स्व्यकार्षुः।

व्यञ्जनाव्यापारः ध्वनिसिद्धान्तस्य प्राणभूतः वरीवर्ति। लोचनकारः ध्वनिव्युत्पत्तौ व्यञ्जनायाः स्थानं प्रबलम् अमन्यत। इयं हि व्यञ्जनावृत्तिः पूर्वाचार्यैः निरुपिता, अभिधादिशक्ति-भ्यः सर्वथा विलक्षणा अपि च रमणीयार्थप्रयोजिका च वर्तति। इयं हि अभिधायाः पश्चात् क्रियान्विता भवति। तथापि इयं काव्यस्य प्रधाना वृत्तिरिति परिगण्यते। यतः काव्यगतं समग्रं सौन्दर्यं अस्यामेव वृत्तौ निगूहितं विद्यते।

शाब्दव्यवहारे व्यञ्जनाव्यापारस्य कल्पना वैयाकरणैरेव बाहुल्येन कृता अस्ति। ध्वन्या अभिव्यक्तस्फोटविषये व्यञ्जक-व्यङ्ग्यभावस्य कल्पना तैरेव कृता। काव्यतत्त्वमर्मज्ञाः ततः एव व्यञ्जकत्वमङ्गीकृत्य एकं विलक्षणं शब्दव्यापारं प्रतिष्ठापितवन्तः। स च विषयः काव्यात्म-भूततत्वस्य ध्वनेः प्रयोजकहेतुरभवत्।

काव्यप्रपञ्चे व्यञ्जनाव्यापारस्य प्रधानं स्थानं मन्यमानेषु आचार्येषु आनन्दवर्धनाचार्यः मूर्धन्यं स्थानं भजते। अन्येषामाचार्याणां विषयेऽस्मिन् विप्रतिपत्तिः इति तु नास्ति परन्तु ते च व्यञ्जना, ध्वनिः इत्यादिशब्दानां प्रयोगं न कृतवन्तः इत्येव।

इत्थं काव्यजगति ध्वनिकाव्यस्य स्थानम् अत्युकृष्टं मन्यते। व्यञ्जनया वृत्त्या प्रतीयमानः अर्थः व्यङ्ग्यार्थः। स एव ध्वनिरिति अन्ततो गत्वा विचारः। अनया वृत्त्या यश्च अर्थः प्रतीयते तेन अधिकः चमत्कारः जायते।

**परिशीलतग्रन्थाः —**

१. ध्वन्यालोकः। २. साहित्यदर्पणः। ३. काव्यप्रकाशः।
४. वाक्यपदीयम्। ५. कुवलयानन्दः।

*****

**डॉ. वेङ्कटरमण. एस्. भट्ट**
सहाचार्यः, शिक्षाशास्त्रविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

# वेदेषु भक्तितत्त्वम्

**— डॉ. धर्मेन्द्रकुमारसिंहदेवः**

**उपक्रमः**

भक्तिर्नाम भारतीयसंस्कृतेः स्वर्वस्वम्। भारतीयं साहित्यं भक्तिप्रभावेण सर्वथा सम्पूर्णम्। भक्तिर्हि मानसी भावना। श्रद्धापूर्वकं सेवासेवनेच्छा वा भक्तिरिति। भक्तिशब्दो हि 'भजसेवायाम्' धातोर्निष्पद्यत॥ उक्तंहि —

**'भज इत्येष वै धातुः सेवायां परिकीर्तितः।**
**तस्मात्सेवाबुधैः प्रोक्ता भक्तिः साधनभूयसी॥'**[१]

राजस्वामिप्रभृतीनां सेवकैरपि सेवा तु वेतनादिहेतुना क्रियते, परन्तु तत्र श्रद्धाऽभावाद्र-भक्तित्वम्। तस्माच्छद्धापूर्विका सेवाभावना वा भक्तिरिति। साचेयं मातृपितृगुरुदेवदेशप्रभृतिषु तत्तन्नाम्नाव्यपदिश्यते यथा मातृभक्तिः पितृभक्तिः गुरुभक्तिः देवभक्तिः देशभक्तिश्चेत्यादिना। यदा च साशील-शक्त्यादिसर्वगुणागारे भगवतिप्रयुज्यते तदाभगवद्भक्तिरित्याख्यायत॥

किं नाम भक्तेः स्वरूपम् इति जिज्ञायामुच्यते शाण्डिल्यभक्तिसूत्रे —

अथातो भक्तिजिज्ञासा॥ **सा पराऽनुरक्तिरीश्वरे॥** तत्संस्थस्यामृतत्वोपदेशात्॥[२]

अपि च भक्तेः स्वरूपं यथोक्तं नारदभक्तिसूत्रे —

अथातो भक्तिं व्याख्यास्यामः॥ **सा त्वस्मिन् परमप्रेमरूपा॥** अमृतरूपा च॥[३]

तथा चोक्तम् —

---

१. भक्तिसन्दर्भोद्धृतंगरुडपुराणवाक्यम्।
२. शाण्डिल्यभक्तिसूत्रम्, १.१.१-३।
३. नारदभक्तिसूत्रम्, १-३।

श्रीकृष्णविषया उत्तमा भक्तिः रत्यपरपर्याया स्थायिरूपा सती विभावादिभिः संवलिताः भक्तिरसरूपतां समवगाहते। उच्यते श्रीरूपगोस्वामिपादैः —

**विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।**
**स्वाद्यत्वं हृतिः भक्तानामानीता श्रवणादभिः।**
**एषा कृष्णरति स्थायीभावो भक्तिरसो भवेत्।।**[४] इति।

**पृष्ठभूमिः**

एषा भक्तिः त्रिविधा नवधा विविधा वेति परम्परासु प्रोक्ता। त्रिविधा विविधा वेति यथोक्तं पद्मपुराणे —

**विविधा भक्तिरुद्दिष्टा मनोवाक्कायसम्भवा।**
**लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा।।**
**ध्यानधारणया बुद्ध्या वेदानां स्मरणेन च।**
**विष्णुप्रीतिकरी चैषा मानसी भक्तिरुज्यते।।**
**वेदमन्त्रसमुच्चारैरविश्रान्तं दिवानिशम्।**
**जपैश्चारण्यकैश्चैव वाचिकी भक्तिरिष्यते।।**
**व्रतोपवासनियमैः पञ्चेद्रियजयेन च।**
**कायिकी भक्तिरुद्दिष्टा सर्वसिद्धिविधायिनी।।**
**पाद्यार्घ्याद्युपचारैश्च नृत्यवादित्ररीतकैः।**
**वलिभिर्जागरार्चाभिर्लौकिकी भक्तिरीरिता।।**
**गग्यजुःसामजप्यैश्च संहिताध्ययनादिभिः।**
**हविर्होमक्रियाभिश्च या भक्तिः सा तु वैदिकी।।**[५]

तथा च नवधा भक्तिस्तु भक्तिग्रन्थेषु जेगीयते। तथा हि –

**श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।**

४. उज्ज्वलनीलमणौ।
५. पद्मपुराणम्, ४.८५.४-९।

**इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा॥**[6]

किञ्च भक्तिः पुनरपि क्वचित् सगुणा निर्गुणा इत्यभिहिता। किं बहुना, श्रीव्यासदेवेन मानवानां कल्याणाय त्रिविधा योगाः भागवते प्रोक्ताः। यथा–

**योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।**

**ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्॥**

(भागवतम्, ११.२०.६)

अपि च श्रीमद्भगवद्गीतायां भक्तेः भक्तस्य वा चतुर्विधत्वम् उक्तम्। तथाहि –

**चतुर्विधा भजन्ते मां जनाः सुकृतियोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥**
**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥**[7]

एवं भक्तिः क्वचित् साधनरूपा क्वचिच्च साध्यरूपापि समाख्याता। तत्सर्वं तत्तद्ग्रन्थेषु बहु चर्चिता। अत्र वेदेषु भक्तितत्त्वस्य उद्गमम् अधिकृत्य किञ्चिद् विविज्यते।

**विषयप्रवेशः**

वेद एव सर्वेषां भारतीयज्ञानानां धर्माणां च मूलं विद्यते। जगति नास्ति यज्ज्ञानं यस्य वेदेषु बीजत्वेन सत्ता नास्ति। इदं स्पष्टं वैदिकवाङ्मयस्यावलोकनाद्यन्नकेवलं वेदाः कर्मप्रचारकाः, अपितु त एव भक्तेरप्युत्पत्तिस्थानम्। इदं सत्यं यत्संहितासु ब्राह्मणग्रन्थेषु चानुरक्तिसूचक-भक्तिशब्दस्या सद्भावो वर्तते, किन्तु तत्र भक्तेर्विषयास्तु पर्याप्तरूपेण लभ्यन्ते। संहितासु ब्राह्मणग्रन्थेषु च कर्मकाण्डविषया बाहुल्येन वर्तन्ते, किन्तु भक्तेरपिस्फुट आभासो वर्तत एव। मन्त्रेषु देवानां स्तुतिरतीवमार्मिकरूपेण कृता वर्तते। स्तुतीनां दर्शनेनस्तोतृणां हृदयेऽनुरागस्य सद्भाव आसीदिति प्रतीयते। हृदये भक्तेरभावे एतादृशीनां कोमलानां भावप्रवणानाञ्चस्तुतीनामुद्गम एव भवितुं नार्हतीति निश्चप्रचम्। शुष्कनीरसहृदयेनैतादृशी कोमलता भावुकता च सम्भाव्यते।

६. भागवतम्, ७.५.२३-२४।
७. गीता, ७.१६-१७।

देवानां स्तवनकालेस्तोत्रेगषिस्तैः सह माता, पिता, बन्धुरित्यादिकं नानाप्रकारकं सम्बन्धं स्थापयति। अतः स्पष्टमेव यत्स्तोतृणां हृदये देवान्प्रति सर्वतो भावेन प्रेमानुरागश्च वर्तते।

**विषयविमर्शः**

इदं च तथ्यं स्तुतीनामुदाहरणे न स्फुटी भवति। तथाहि – यज्ञेष्वग्निः प्रधानदेवो भवति। तेनैव यज्ञानां सम्पादनं भवति। यद्यपि प्रत्यक्षतया इदमनुमीयते यत्कर्मकाण्ड-सम्बद्ध-देवस्य विषये भक्तेरभावो भविष्यति, किन्त्ववलोक्यते यत्तस्य विषयेऽपि भावप्रवणास्तुतयोवर्तन्ते। स तु न केवलं विपत्तिभ्यस्त्राता वर्णितः, अपितु मातृ-पितृ-इत्यादिरूपेणापि तस्य वर्णनं वर्तते। यथा हि अग्निदेवगङ्मन्त्रे वर्णितः –

**त्वां वर्धन्तिक्षितयः पृथिव्यां**
**त्वां राय उभयासो जनानाम्।**
**त्वां त्राता तरणे चेत्योभूः**
**पिता माता सदमिन्मानुषाणाम्॥**[८]

य ऋषिरग्निदेवं पितृरूपेण मातृरूपेण च वर्णयति, तस्य हृदये भक्तिभावनाऽवश्य-मेवासीत्।

**भक्तिभावः**

वैदिकदेवेषु इन्द्रः शौर्यस्य प्रतीकः। दस्यूनां दमने मनुष्यास्तस्य साहाय्यं कामयन्ते। तस्यानुकम्पया आर्याः शत्रून्विध्वंसयितुं समर्था भवन्ति। शौर्यप्रधानेन इन्द्रेण सहानुरागसम्बन्धस्या भावोऽनुमीयते, किन्तु तेन सहापि स्निग्धानुरागसम्बन्धः स्थापितोवैदिकैः ऋषिभिः। इन्द्रस्तु न केवलं पिता, अपितु माताऽपि वर्णितः –

**त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ।**
**अथते सुम्नमीमहे।**[९]

इन्द्रस्तु न केवलमुपासकानां सखा पिता वा, अपितु पितृणांमपि श्रेष्ठतमः –

---

८. ऋ. ६।१।५।
९. ऋग्वेद, ८।९८।११।

**सखा पिता पितृतमः पितृणां कर्तेमु लोकमुशते वयोधाः।**[१०]

इन्द्रदेवस्तु मित्रतायाः सहृदयताया मातृत्वस्य चावासभूमिः। को नाम मनुष्यो य एतावन्तं गुणिनं न कामयेत? तथाहि –

**को नानाम वचसा सोम्याय**
**मनायुर्वा भवति वस्त उस्राः।**
**क इन्द्रस्य युज्यं कः सखित्वं**
**को भ्रात्रं वष्टि कवये क ऊती॥**[११]

एषु मन्त्रेषु भक्ति भावस्तु सुतरां स्फुटो वर्तते।

वरुणसूक्तेषु भक्तिभावनायाः उपलब्धतासर्वाधिक्यं भवति। वैदिकदेवेषु वरुणस्य स्थानं महत्वपूर्णं वर्तते। स तु सर्वत्र पश्यति (विश्वतश्चक्षुः), स धृतव्रतः, सुक्रतुः, सम्राट् चास्ति। स सर्वज्ञः, स्तोतृणां मते वरुणः करुणाया आस्पदभूतः। स अपराधिभ्यो दण्डं प्रयच्छति। स तस्य नियामको निर्माता च। स्तोता ऋषिरपराधक्षमापनार्थ मङ्लप्रदानार्थ च प्रार्थयते –

**य आपिर्नित्यं वरुणः प्रियः सन्**
**त्वामागांसि कृणवत्सखा ते।**
**मा त एनस्वन्तो यक्षिन्भुजेम**
**यन्धिष्माविप्रः स्तुवते वरूथम्॥**[१२]

इत्थं तु तटस्थ रूपेणोपलब्धानां भक्तिमन्त्राणां निदर्शनम्।

**भक्तितत्त्वम्**

प्राचीनाचार्याणां मतानुसारेण साक्षाद् रूपेणापि भक्तितत्त्वस्य समर्थनमुपलभ्यते मन्त्रेषु। यथा शाण्डिल्य भक्तिसूत्रे वक्ति स्वयं शाण्डिल्य ऋषिः–

---

१०. ऋग्वेद, ४।१७।१७।
११. ऋग्वेद, ४।२५।२।
१२. ऋग्वेद, ७८८।६।

**भक्तिः प्रमेयाश्रुतिभ्यः**[१३]

श्रुतिभ्यो भक्तेरवगमो भवति। अस्य सूत्रस्य व्याख्यायां टीकाकर्त्रा नारायणतीर्थेन–भक्तेर्नवविधप्रकारस्य समर्थकानां मन्त्राणां सव्याख्यानमुद्धरणं प्रस्तुतम्। अत्र केषाञ्चिदुद्धरणं प्रस्तूयते। तत्र

**नामस्मरणम् —**

**तमु स्तोतारः पूर्व्यं यथाविद**
**गतस्य गर्भं जनुषा पिपर्तन।**
**आस्य जानन्तो नाम चिद्विविक्तन**
**महस्ते विष्णो सुमतिं भजामहे॥**[१४]

अस्य मन्त्रस्यायमाशयः–स्वमत्यनुरूपं जगतः कारणभूतस्य विष्णोः स्तवनं कुरु। स वेदान्त वाक्यानां (गतस्य) प्रतिपाद्यः। तस्य स्तुत्या जन्म प्राप्तिर्न भवति। स्तुत्यभावे तस्य नामसङ्कीर्तनं कुरु। वयं विष्णोस्तेजसो गुणातीतरूपस्य च सेवनं कुर्म। अस्मिन्मन्त्रे भगवत्स्तुतिर्नाम स्मरणं च निर्दिष्टं वर्तते।

**श्रवणं कीर्तनं भगवदर्पणं च —**

**यः पूर्वाय वेधसे नवीयसे**
**सुमज्जानये विष्णवे ददाशति।**
**यो जातमस्य महतोमहिं ब्रुवत्**
**सेदु श्रवोभिर्युज्यं चिदभ्यसत्॥**[१५]

अर्थात् यः प्राचीनतमाय नित्यनूतनाय सृष्टिकर्त्रे स्वयमुत्पन्नाय विष्णवे द्रव्यं स्वात्मानं चार्पयति, यो महतो विष्णो महनीयकर्मणां कीर्तनं करोति स दाता स्तोत्र वा कीर्त्या अन्नेन वा युक्तः सन्परमपदं प्राप्नोति। अत्र तु श्रवणं कीर्तनं भगवदर्पणं च स्पष्टं निदिष्टं वर्तते।

---

१३. शाण्डिल्यभक्तिसूत्रे १।२।९।
१४. ऋग्वेद, १।१५६।३।
१५. ऋग्वेद, १।१५६।२।

तथा च ब्राह्मणग्रन्थेषु उपासनायां भक्तेः स्वरूपं बद्धमूलं दृश्यते। यद्यपि ब्राह्मणग्रन्थेषु कर्मणः प्राधान्यम्, तथापि श्रद्धायुक्ता भक्तिरपि स्पष्टतरा दृश्यते। आरण्यकेषु बहिर्यागानामपेक्षया अन्तर्यागस्य महत्त्वं प्रदर्शितं वर्तते। अस्मिन्समये तु योगस्यापि प्रचार आसीत्। साधकानां चित्तं तु भक्तिं प्रत्युन्मुखमासीत्। उपनिषदस्तु ज्ञाननि दर्शका भूताः, किन्तु तासु अपि भक्तनिदर्शनं प्राप्यते।

**अनुग्रहः —**

कठोपनिषदि तु भक्ति भावस्य स्पष्टं वर्णनमुपलभ्यते। आत्मोपलब्धेरुपायान्दर्शयन्ती श्रुतिः कथयति —

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा वृणुते तनूं स्वाम्॥**[१६]

अर्थात् अयमात्मा वेदाध्ययनेन, धारणाशक्त्या, श्रवणेन चापि नोपलभ्यते। अयं साधको यमात्मानं वरयति तेनैवात्मना एष प्राप्तव्यः। तं प्रति एष आत्मा स्वां तनुं विवृणुते। भावस्त्वयं यदात्मनैवात्मोपलभ्यते। अस्मिन्मन्त्रेऽनुग्रहस्य निर्देशोवर्तते।

**प्रसादः —**

अपरस्मिन्मन्त्रे तु प्रसादस्य स्पष्ट निर्देशोऽस्ति। यथा —

**तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥**[१७]

अर्थाद्विष्कामः पुरुषोजगत्कर्तुः प्रसादेन स्वात्मनो महिमानं पश्यति गतमन्युश्च भवति।

श्वेताश्वतरोपनिषदि वर्णितं यत्तप इत्यादि प्रभावातिरिक्तं देव प्रसादेनापि श्वेताश्वतर ऋषिः सिद्धिं प्राप्तवानिति (३।२१)। अत्र भक्तेः प्रथमतया स्पष्टं प्रतिपादनं प्राप्यते —

१६. कठ, १।२।२३।
१७. क. १।२।२०।

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥**[१८]

यस्य नरस्य देवे उत्कृष्टा भक्तिर्भवति तथा देववदेव गुर्वपिभक्तिर्भवेत्, तमेव महात्मानम् इमे उक्ता अर्थाः स्पष्टमवभासन्ते। उपनिषत्सु तु भक्तिशब्दस्यायं प्रथमो नामतः प्रयोगो वर्तते।

वैष्णवमते तु भक्तेरपेक्षया प्रपत्तेर्महत्त्वमधिकं वर्तते। प्रपत्तौ तु भगवान् एवोपेय उपायश्च वर्तते। भक्तो भगवन्तं शरणं गच्छेत्। शरणापन्नं भक्तं भगवानुद्धरति। अस्य प्रपत्तिसिद्धान्तस्य प्रतिपादनं श्वेताश्वतररोपनिषदीत्थम् —

**यो ब्रह्माणं विदधाति पूर्वं**
**यो वेदांश्च प्रहिणोति तस्मै।**
**तं ह देवमात्मबुद्धिप्रकाशं**
**मुमुक्षुर्वै शरणमहं प्रपद्ये॥**[१९]

अस्मिन्मन्त्रे ब्रह्मणस्तत्कारणभूतस्य वेदस्य चोत्पादकस्य भगवतः शरणं प्रापणीयमिति वर्णितम्। श्रीमद्भगवद्गीता तु वैष्णवानां सर्वश्रेष्ठो ग्रन्थः, अस्मिन्विषये गीतापि कठोपनिषदः श्वेताश्वतरोपनिषदश्चानुयायिनी। इत्थं दृश्यते यद्भक्तिसिद्धान्तो वैदिकः। सत्यकामस्य सत्य-सङ्कल्पस्य च ब्रह्मणः प्रसादे नैव साधको भौतिकक्लेशेभ्यो मुक्तो भवति।

उपनिषदो नाना मन्त्राणां सारो वेदस्तुतेरस्मिन्पद्ये उपलभ्यते –

**विजितहृषीकवायुभिरदान्तमनस्तुरगं**
**य इह यतन्ति यन्तुमतिलोलमुपायंरिवदः।**
**व्यसनशतान्विताः समवहायगुरोश्चरणं**
**वणिज इवाज सन्त्यकृतकर्णधराजलधौ॥**[२०]

श्रीमद्भागवत महापुराणे भक्तेर्विवेचनं वैशद्येन वर्तते। नवधाभक्तेः विवेचनं तु प्रसिद्धमेवास्ति।

---

१८. श्वेता. ६।२१।
१९. श्वेता. ६।१८।
२०. भागवतम्, १०।८७।३३।

 ISSN - 2231-2129

**उपसंहारः**

अयमेव उपसंहारो यद् ज्ञानकर्मसिद्धान्तवद्भक्तिसिद्धान्तोऽपि वैदिकसंहितायां स्फुटं बीजवन्निर्दिष्टो विलसति। तत्र च बहुविधो भक्तियोग: विद्यते। मानवानां स्वभावानुगुणेन भक्तिभावो भिद्यते। यथा चोक्तं भक्तिचिन्द्रकायाम् —

**भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते।**
**स्वभावगुणमार्गेण पुंसां भावो हि भिद्यते॥**[२१]

किं च श्रीमद्भगवद्गीतायामपि भक्तियोगो विशिष्यते। अपि च भक्तिसिद्धान्त: गीतायाम् उक्तम् —

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी॥**[२२]

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते॥**[२३]

किं बहुना, लोकेऽस्मिन् नवधा भक्ते: नव आदर्शभूता: सत्पुरुषा: प्रथन्ते। तथा हि—

**श्रीविष्णोः श्रवणे परीक्षिदभवद् वैयासकि कीर्तने**
**प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजन॥**
**अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः**
**सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परम्॥**[२४]

वेदस्य सर्वसां विद्यानां मूलत्वं यथोक्तं महाभारते —

**सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम्।**
**वेदे निष्ठा हि सर्वस्य यद् यदस्ति च नास्ति च॥**[२५]

---

२१. शाण्डिल्यभक्तिसूत्रम्, टीका, १.१.१।
२२. गीता. १०.१३।
२३. गीता. १४.२६।
२४. इति कल्याण्यम्, ६६०।
२५. शा. महाभारतम्, २७०.४३।

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥**[२६]

अत एव भक्तेर्नूनं वैदिकत्वम् इति वेदितव्यम्। इति दिक् ॥

*****

**डॉ. धर्मेन्द्रकुमारसिंहदेवः**
सहायकाचार्यः, साहित्यविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

२६. महाभारतम्, १२.२३३.२४।

# वैदिकसाहित्ये काव्यतत्त्वोन्मेषः

— डॉ. अजयकुमारमिश्रः

इदं सत्यमस्ति यत् – वेदोऽखिलं जगत् सर्वम्। उपजीव्यमहाकाव्ये महाभारतेऽपि उद्घोषयति —

**अनादिनिधनानित्या वागुत्सृष्टास्वयंभुवा।**
**आदौ वेदमयी दिव्याः यतः सर्वाः प्रवृत्तयः॥**[१]

अस्मिन् प्रसङ्गे वैदिकवाङ्मयस्य भाषामाहात्म्यदृष्ट्या इदमपि कथनं ध्यातव्यम् — "भाषात्मकदृष्ट्याविविधज्ञान–विज्ञानसमन्विता वैदिकसंहिताया एव भाषा। वेदभाषा सर्वप्राचीनतमा भाषा विद्यते यस्याः सर्वा भारोपीयभाषाः निर्गता विद्यन्ते। अन्यासां भाषाणामुपरि वैदिकभाषायाः प्रभावोऽपि नितरामत्यधिको दृश्यते। भाषावैज्ञानिकदृष्ट्या परीक्षणेन प्राप्यते यत् समग्राः भाषा वैदिकभाषातो निर्गता व्युत्पन्नाः प्रभाविताः सन्ति। वैदिकभाषायाः प्राचीनत्वाद् भारोपीयभाषाः व्यतिरिक्ताः अपि भाषाः वैदिकभाषया प्रभाविता विद्यन्ते।[२]" सामान्यतः अन्वेषकाः वैदिकसाहित्यस्य भाषाशास्त्रीयदृष्ट्या अनुसन्धानं तु कुर्वन्ति, परन्तु अस्य साहित्य–शास्त्रमधिकृत्य तत्त्वानां कृते गभीराध्ययनाध्यापनं प्रति नाधिकं श्रमशीलाः दृश्यन्ते। साहित्यं समाजस्य दर्पणः मन्यते। तर्हि वैदिकवाङ्मयस्य लोकानां मध्ये संवर्द्धनाय अस्य साहित्य–शास्त्रीयतत्त्वानां विपुलतयाऽवश्यकत्वं प्रतीयते। साहित्येऽस्मिन् न केवलं पारम्परिकस्य संस्कृत–वाङ्मयस्य गाथा, अपितु साहित्यरुपेण लोकसाहित्यस्य प्रचुराणि तत्त्वानि संन्निहतानि सन्ति। अतः साम्प्रतिके विश्वसाहित्ययुगे दलितसाहित्यस्य पठनपाठनाय वैदिकगाथाकाव्यमाहात्त्म्यस्य चर्चा सर्वथा अपेक्षते। तथैव साहित्येन सह वैदिक वाङ्मयस्य कीदृशः संबंधः भवेदिति अन्वेषणस्य विषयः।

---

१. शान्तिपर्वः २५३।

२. भाषासु वेदानां प्रभाव प्रविधयश्च डॉ. रामाशीष पाण्डेयः, वेदभारती, पृ. १३, संपादकः गोकुलेन्द्रनारायणदेव – गोस्वामी, प्रकाशप्रकाशकः, दिल्ली २०१७।

वेदस्य अध्ययनाध्यापनमन्तरेण भारतीयज्ञान-विज्ञानपरम्परा तु, सर्वथा अपूर्णा मन्यते। तत्कारणात् अस्माकं सर्वासु शास्त्रविधासु वैदिकतत्त्वानामन्वेषणं सर्वथा गभीररुपेण अपेक्ष्यते। यतोहि भारतीयसाहित्यस्य नवोन्मेषशालिनां तत्त्वानामन्वेषणाय सार्थकोद्यमाः कर्तव्याः। यद्यपि प्रारम्भिककाले निरुक्तशास्त्रेऽपि काव्यस्य सौन्दर्यशालिना योजनामधिकृत्य अनेकानि तत्त्वानि विलसन्ति। परन्तु विषयोऽयमधिकृत्य आधुनिकगवेषणायां नाधिका चर्चा दृश्यते। ऐतेषु क्षेत्रेषु जे. खोण्डा[३]-माइणकर[४]-एन्.जे. शिंदे[५]-राधावल्लभत्रिपाठी[६]-अभिराजराजेन्द्रमिश्रादयः आचार्याः विशेषावदानं दत्तवन्तः सन्ति। मातृदत्तत्रिवेदी अपि अथर्ववेदः, एकं साहित्यिकमध्ययनमिति नाम्नि ग्रन्थे अस्मिन् विषये चर्चां करोति।

रङ्गमञ्चमधिकृत्य विश्वस्य प्राचीनतमः ग्रन्थः आचार्य भरतस्य नाट्यशास्त्रमपि वेदानामहत्त्वं प्रतिप्रादयति —

**जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।**
**यजुर्वेदाद् रसानामथर्वणादपि॥**[७]

अत एव रूपकस्य (नाटकस्य) कथावस्तु-सङ्गीत-यज्ञ-भाग-रसादि वेदामवलम्य निःसरति। वस्तुतः वैदिकसाहित्यं न केवलं भारतीयसांस्कृतिकजनजीवनस्य अपितु साहित्यस्यापि मूलम्। यद्यपि साहित्यशास्त्रममर्ज्ञः आचार्यः व्रजमोहनचतुर्वेदी अपि मन्यते येन उपरि सन्दर्भिते वैदिकमन्त्रे अथर्वप्रसङ्गेरसशब्दस्य अभिप्रायः प्रकटितः। परन्तु यथा अथर्ववेदः सर्वेषां रसानां मूलं भवति। अतः अस्य शब्दस्य व्याख्या करणीया। गीतस्य उत्सः तु सामवेदः। साहित्ये, विशेषतया प्रयोगसाहित्ये अधिकं महत्त्वं वर्तते। अतः साहित्यतत्त्वानि अवलोकनाय सामवेदस्यः प्रसङ्ग श्लाघ्यः। यजुर्वेदे ऋत्विजाः स्वार्चनावन्दनामाध्यमेन देवतानामावाहनं कुर्वन्ति यस्मिन् प्रसङ्गे चतुर्विधाभिनयेषु विशेषतः वाचिकाङ्गिकाभिनयोः समारोपणं भवति। इत्थं रूपकसाहित्ये यजुर्वेदस्य महत्त्वं सिद्ध्यति। सर्वे जानन्ति अस्मिन् वेदे आध्वर्युकर्मणः प्रामुख्यं भवति। अभिनयस्य च प्राधान्यं वर्तते। अभिनयेऽस्मिन् नाटकवत् आङ्गिकोत्क्षेपणावक्षेपणानां

३. Stylistic Repetition in the Reg. Veda.
४. Some Poetical Aspects of the Rigwedic Repetitions.
५. Kavi and Kavya in the Atharwaveda.
६. संस्कृत साहित्य का समग्र इतिहास, प्रो. राधावल्लभ त्रिपाठी, न्यू भारतीय बुक कार्पोरेशन, दिल्ली २०१८।
७. १/१७।

कृते अधिकाधिकावकाशाः भवन्ति। वस्तुतः रूपकस्य विषये उक्तिरस्ति-**गीतं प्राणाः प्रयोगस्य**। एवं नाटके रूपके वा गीतं विना लेशमात्रमपि सद्गतिः न प्रतीयते। यतो हि साहित्यं विधायाः कृते उपस्कुरुते।

परन्तु एका अपरा मान्यता अपि अस्ति यत् वैदिककाव्ये तु मुक्तकात्मककाव्यानां प्राधान्यं भवति। तस्मिन् साहित्ये इतिवृत्तस्य (छन्दः) विधानं कथं संभविष्यति? कोऽपि मन्यते वेदेषु आलम्बनोद्दीप्पनविभावानामपि अभावः भवति तर्हि वैदिककाव्ये हंसः कथं सञ्चरिष्यति? परन्तु महाकविकालिदासस्य मेघदूते यक्षस्य चर्चा 'केनचिद्' रुपेण आगच्छति। परन्तु अस्मिन् खण्डकाव्ये यक्षस्य सद्यः नामकरणसंस्काराभावं विना अपि शृङ्गाररसस्य उत्प्लावनं सहृदयान् पौनः पुन्येन आनन्दयति। अस्मिन् प्रसङ्गे चर्चितरसवादिन आचार्यस्य भट्टनायकस्य साधारणीकरणाख्यः सिद्धान्तः अपि अवलोकनीयः यस्मिन् वादे नटीनटयोः विनाऽपि रसः अनुभूयते।

सामान्तया वैदिकवाङ्मयस्य चर्चा तु धार्मिकाध्यात्मिकदृष्ट्या अधिका भवति। परन्तु वैदिकसाहित्ये न केवलं शान्तवीरशृङ्गाराश्च चित्तं हरन्ति, अपितु शृंगारस्य वियोगः अपि हृदयं क्लेद्यति। उर्वशीपुरुरवसोः सत्यपि समीपे परस्परं मेलनं कर्तुं न शक्यते। प्रणयप्रसङ्गोऽयम् हृदयमनोरथं कथं विदायति यस्य प्रभावः साम्प्रतिके संस्कृत-हिन्दीभाषयाः उर्दूभाषया वा रचितेषु काव्येषु साक्षात् दरीदृश्यते —

**उदपप्तम वसतेर्वयो यथा रिणन्त्वा भृगवो मन्यमानाः।**
**पुरूरवः! पुनरस्तं परेहि याने मनो देवजनाः अयान्तस्युः॥**[८]

कालिदासोऽपि मेघदूते यक्षस्य वैकल्व्यमधिकृत्य वर्णयति —

**त्वामालिख्य प्रणयकुपितां धातुदात्रैः शिलाया-**
**मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।**
**अस्रैस्तापन्मुदुरूपचितैदृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते सङ्गमेनौ कृतान्तः॥**[९]

---

८. ऋग्वेद खिल, ३-१९.१।
९. मेघदूतम्, उत्तरमेघ - ४५।

यद्यपि उभयोः श्लोकयोः सन्दर्भः समानः। परन्तु दुर्भाग्यवशात् यक्षस्य स्वकान्तया सह मेलनं चित्रकल्पनायामपि न सम्भावयति। सः पुनः पुनः स्वकान्तायाः चित्रं पाषाणे निर्माति परन्तु विरहावस्थावशात् तस्य अजस्रासुधारा तस्य प्रिययाः चित्तं अपमार्जयति। सः कृतान्तं अर्थात् यमराजं भर्त्सयति। यथा अभिज्ञानशाकुन्तले दुष्यन्तः कामदेवं प्रति भर्त्सनां करोति —

**तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-**
**र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु।**
**विसृजति हिमगर्भैरग्निमिन्दुमयूखै-**
**स्त्वमपि कुसुमवाणान्वज्रसारीकरोषि॥**[१०]

यद्यपि श्लोकेऽस्मिन् शीतरश्मित्वं - इन्दुः कुसुमशरत्वं-कुसुमवाणान् इत्यादयः शब्दगुच्छाः पददोषरूपेण प्रतीयन्ते। परन्तु दुष्यन्तस्य विरहोन्मदावस्थाकारणे दोषः भूत्वाऽपि विप्रलम्भशृङ्गारमधिकं समुज्ज्वलयति। बहुचर्चितटीकाकारः मल्लिनाथः मेघदूतोपजीव्यविषये रामायाधृतमतं करोति — सीतां प्रति रामस्य हनुमत्सन्देशं मनसि निधाय गद्यसन्देशं कविः कृतवानित्याहुः। वस्तुतः अनेकेषु स्थलेषु मेघदूतस्य रामायणशैल्या सह नैकट्यम् प्रतीयते। परन्तु दूतकाव्यस्य जगति वैदिकमतेमऽपि पटाक्षेपणपेक्षयते। यत्र रागः-दूतकाव्यस्य बीजतत्त्वं-शौनकमुनि प्रणीतबृहद्देवताग्रन्थेऽपि परिलक्ष्यते।[११] अस्मिन् आख्याने अत्रिमुनेः पौत्रः श्यावाथ्यः स्वमन्त्रशक्तिप्रशंसामधिकृत्य रात्रिं सन्देशवाहिकां नियोज्य स्वरागसन्देशं राजर्षि दार्म्य रथविनिऋषेः लावण्यकान्यां प्रति प्रेषितवान्।

अथर्ववेदेऽपि शृङ्गारसंयोगस्य मनोरमं वर्णनम् अस्ति। एका नवदम्पतिः स्वमधुमय-नयनानाम् कृते कामयते। सा कान्ता स्वललाटे अनीकस्य प्रदीपं अभिलषति एवं चर्चितं एकीकृताय अनुरोधयति —

**अक्ष्यौ नौ मधुसंकाशे अनीकं नौ समञ्जनम्।**
**अन्तः कृणुष्व मां हृदि मन इन्नौ सहामति॥**[१२]

१०. कालिदासः, अभिज्ञानशाकुन्तलम् ३/३।
११. ५/५०-८०।
१२. अर्थवेद ७.३६.१।

एकत्र अन्यस्मिन् प्रसङ्गे, नायिका तु स्वनायकं वाससा (स्त्रीलज्जावस्त्रम् अर्थात् ओढनी) निगूढयितुं वाञ्छति —

**अभित्वा मनुजातेन दधामि मम वाससा।**
**यशसो मम केवलो नान्यासा कीर्तयाश्चन॥**[१३]

मन्त्रोयं साम्प्रतिके संस्कृतगज्जलिकायाः बीजतत्त्वरूपेण प्रतिभाति। यस्मिन् न्यूनशब्दैः अधिकभावान् भावयन्ति। वेदेषु अभिनव-मेटाफोर सामान्यजनजीवनाय अपि लसन्ति। वेदः यथा प्राचीनतमः तथैव आधुनिक। वैदिकवाङ्मये 'गाथा' रूपेण लोककाव्यस्य बहूनि तत्त्वानि संग्रथितानि सन्ति। गाथाविविधप्रकाराः भवन्तीति प्रमाणीकरोति —

**रैभ्यासीदनुदेयी नाराशंसी न्योचनी।**
**सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम्॥**[१४]

नाराशंसीनामात्मिका गाथा मनुष्याणां कृते श्लाघनीया भवति। पाश्चात्यप्राच्यविद् विण्टरनित्सः मन्यते यत् शौर्यकाव्यस्योपजीव्या साहित्यगाथा एव दृश्यते। श्रौतयाग - गृहानुष्ठानेऽपि गाथागीतस्य विधानं प्रचुरमासीत्। आधुनिकसाहित्ये लोकशैलीं प्रचाराय वर्धनाय च वैदिकगाथायाः महनीय योगदानं वर्तते यस्य सम्यक् सामग्रीपाठनाय जे.एम. चटर्जी महोदयस्य ग्रन्थः अवलोकनीयः[१५]। वस्तुतः वैदिकगाथाप्रभावः न केवलं प्राकृतसाहित्ये (गाहासत्तसई अर्थात् गाथासप्तशती) अपितु हिन्द्यां - दाहाछन्दनीतिविषयात्मकं काव्यस्योपरि अपि प्रतीयते। भारतीयलोकसाहित्यमपि वेदानां कृते कृतज्ञता वर्तते। वैदिकसाहित्ये यथा प्रभावः शृङ्गाररसस्य अस्ति तथैव वीररसस्यापि। इन्द्रस्य वर्णनप्रसङ्गे ऋषि गृत्समदः कथयति इन्द्रं विना युद्धे विजयं कदापि न सम्भवति। इन्द्रः अपराजेयानमपि पराजयं करोति —

**यस्मान्न ऋत्ते विजयन्ते जनासोयं युध्यमाना अवसे हवन्ते।**
**यो विश्वस्य प्रतिमानं बभूत यो अच्युतच्युतस जनासइन्द्रः॥**

ऋग्वेदे एकस्मिन् प्रसङ्गे सूर्य-उषयोः मध्ययोः प्रिय-प्रियायाः सम्बन्धस्यापि निरूपणं वर्तते। यत्र सूर्यः उषाम् अनुधावति। उषा अत्र लोकजन्यराजनमधिकृत्य शोभते। सामान्याः

१३. तथैव ७.३७।
१४. ऋ.सं. १०.८५.६।
१५. Ethical Conception of the Gatha.

अत्र उषा सूर्यस्य भार्या रूपेण मन्यते — सूर्यस्य योषा[१६]। परन्तु सूर्य: उषाकारणात् उदेति। अत: व्यञ्जनादृष्ट्या उषा सूर्यस्य मातृकल्पा (जननी) अस्ति। अत: भाषावैज्ञानिका: अत्र स्त्रीविमर्शस्य नूतनां चर्चां तन्वन्ति। ऋग्वेदे ऋषि: मैथुनाय सुयोग्यां कन्यां वाञ्छति। यथा दानवीर: नदीतटयुक्ता भवति।[१७] अत्र न केवलमुपमालङ्काराद्यस्य लालित्ययोजना वर्तते, अपितु शृङ्गाररसस्याऽपि। मतेऽस्मिन् वैज्ञानिकजीवपरमात्मनो: भेदनिरूपणप्रसङ्गे द्वौरवगयो: चर्चाऽपि उपमालङ्कारदृष्ट्या शोभना प्रतीयते। यत्र एक: स्वादिष्टफलानां भोक्ता द्वितीयश्च केवलं तटस्थरूपेण द्रष्टा प्रतीयते —

**द्वा सुण्णा सयुजा सखायौ समानं वृक्षं परिषस्वजाते।**
**तयोरन्य: पिप्पलं स्वाद्वति अनश्नन्नन्यो अभिचाकशीति॥**[१८]

मन्त्रोऽयं न केवलं भारतीयदर्शनाध्यात्मिकदृष्ट्या महत्त्वपूर्ण: अपितु पर्यावरणसंतुलनाय भोगवादी पार्थिवलौकिकजीवनप्रबन्धनाय च शुभङ्कर:। नाना शास्त्रकारा: मन्त्रेऽस्मिन् विभावना-विशेषोक्ति-अनुप्रासालङ्काराणां मूलोद्भावनां मन्यन्ते। अत्र अनश्नन् अन्य: अभिचाकशीति, विभावनालङ्कारस्य उदाहरणं प्रतिभाति - अर्थात् **विभावना विना हेतु: कार्योत्पत्तिर्यदुच्यते।** प्रखरभावं उद्बोधयति — सति हेतौ फलाभावे विशेषोजायते। अनश्नन् शब्देऽपि दार्शनिकप्रखरभावस्य कारणस्य अभाव: दृश्यते। ब्राह्मणग्रन्थेष्वपि रूपकाणां अनेकानि काव्यतत्त्वानि विलसन्ति। मिथुनभावरूपेण स्त्रीपुराणस्य विषये विपुला चर्चा अस्मिन् ग्रन्थे परिलक्ष्यन्ते। छान्दोग्योपनिषदि इदृशी चर्चा अस्ति यत् रहिङ्कार: शब्द: स्त्रियं प्रति सङ्केत:। अस्मिन् ग्रन्थे कान्ताप्रसन्नाय मधुराणि वाक्यानि सन्ति।

*****

**डॉ. अजयकुमारमिश्र:**
सहायकाचार्य:
केन्द्रीयसंस्कृतविश्वविद्यालय:
भोपालपरिसर:, भोपालम्।

१६. ऋग्वेद, ७/७५/५।
१७. ऋग्वेद:, १.११६.२।
१८. ऋग्वेद:, १.१६४.२०।

# ध्वन्यालोकलोचने अभिनवगुप्तोक्तः भट्टनायकसिद्धान्तविमर्शः

— डॉ. राजकुमारमिश्रः

काव्यशास्त्रचिन्तनपरम्परायां भट्टनायको विशिष्टः काव्यतत्त्ववेत्ता वर्तते, अस्य कोऽपि ग्रन्थोऽधुना नोपलभ्यते, तथापि काव्यतत्त्वोन्मेलनाय अस्य राद्धान्तो मूलभूतो वर्तते। भट्टनायकोऽसौ ध्वनिविरोधी आचार्यो वर्तते। एभिर्विरचितो ध्वनिविरोधप्रतिपादकः हृदयदर्पणाख्यो ग्रन्थो सम्प्रति अनुपलब्धो वर्तते, परन्त्वभिनवगुप्तमम्मटादीनामाचार्याणां ग्रन्थेषु एतेषां सिद्धान्तः स्पष्टतया द्रष्टुं शक्यते। अभिनवगुप्तपादेन स्वकीये ध्वन्यालोकलोचनाख्ये ग्रन्थे एभिरुक्तानां बहूना विचाराणां चर्चा कृता। शोधपत्रेऽस्मिन् तान् विचाररानमहमुपस्थापयामि।

भरतमुनिना प्रोक्तस्य रससूत्रस्य व्याख्याकारेष्वन्यतमः आचार्यः भट्टनायकः। काव्येऽसौ रसस्य प्राधान्यं स्वीकुर्वन्नपि व्यञ्जनावृत्त्या तस्य प्रतीतिं नाङ्गी करोति। एतेषां मते त्रयः व्यापाराः सन्ति, ते च अभिधा, भावत्कत्वं, भोजकत्वञ्च, यथाहुः अभिनवभारत्याम् —

**अभिधा भावना चान्या भोगीकरणमेव च**
**अभिधाधीमतां याते शब्दार्थालङ्कृती ततः**
**भावनाभाव्य एषोऽपि शृङ्गारादिगणो हि यत्**
**तद्भोगीकृतरूपेण व्याप्यते सिद्धिमन्नरैः॥**[1]

रसस्य बोधं व्यञ्जनया नोररीकुर्वन्नसौ भोगकत्त्वव्यापारेण तस्य भोगमङ्गीचकार। ध्वनिसिद्धान्तानुयायिभिरङ्गीकृता व्यञ्जनावृत्तिः सर्वथा खण्डिता। यथाहुः अभिनवगुप्तपादाः लोचने —

**ध्वनिर्नामापरो योऽपि व्यापारो व्यञ्जनात्मकः**
**तस्य सिद्धेऽपि भेदे स्यात् काव्याङ्गत्वं न रुपता॥**[2]

१. अभिनवभारती, पृष्ठसंख्या, ६४०, सम्पादकः मधुसूदनशास्त्री, प्रकाशकः बनारसहिन्दू-विश्वविद्यालयः वि.सं. २०२८।

२. ध्वन्यालोकलोचनम्, पृष्ठसंख्या ६०, डॉ. रामसागरत्रिपाठी, प्रकाशकः मोतीलालबनारसी-दास, द्वितीय संस्करणम् १९७३।

वस्त्वलङ्काररसेषु त्रिविधेषु ध्वनिषु रसध्वनेरेव प्राधान्यमसौ मन्यते, वस्त्वलङ्कारध्वनिः सर्वथा नाङ्गीचकार। ध्वन्यालोककारैः दर्शिते वस्तुमात्रव्यङ्ग्यस्योदाहरणे —

**भ्रम धार्मिक विस्त्रब्धः स शुनकोऽद्य मास्तिस्तेन**
**गोदावरीनदीकूल ( लतागहन ) वासिना दृप्तसिंहेन।**

इत्यत्र भयानकरसावेशकृता एव चमत्कारिता वर्तते। ''मा भ्रम'' इति निषेधरूपिणः वस्त्वात्मनोऽर्थस्य ध्वनिरपि भयानकरसावेशकृतैव। यथाहुः लोचने लोचनाकाराः — यत्तु भट्टनायकेनोक्तम्।

इह दृप्तसिंहादिपदप्रयोगे च धार्मिकपदप्रयोगे च भयानकरसावेशकृतैव निषेधावगतिः तदीयभीरुवीरत्वप्रकृतिनियमावगमनन्तरेणैकान्ततो निषेधावगत्यभावादिति तन्न केवलार्थसामर्थ्यं निषेधावगतेर्निमित्तमिति।[३]

एतेषामयमाशयो वर्तते ''भम धम्मिअ'' इत्युदाहरणे दृप्तसिंहादिशब्दप्रयोगे धार्मिकपद-प्रयोगे च सत्येव जायमाना येयं ''मा भ्रमेति'' इत्याकारिका भ्रमणनिषेधप्रतीतिः सा भयानकर-सेनैव भवितुं शक्नोति नार्थसामर्थ्याक्षिप्तेन, यतोहि सिंहादयः भयानकरसस्यालम्बनत्वेन प्रसिद्धाः सन्ति। दृप्तसिंहपदेन भयानकरसस्यालम्बनस्य बोधने सति धार्मिकपदेन भयशीलप्रकृतिजन इत्याक्षेपादिति, भयोत्पादिका सर्वा सामग्री इत्यस्मिनुदाहारणे विद्यमाना वर्तते, तस्मात् भयानकरसावेशवशादेव निषेधप्रतीतिः जायते, न तु वस्तुरूपेणार्थेन। इत्यनेन व्याख्यानेन प्रतीयते यत् भट्टनायको रसप्राधान्यवादी आचार्यो वर्तते, आनन्दवर्धनोऽपि वदिति यत्।

अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादिनैव मुख्यतया काव्यार्थीकृत्य तदध्वन्यनु-गुणत्वेन शब्दानामर्थानां चोपनिबन्धनम्।[४] एतयोर्द्वयोरपि आचार्ययोः मते काव्ये रस एव प्राणभूतः पदार्थो वर्तते। रसप्रधानेऽस्मिन् काव्ये व्यापारस्यैव प्राधान्यमङ्गीचकार भट्टनायकः। यतोहि अपौरुषेषु वेदादिषु शब्दस्य प्राधान्यं भवति, अत्र मात्रायाः परिवर्तनमपि न सम्भवति

३. ध्वन्यालोकलोचनम्, पृष्ठसंख्या ११४, डॉ. रामसागरत्रिपाठी, प्रकाशकः मोतीलाल-बनारसीदास, द्वितीय संस्करणम् १९७३।

४. ध्वन्यालोकः, पृष्ठसंख्या २२० सम्पादकः के.के. एन कुरुप, बाल्यूम II प्रकाशकः सेन्ट्रल फार हेरीटेज स्टडीज डिपार्टमेण्ट ऑफ कल्चर गवर्नमेन्ट और केरला हिल प्लेस तिरुअनन्तपुरम्, २०११।

यथानुपूर्वि गुरुमुखादस्योच्चारणं भवति मात्राया: परिवर्तनमात्रेपि यथोक्तं फलं न मिलति। एवमेवेतिहासादौ एवार्थस्य प्राधान्यं शब्दस्य चाप्राधान्यं भवति। अत्र सुहृदवचनवदर्थस्योपयोग:, यथा सुहृत् स्वमित्रायोपदिशाति एवं कृते सति एवं भवति न राजाज्ञावद् वेदवचनवद् वा आज्ञां ददाति। तथेतिहासादि वचनमस्माभि: गृह्यते। परन्तु काव्ये शब्दार्थयो र्द्वयो: गुणीभावो भवति, यतोहि शब्दार्थौ भावकत्वभोजकत्वव्यापाराभ्यां विना न किञ्चित्चारुत्वं प्रसारयत:, काव्ये शब्दै: प्रकाशिता: अर्था: यदा भावकत्वव्यापारेण साधारणीकृतो भूत्वा उपस्थिता: भवन्ति तदा सहृदयहृदयसंवादमादधाना भोगकृत्त्वव्यापारेण सहृदयानामस्वादविषयतां प्राप्नुवन्ति। इत्थमेव साधारणीकृता: काव्यार्था: भोगकृत्त्वव्यापारेण भुज्यमाना भूत्वा काव्ये परमानन्दजनका: भवन्ति। अत एव अनेनैव भावकत्वभोजकत्वव्यापारद्वयेन वेदशास्त्रेभ्य: काव्ये वैलक्षण्यमायाति। वेद–शास्त्रेषु निबद्धा: शब्दार्था: आनन्दजनका: न भवन्ति। परन्तु कविकर्मणि गुणालङ्काररसौचित्य–द्वारा शब्दार्था: सरसा: भूत्वा सहृदयानां चेतांसि रञ्जयन्ति, काव्ये रसस्यास्वाद: सहृदयवासना–वशादेव जायते। अत एवाहु अभिनवगुप्ता: लोचने —

**''काव्ये रसयिता सर्वे न बोद्धा न नियोगभाक्।[५]''**

अत एव केवलं शब्दशास्त्रे कृतश्रमा: वैयाकरणा: अर्थशास्त्रे च कृतभूरिश्रमा: मीमांसका: रसात्मककाव्यस्यास्वादमनुभवितुमसमर्था: भवन्ति यथाहु: आनन्दवर्धना: ध्वन्यालोके —

**शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।**
**वेद्यते स तु काव्यार्थ: तत्त्वज्ञैरेव केवलम्॥[६]**

भट्टनायकमते न्यग्भावितशब्दार्थस्वरूपे काव्ये भावकत्वाख्यस्य भोजकत्वाख्यास्य चव्यापारद्वयस्यैव प्राधान्यमस्ति। यथाहु: भट्टनायका —

**शब्दप्रधानमाश्रित्य तत्र शास्त्रं पृथग्विदु:**
**अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयो:**

---

५. ध्वन्यालोकलोचनम्, पृष्ठसंख्या ६०, व्याख्याकार: डॉ. रामसागरत्रिपाठी, प्रकाशक: मोतीलालबनारसीदास, वाराणसी, द्वितीय संस्करणम् १९७३।

६. ध्वन्यालोकलोचनम्, पृष्ठसंख्या १५७, व्याख्याकार: डॉ. रामसागरत्रिपाठी, प्रकाशक: मोतीलालबनारसीदास, वाराणसी, द्वितीय संस्करणम् १९७३।

**द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्।।**[७]

भट्टनायकस्य व्यापारप्राधान्यानुप्राणितो रसस्य भोगा: साहित्यशास्त्रे अत्यन्तं प्रसिद्धोऽस्ति, अयं रसभोग: स्वयं वाग्रुपा धेनु: रसिकेभ्य: प्रददाति। यथा धेनु: स्वशिशो: तृष्णां शमयितुं दुग्धं स्वयमेव प्रस्तौति तथैव रसिकानां रससम्बन्धिनीं तृष्णां शमनाय — भगवती सरस्वती रसं प्रवाहयति। अयं च आनन्दायक: रस: योगिभि: लभ्यादानन्दाद् भिन्नो यथाहु भट्टनायका: —

**वाग्धेनुर्दुग्धं एतं हि रसं यद् बालतृष्णया**
**तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि य: ।।**[८]

भट्टनायकेन भट्टलोल्लटस्य रसस्योत्पत्तिसिद्धान्त:, शङ्कुकस्यानुमितिवाद: एवमेवैभिव्यक्तिवादसिद्धान्त: अनेकाभि: युक्तिभि: खण्डित:।

द्वितीयोद्योतस्यादौ असंलक्ष्यक्रम निरुपणप्रस्तावे ननूक्तं भट्टनायक: इति प्रतीकं दत्त्वा अभिनवगुप्तो वदति यत् रसस्य प्रतीति:। किं परगता स्वगता वा।[९] तत्र प्रथमपक्षो न युक्तियुक्त:। यथाह रसो यदा परगततया प्रतीयते तर्हि ताटस्थ्यमेव स्यात्।[१०] यदि रस अनुकार्ये दुष्यन्तशकुन्तलादौ अनुकर्तरि नटादौ वा विद्येत तर्हि दर्शकस्यास्वादयितु: सहृदयस्य च नाटकादिदर्शने प्रवृत्तिरेव न स्यात्। यतोहि परस्मिन् विद्यमान् भाव: दर्शकेन कथं अस्वाद्यते, प्रत्युत रसस्यानुकतेरि नदादौ अनुकार्ये दुष्यन्तादौ च विद्यमानत्वात् रसास्वादयितु: प्रेक्षकस्य ताटस्थ्यमेव स्यात्। एवं भट्टलोल्लटस्य रसोत्पत्तिसिद्धन्तोऽपि नोचित:, यतोहि रसोत्णत्तिस्वीकृतायां सत्यां

७. ध्वन्यालोकलोचनम्, पृष्ठसंख्या १४६, व्याख्याकार: डॉ. रामसागरत्रिपाठी, प्रकाशक: मोतीलालबनारसीदास, वाराणसी, द्वितीय संस्करणम् १९७३।

८. ध्वन्यालोकलोचनम्, पृष्ठसंख्या १५५, व्याख्याकार: डॉ. रामसागरत्रिपाठी, प्रकाशक: मोतीलालबनारसीदास, वाराणसी, द्वितीय संस्करणम् १९७३।

९. ध्वन्यालोकलोचनम्, पृष्ठसंख्या २६, सम्पादक: के.के.एन कुरुप वाल्यूम II द्वितीयोद्योते प्रकाशक: सेन्ट्रल फार हेरीटेज स्टडीज डिपार्टमेण्ट ऑफ कल्चर गवर्न्टमेन्ट ऑफ केरला हिल प्लेश तिरु अनन्नतपुरम्, २०११।

१०. ध्वन्यालोकलोचनम्, पृष्ठसंख्या २६, सम्पादक: के.के.एन कुरुप वाल्यूम II द्वितीयोद्योते प्रकाशक: सेन्ट्रल फार हेरीटेज स्टडीज डिपार्टमेण्ट ऑफ कल्चर गवर्न्टमेन्ट ऑफ केरला हिल प्लेश तिरु अनन्नतपुरम्, २०११।

यथा शृङ्गारादिप्रधानं काव्यं सुखस्वरूपा रतिः जायते तथैव करुणादिप्रधानं काव्यं वीक्ष्य दुःखप्रतीति जायतामिति, अपि च करुणरसप्रधाने महाभारतादिकाव्ये दर्शकानां विदुषां वा प्रवृत्तिरेव न स्यात्। यथाह लोचनेऽभिनवगुप्तः —

**उत्पत्तिपक्षे च करुणस्योत्पादाद् दुःखित्वे**
**करुणप्रेक्षासु पुनरप्रवृत्तिः स्यात्।**[११]

तस्मात् रसोत्पत्तिपक्षः न युक्तिसंगतः, एवमेवस्मिन् पक्षेऽपि तस्मात् रसोत्पत्तिपक्षः न युक्ति संगतः, एवमेव स्मिन् पक्षेऽपि पूर्वोक्ताः एव दोषाः जायन्ते ये रसप्रतीतिपक्षे निरुपिताः सन्ति।

एवमेव रसस्याभिव्यक्तिपक्षोऽपि न सम्भवति, अभिव्यक्तिः पूर्वसिद्धस्यैव वस्तुनः सम्भवति, यथा पूर्वसिद्धः घटः प्रकाशकेन दीपकेन प्रकाश्यते, अविद्यमानो घटः दीपकेन कदापि न प्रकाश्यते, रसो न पूर्वसिद्धपदार्थः। तस्मात् तस्याभिव्यक्तिः न युज्यते। एवमेवासौ रसः अभिव्यक्तेरनन्तरं न भवति घटपटादिवत्। प्रत्युत प्रत्यायकेन विभावानुभावव्यभिचारिणा सहैव तस्य प्रतीतिः सिद्धो वर्तते, विभावानुभावव्यभिचारिप्रतीतिसत्त्वे रसप्रतीतिसत्ता, विभावानु-भावव्यभिचारिप्रतीतयभावे रसप्रतीत्यभावः, अतः विभावानुभावव्यभिचारिभिरुत्थितो रसः न लौकिकघटादिवत् पूर्वसिद्धः येन तस्याभिव्यक्तिः स्यात्, तस्माद्भिव्यक्तिपक्षोऽपिः न समीचिनः। यथाह लोचनेऽभिनवगुप्तपादः —

नाप्यभिव्यक्तिः शक्तिरुपस्य हि शृङ्गारस्याभिव्यक्तौ विषयार्जनतारतम्यप्रवृत्तिः स्यात्। तत्रापि किं स्वगतोऽभिव्यज्यते रसः परगतो वेति पूर्ववदेव दोषः। तेन न प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्येन रसः।[१२]

---

११. ध्वन्यालोकलोचनम्, पृष्ठसंख्या २६, सम्पादकः के.के.एन कुरुप वाल्यूम II द्वितीयोद्योते प्रकाशकः सेन्ट्रल फार हेरीटेज स्टडीज डिपार्टमेण्ट ऑफ कल्चर गवर्न्टमेन्ट ऑफ केरला हिल प्लेश तिरु अनन्नतपुरम्, २०११।

१२. ध्वन्यालोकलोचनम्, पृष्ठसंख्या २६, सम्पादकः के.के.एन कुरुप वाल्यूम II द्वितीयोद्योते प्रकाशकः सेन्ट्रल फार हेरीटेज स्टडीज डिपार्टमेण्ट ऑफ कल्चर गवर्न्टमेन्ट ऑफ केरला हिल प्लेश तिरु अनन्नतपुरम्, २०११।

इत्थमाचार्येण भट्टनायकेन पक्षत्रये दोषं दर्शयित्वा त्रयंशताप्रासादात् रसस्य भोगपक्ष-ऽङ्गीकृत:। एतेषां मते अभिधाभावकत्वभोगकृत्त्वनामका: त्रयो व्यापारा: सन्ति, तत्र अभिधा व्यापार: वाच्यविषयको भवति, अयन्तु वेदशास्त्रादिषु प्रसिद्ध एव, अस्मात् व्यापारात् वाच्यार्थ-प्रतीतिर्जायते, परन्तु केवलमेत: व्यापारानाङ्गिताभिधाव्यापात् साधारेणोपादयितुं शक्या:। यद्युच्यते रामादिगतोत्साहसारणं सामाजिकानां रसास्वादबोधे हेतुरिति, तदपि वक्तुं न शक्यते, यतोहि पूर्वानुभूतस्य पदार्थस्यैव सारणं भवति, उत्साहादिमान् राम इति यदि पूर्वं केनचित् अनुभूतं स्यात् तेन तद्गतोत्साहस्य करणात् रसोद्बोध, भवेदिति। अत: स्मृत्या न सम्भवति, एवमेव काव्यगतात् शब्दात् अनुभवाद् वा रसप्रतीति: न युक्ता, यतोहि शब्दप्रमाणादनुमानप्रमाणाद् वा लभ्येऽर्थे स: सहृदयहृदयावर्जकता न भवति, एवमेव नापि प्रत्यक्षप्रमाणेन रसप्रतीतिरधिगता भवति, प्रत्यक्षप्रमाणेन रसप्रतीतिस्वीकृतायां सत्यां यथा नायकनायिकयो: परस्परं चुम्बनालिङ्ग-नादिकं दृष्ट्वा लज्जाजुगुप्सादय: नैके: भावा: जायन्ते तथैव काव्यं वीक्ष्य शृङ्गारादिरसस्य स्थाने जुगुप्सादय: भावा: जायन्ताम् परन्त्वेवं न दृश्यते। एवं रामायणकाव्ये सीतादिना राममुद्दिश्य प्रयुक्ताभि: हावभावकटाक्षादिभिरालम्बनभूतस्य रामादिकस्यैव हृदि रत्युत्पादकत्वात् प्रतिबन्ध-कीभूतपूज्यत्वबुद्धिभातृत्वबुद्धिसद्भावे सीतादीनां साधारणनायिकात्वेनोपस्थातुम् शक्यात्। रसा-स्वादकाले मध्ये स्वकीयकान्ताया: स्मरणस्याप्यसम्भवात्, वीराद्भूतरसादौ समुद्रलंघदीनाम् लोकविलक्षणानां कारणानां साधारणत्वेन प्रतीत्यसम्भवात्, शब्दप्रमाणादनुमनाद्वा रसप्रतीतौ स्वीकृतायां रसस्याह्लादकत्वाजनकत्वात्, स्वात्मगतत्वेनापि रसप्रतीति: न भवितुमर्हति। यथाहु: अभिनवगुप्तपादा: लोचनटीकायाम् ननूक्तं भट्टानायकेन —

रसो यदा परगतया प्रतीयते तर्हि ताटस्थ्यमेव स्यात्। न च स्वगतत्वेन रामादिचरित-मयात्काव्यादसौ प्रतीयते। स्वात्मगत्वेन च प्रतीतौ स्वात्मनि रसस्योत्पत्तिरेषाभ्युपगता स्यात्। सा चा युक्ता, सीताया: सामाजिकं प्रत्यपि भावत्वात्। कान्तात्वं साधारणं वासनाविकासहेतुतायां प्रयोजकमिति चेत् देवतावर्णनामादौ तदपि कथम्। न च स्वकान्ता स्मरणं मध्ये संवेधते। अलोकसामान्यानां च रामादीनां ये समुद्रसेतुबन्धादयो विभावास्ते कथं साधारण्यं भेजयु:। न चोत्साहादिमान् राम: स्मर्यते, अननुभूतत्वात्। शब्दादपि तत्प्रतिपत्तौ न रसोपजन: प्रत्यक्षादिव नायक-मिथुनप्रतिपत्तौ।

दुष्यन्तेनानुकर्त्ता नटेन वा अस्वाद्यमाना रति: नटदुष्यन्ताभ्यामेवानुभूयमानत्वात् दर्शकस्तु तटस्थ एव स्यात्। रसास्वादस्य का चर्चा। अतो रस: परगत इत्ययं पक्षो नोचित:। एवमेव

द्वितीयोऽपि पक्षो न समीचिन अर्थात् रसः स्वस्मिन् प्रेक्षके सामाजिके वा विद्यते इत्ययं पक्षोऽपि न युक्तिसङ्गतः। यतो हि रसः विभावानुभावव्यभिचारिद्वारैव प्रतीयते इति सर्वजनीनः सिद्धान्तः। तत्र शकुन्तलया दुष्यन्तमुद्दिश्य कृताः ये कटाक्षभुजाक्षेपादयः व्यापारविशेषाः दुष्यन्तहृदये एव वासनारुपेण स्थिता रतिमुद्दीपयन्ति न तु सामाजिकहृदि उद्दीपनविभावैरुद्दीपिता दुष्यन्तेनैव चर्व्यते। यतोहि शकुन्तलायाः कटाक्षभुजाक्षेपादयः कारणविशेषाः दुष्यन्तस्यैव कार्यभूता इति जनयन्ति न तु कस्यचिदन्यसामाजिस्य। यदि शकुन्तलायाः कटाक्षभुजाक्षेपादयः सहृदयमुद्दिश्य कृताः स्युस्तदा सहृदयहृदये रसस्योत्पत्तिं कुर्युः। परन्तु रसोद्दीपकाः कटाक्षभुजा-क्षेपादयः शकुन्तलायाः दुष्यन्तमुद्दिश्य विधीयन्ते, न तु सामाजिकमुद्दिश्य इति। एवञ्चात्मगतत्वेन अर्थात् सामाजिकनिष्ठत्वेनापि शाकुन्तलादिगतैरुद्दीपनविभावैः समाजिके रसोत्पत्तिः न सम्भवति। अत्राशङ्क्ते पुनः। शकुन्तलायां धर्मद्वयं वर्तते, एकः सामान्यधर्म अपरश्च विशेषधर्मः। सामान्यो-धर्मः स्त्रीत्वं कान्तात्वं भवति, विशेषधर्मश्च शकुन्तलात्वं दुष्यन्तपत्नीत्वं कण्वपुत्रीत्वादयः। शकुन्तलायां विद्यमानः यः साधारणधर्मः कान्तात्वं, तत् कान्तात्वं सहृदयस्य रतेः प्रयोजकं स्यादिति। परन्तु रामचरितप्रतिपादकस्य बाल्मीकीयरामयणकाव्यस्य या नायिका वर्तते तस्याम-स्माकं मातृत्वबुद्धिः पूज्यत्वबुद्धिश्च वर्तते। सा सीता साधारणनायिकात्वेन सहृदयैर्नानुमन्यते अपि च सीतायां पुजयत्वबुद्धि, मातृत्वबुद्धिश्च साधारणनायिकात्वसंवेदने प्रतिबन्धिका वर्तते। अत एव सीतादीनां साधारणनायिका रुपेणावस्थित्यभावात् कान्तात्वं साधारणं सामाजिकहृदि इत्यादिवासना विकासे विभावत्वेन कारणतां न प्राप्नोति। तस्मात् रसास्वादो न भवति। पुनराशङ्क्ते यत् काव्ये सीतादिज्ञाने जाते तस्मिन् ज्ञानकाले सहृदयाः स्वस्वकान्तायाः स्मरणं कुर्वन्ति, तेन रसोद्बोधो भवतीति चेत् न। यतोहि एतेन कान्तावतामेव सामाजिकानां रसोत्पत्तिः स्यात्। कान्तारहितानां सामाजिकानां रसोत्पत्तिः न स्यात् परन्त्वेवं न भवति कान्तावन्तोऽपि काव्येन रसानुभूतिं कुर्वन्ति तद्वद्तिोऽपि च। अपिच भवतु नाम शृङ्गाररसे कथञ्चित् सीतादीनां साधारण-त्वबुद्धिः, परन्तु लोकविलक्षणाः परमाद्भूताः समुद्रे सेतुबन्धादयः कार्यविशेषाः रामेणानुष्ठिताः कथं सामाजिकाभ्यां विलक्षणो वर्तते, अत एव शब्दार्थज्ञानमात्रेण रसास्वादो न भवति, यदीतर-व्यापाररहितः केवलो शुद्धोऽभिधाव्यापारः एव काव्ये ग्राह्यः स्यात् तदा वेदशास्त्रादिभ्यः अस्य काव्यस्य को विशेषः स्यात्। यतोहि शब्दार्थयोः सर्वत्र समानरुपेणैवविद्यमानत्वात् अपि च यथा व्याकरणशास्त्रे तन्त्रेणार्थद्वयस्य प्रतीतिर्भवति तथैव श्लेषरुपकसमासोक्त्यादि-प्रधानकाव्येऽपि अर्थद्वयस्य प्रतीतिसत्त्वात् न कोऽपि भेदः स्यात्। एवमेव काव्ये शुद्धाभिधामात्र-स्वीकारे उपनागरिकाकोमलापरुषादिवृत्तीनां भेदनिरुपणं व्यर्थमेव स्यात्, यतोहि एताः उपनाग-

रिकादिवृत्तयः कस्मिश्चिद् रसे भवन्ति न सर्वेषु रसेषु। एवमेव श्रवणोद्वेगकानां श्रुतदुष्टानां शब्दानां कस्मिश्चिद् रसे वर्जनं कस्मिश्चिद् रसे ग्रहणं, सर्वमेव निष्फलं स्यात्। अतः शुद्धाभिधातिरिक्तः कश्चिदन्यो व्यापारोऽवश्यमेवाङ्गीकर्तव्यः एव। येन वेदशास्त्रेतिहासादिभ्यः काव्यस्य वैलक्षण्यं स्यात्। व्यापारश्चासौ रसभावनाख्यो द्वितीयो वर्तते, यद्वशाद् अभिधया प्रतिपादिताः अर्थाः कामपि विशिष्टां चमत्कृतिं प्रसासयन्तः वेदशास्त्रादिनां शब्दार्थेभ्यः भिन्नाः भवन्ति।

अयञ्च भावनाख्यो व्यापारः अभिधातः व्यतिरिक्तो वर्तते। काव्ये विभावानुभाव व्यभिचारिणं साधारणत्वेनोपस्थापयन् सामाजिकानां हृदि विलक्षाणां चमत्कृतिमभिदधाति। अनेन व्यापारेण रामसीतादिसम्बन्धिनो भावाः रामसीतात्वरूपं विशेषधर्मं विनाश्य साधारण्येन नायिकानायकत्वेनोपस्थिताः भवन्ति। साधारणीकृतायामस्यां रतौ ममैव एते भावाः, परस्यैव एते भावाः, न ममैव न परस्य इति बुद्धिः न जायते। एवं भावकत्वव्यापारेण इत्यादीनां भावानां साधारणपदने, सहृदयविषयकभोगकृत्त्वाख्यतृतीयव्यापारेण रत्यादयो भावा भुज्यन्ते। भाविते च रसे तस्य भोगः, अयञ्च भोगः परमानन्दसहोदर एव। भुज्यमानेषु रत्यादिषु कदाचित् चित्तस्य द्रुतिः, रजोगुणप्रभावकारणात्, क्वचिच्च विस्तारः तमोगुणप्रभावात्, क्वचिच्च विकासः सत्त्वगुणस्योत्कर्षात्। चित्तस्य द्रुतिः शृङ्गारकरुणविप्रलम्भरसे, चित्तस्य विस्तारः वीरबीभत्सरौद्रेषु रसेषु, विकासश्च सर्वेषु रसेषु। अनेन प्रकारेण रजोगुणतमोगुण वैचित्र्यसंवलितसत्त्वगुणोद्रेककारणात् समुल्लसन् परमब्रह्मस्वादसदृशः काव्यानन्दो परमविलक्षणेन भोगकृत्वाख्यव्यापारविशेषेणास्वद्यते, यथाहुः अभिनवगुप्तपादाः ध्वन्यालोकलोचने।

किन्त्वन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य त्र्यंशताप्रसादात्। तत्राभिधायकत्वं वाच्यविषयं, भावकत्वं रसादिविषयं, भोगकृत्त्वं सहृदयविषशयमिति त्रयोंऽशभूता व्यापाराः। तत्राभिधाभागो यदि शुद्धः स्यात्तदिभ्यः शास्त्रभ्यः श्लेषाघलङ्काराणां को भेदः, वृत्तिभेदवैचित्र्यं चाकिञ्चित्करम्, श्रुतिदुष्टादिवर्जनं च किमर्थम्, तेन रसभावानाख्यो द्वितीयो व्यापारः, यद्वशाद् अभिधा विलक्षणैव। तच्चैतद्भावकत्वं नाम रसान्प्रति यत्काव्यस्य तद्विभावादीनां साधारणत्वापादनं नाम। भाविते च रसे तस्य भोगः योऽभवस्मरणप्रतिपत्तिभ्यो विलक्षण एव द्रुतिविस्तरविकासात्मा, रजस्तमोवैचित्र्यानुविद्धसत्त्वरजमयजनितस्वभावनिर्वृत्तिविश्रान्तिलक्षणः परब्रह्मस्वादविधः।[१३]

१३. ध्वन्यालोकलोचनम्, पृष्ठसंख्या २८, सम्पादकः के.के.एन कुरुप वाल्यूम II द्वितीयोद्योते प्रकाशकः सेन्ट्रल फार हेरीटेज स्टडीज डिपार्टमेण्ट ऑफ कल्चर गवर्न्टमेन्ट ऑफ केरला हिल प्लेश तिरु अनन्नतपुरम्, २०११।

काव्येऽभिनगुप्तादिमते व्यङ्ग्यार्थः एव प्रधानभूतः पदार्थो वर्तते, परन्तु श्रीमता भट्टनायकेन विषयममुं निराकृत्य भावकत्वभोजकत्वाख्यस्य व्यापारस्य प्राधान्यं दर्शितमिति, व्यापारः कस्यचित विषयस्य कृते भवति विषयं विना स स्वरूपलाभं न प्राप्नोति। यथोक्तम् —

**द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्।**[१४]

यद्यपि व्यञ्जनाध्वनिवादिभिः अभिनवगुप्तमम्मटप्रभृतिराचार्यैः सहृदयविषयकः रसभोगीकरणत्मा अयं भोजकत्व व्यापारोऽपि अस्यां व्यञ्जनायामन्तभार्वितः तथापि रसानुभवे कार्यकारणपरमपरा त्वङ्गिार्या एव भावकत्वनामको व्यापारः रसानुभूतौ कारणभूतः, भावकत्व-व्यापारे सति एव रसभोगो भवति, यदि रत्यादिस्थायिभावानां साधारणीकरणं न भवति तदा रसभोगोऽपि न भवति। अतः पूर्वं विभावानुभावव्यभिचारिणां काचन विशिष्टा योजना भवति तदनन्तरं साधारणरुपेणापस्थितस्य भावस्य भोगो भवति। इत्थं रसभोगक्रियायां कार्यकारणयोः क्रमः भट्टनायकेन स्वीकृतम् रसास्वादकाले यः कार्यकारणक्रमः भट्टनायकेन भावकत्वभोगक-त्वव्यापारद्वयनाम्ना अङ्गीकृतः, सः क्रमः ध्वनिवादिभिराचार्यैः विभावानुभावव्यभिचारिणां योजनैव रसाभिव्यक्ति इति कारणांशे कार्यांशे चैक एव व्यापारा व्यञ्जनाख्यः स्वीकृतः इति। इत्थं भट्टनायकस्य विचारः ध्वन्यालोकलोचने यथानिर्दिष्टहम् किञ्चित् प्रकाशयितुं यत्नमकार्षम् इति।

*****

**डॉ. राजकुमारमिश्रः**
सहायकाचार्यः, साहित्यविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः,
वेदव्यासपरिसरः, गरली

१४. ध्वन्यालोकलोचनम्, पृष्ठसंख्या २८७, सम्पादकः के.के.एन कुरुप वाल्यूम II द्वितीयोद्योते प्रकाशकः सेन्ट्रल फार हेरीटेज स्टडीज डिपार्टमेण्ट ऑफ कल्चर गवर्न्टमेन्ट ऑफ केरला हिल प्लेश तिरु अनन्नतपुरम्, २०११।

# ताण्डवोपन्यासे राजतरङ्गिणी-ग्रन्थस्य प्रभावः

**— बृजेशकुमाररिछारिया**
**डॉ. धर्मेन्द्रकुमारसिंहदेवः**

ताण्डवं नाम आचार्यराधावगत्रिपाठिना प्रणीतं नवीनम् ऐतिहासिकमपि कविकल्पितम् उपन्यास-ग्रन्थरत्नम्। तत्र च काश्मीरमहाराजस्य हर्षस्य कथा समाकलिता। राजतरङ्गिणी तु कविकल्हणप्रणीता काश्मीरनृपाणाम् ऐतिहासिकतथ्यसंवलिता काव्यनिर्झरी। अतः ताण्डवे उपन्यासेऽपि काश्मीरकम् ऐतिहासिकं तथ्यं स्वतः आपतितम् इति राजतरङ्गिण्याः प्रभावम् अधिकृत्य किंचित् प्रस्तूयते।

तत्र — महाकविः कल्हणोऽयं काश्मीरकस्य कस्य ब्राह्मणकुलावतंसस्य चम्पकनाम्नो भूसरस्यात्मजः। महाराजहर्षदेवस्यातीव विस्रम्भभाग, राजनैतिकसचिवाचायी। हर्षवर्धनानन्तर-मनेन राजनीतिप्रपञ्चः परित्यक्तः। स्वपितृव्यस्य राज्ञो हर्षदेवस्य परमप्रीतिपात्रस्य कनकसंज्ञकस्य देहावसाने विरतो भूत्वा काश्यामागतो वैराग्यमयजीवनं यापयितुं प्रववृते। भारतस्य राजनैतिकेति-वृत्तं लिखितुमुपचक्रमे। तदितिवृत्तमेव राजतरङ्गिणीनाम्ना प्रसिद्धम्। अस्मिन् ग्रन्थे ऐतिहासिक घटनानां क्रमबद्ध उगेखः पगवितः। खैस्त ११५१ तमसम्वत्सरं यावत् सर्वेषाम् काश्मीरकनृपाणां कालादिनिरूपणपुरस्सरं तत्तद्घटनाचक्रमङ्कितम्।

सेयं राजतरङ्गिणी अष्टखण्डेषु विभक्ता, ७,८२३ श्लोकैश्च प्रणिबद्धा। एतल्लेखनसरण्या-ऽवगम्यते यत्काश्मीरेषु इतिहासोपन्यासप्रणालिरतिप्राचीनकालत एव लब्धप्रचारा आसीत्। इतिवृत्तविषयका नैक ग्रन्थाश्च आसन्, यानाश्रित्य कल्हणो राजतरङ्गिणीमुपन्यस्तुं प्रबभूव। अनेकान् शिलालेख-प्रशस्तिपत्र-दानपत्र-हस्तलिखित-ग्रन्थान् संस्कृतभाषायां शारदालिपि-बद्धान् आदाय राजतरङ्गिणी प्रणिनाय। प्राचीनमुद्राविशेषाणामुपयोगोऽपि तेन व्यधायि समीचीन-तया। एतद्व्यातिरिक्तमस्य ग्रन्थस्य लेखने तद्देशीयजनश्रुतीनां, पारिवारिककथांशानां, प्रथानां, परम्पराणाञ्चावलम्बनं साहाय्यञ्च शरणीकृत्य ग्रन्थोऽयं महता समारम्भेण संग्रथितः। पञ्चदश-शतकोपनतवृत्तान्तस्य सतर्कोल्लेखः कवित्वकलासंवलितया ललितया गिरा गुम्फितः। इतिहासस्य

सजीवता, वर्णनस्य मनोज्ञता, काव्यमाधुर्यसम्भृतिश्चात्र सुतरां पम्फुल्यमाना इव प्रतिभाति। नूनमसौ यथार्थतया आसीदैतिहासिकः कविः। न्याय्यं सत्यञ्च तत्त्वं निष्पक्षपाततया समुट्टङ्कयति। स्वाश्रयप्रदातू राज्ञो हर्षस्यात्याचारान् निरातङ्कमङ्कितवान्। कविना राज्ञो व्यक्तिगतं राजकीयञ्च जीवनं वैशद्येन चित्रितम्। सत्यपि ऐतिहासिके काव्येऽस्मिन् काव्यकलायाः परिपूर्णः पाकोऽपि दृष्टिगोचरो भवति।

**अस्य काव्यशैल्यप्यवलोकनीयाः —**

परामृशति सस्पृहं मुहुरपेलवं वीक्ष्यते महत्किमपि रत्नमित्यसमसम्मदं गहते।

**कुतोऽपि परिपेलवच्छविमवाप्य काचोपले**
**वहत्यतिकदर्थतां बत वराककः पामरः॥**
**अस्याः सर्गविधौ प्रजापतिराहो चन्द्रो न संभाव्यते,**
**नो देवः कुसुमायुधो न च मधुर्दवे विरचिः प्रभुः॥**
**एतन्मे मतमुत्थितं यममृतात्काचित्स्वयं सिन्धुना,**
**या मन्थाचललोडितन हरये दत्त्वा श्रियं रक्षिता॥**

नूनं संस्कृतसाहित्ये एवं विधं काव्यकलासम्पन्नमैतिहासिकं काव्यं नास्ति। यद्यप्यन्येऽपि सन्ति केचनैतिहासिकाः सन्दर्भाः परन्तेऽस्य कलातुलामविरोढुं नार्हन्ति।

**उचितार्थविशेषेण प्रबन्धार्थः प्रकाश्यते।**
**गुणप्रभावभव्येन विभवे नैव सज्जनः॥**[१]

उक्त पद्याधारीकृत्य कथानके तदौचित्यस्य परमावश्यकता वर्तेते इति निश्चप्रचम्।

ताण्डवस्य कथानकेऽपि उक्तदृष्ट्या औचित्यसमावेशो वरीवर्ति। ताण्डवस्य कथनाक-मैतिहासिकमस्ति। काव्यशास्त्राचार्यैरपि काव्ये ऐतिहासिककथानकस्यैव महत्त्वमङ्गी कृतमस्ति। पुरुषस्य चरित्रमपि काव्ये उपादेयं कथितम्, यः खलु ऐतिहासिको महापुरुषः सम्पत्स्यते।[२] ताण्डवम् प्रबन्धकाव्यमस्ति। प्रबन्धकाव्ये जीवनस्य सरसं चित्रणं भवति। तत्र च घटनावर्णनानि

१. औचित्यविचारचर्चा ३/१३।
२. काव्यादर्शः १/१५।

परस्परं स्वाभाविकक्रमेण गुम्फितानि भवन्ति। तत्र च रसानुभूति-जनकानां हृदयस्पर्शिनाञ्च वृत्तानामेव सापेक्षता भवति। कुत्रचिच्च संक्षिप्त-घटनानां विस्तरम्, तथा चान्यत्र नितान्तनूतनं कल्पनमपि कवि: कर्तुं शक्नोति यथा —

'नगराद् बहि: वितस्तायास्तीर एव वर्तते एकं महत् श्मशानम्। निकषा श्मशानं भैरवमन्दिरं विद्यते। विगतेषु केषुचिद् दिनेषु अस्मिन् भैरवमन्दिरे कश्चन संयासी द्वाभ्यां बटुकाभ्यां वसतिं कृतवानस्ति। गव्यूतिमात्र दूरे कश्चन ग्रामो वर्तते, तत्रत्या ग्रामीणा अस्य सन्यासिनो दर्शनार्थम् आयान्ति। सन्यासी तै: सार्धं ज्ञानचर्चां कुरुते। विविधान् कथाप्रसङ्गान् वक्ति। रमणीया तदीया कथानकशैली।[३]

असौ काव्ये रसोपयोनिमेव कथाशं गृह्णाति। रसविरोधिमनुपयोगिनञ्चाशं परित्यजति। अभीष्टस्य निष्पत्तये काल्पनिककथांशमपि सृजति।[४] यथा कथाकार: पूर्वपीठिकायां भैरवमंदिरादेव कथां प्रारभ्य हर्षस्य चरित्रं चित्रयितुं कपालिकवेशिन: तस्य मुखेन एव प्रजारञ्जकयो: महाराजयो: मातृगुप्त-तुञ्जीनयोश्च कथां वाचयति। तुलसीरामायण-कथाभागेषु वाल्मीकि-रामायणाद्वैभिन्यं स्पष्टमेव। उत्तररामचरिते नाटकस्य दु:खान्तत्वपरिहाराय अन्ते सीतारामयोर्मिलनं परिकल्पितमस्ति।

अत्र काव्ये सर्वप्रथमं कथानकस्य उपक्रमे एव कापालिकग्रामीणयो: संवाद: काल्पनि-कोऽस्ति। एष खलु संवाद: कथानकोपक्रमं सौन्दर्यविशेषेण विभूषयितुं कथानकम् उपस्थापयितुं च काल्पनिकोऽस्ति। अस्मिन् विषये उपन्यासकारो तावदेव सफलो बभूव यावत् कादम्बर्यां बाणभट्ट:। अतो नात्र संशयो यदुक्तसंवादकल्पनया कथानकोपक्रमस्य वैशिष्ट्येन शोभातिशालिता सम्पद्यते।

हर्षस्य पूर्वजानां कथावर्णनप्रसङ्गे केषाञ्चित् परित्यागोऽपि समुचित एव। अन्यथा कथानकेऽनावश्यक विस्तरेण तस्य रोचकतायां दुष्प्रभाव: निवेश: सम्भाव्य आसीत्। येषाञ्च परिचय: कविना प्रदत्तोऽस्ति, तस्य संक्षेपोऽप्युक्तदृष्ट्या समीचीन एव। ताण्डवस्य कथाया: कथानकत्वेन स्वीकरणे कविना महदौचित्यं समीक्षितमिति प्रतीयते।

३. ध्वन्यालोक:।
४. तथैव ३/६७।

हर्षस्य कापालिकवेशकल्पनाया वैशिष्ट्येन काव्यकथानके आद्योपान्तं सम्बन्धः वर्तते। कथानकस्योक्तांशो वैविध्येन प्रभावयति उपन्यासमिदम्।

हर्षस्य समयो भारतीयस्य इतिहासस्य महान् समयः। अस्य देशस्य मनीषायाः सर्वोच्चाः शलाकापुरुषाः तस्मिन् समये ततः किञ्चिद्वा प्राक् शारदादेशे कश्मीरे स्वीयां सारस्वतसाधनां प्रगुणीकृतवन्तः। हर्षो महापण्डितः, महाकविरिति कल्हणः स्वीकरोति, एतादृशः सहृदयः करुणाशीलो नृपः अन्यो न बभूव, एतादृशः क्रूरः आततायी राजाऽपि अन्यो न बभूव इत्यपि स कथयति। अयम् अन्तर्विरोधः कल्हणस्य नयनेन निरीक्ष्यमाणः आपाततो भासते। वास्तविकता तु भिन्नैव, सा वर्तते इतिहासस्य वात्याचक्रम्, समयस्य क्रूरा गतिः। तदन्तरन्तः समुल्लसति शिवस्य ताण्डवम्। तदेव अत्र विषयीकृतम्। अस्य ताण्डवस्य विलक्षणा रीतिः। तदनुसारेण अस्य उपन्यासस्य सङ्घटनाऽपि जटिला जाता। मुख्यकथायाम् अवान्तरकथाः पिनद्धाः, यतो हि ताः विना हर्षस्य चरित्रचित्रं सम्पूर्णं नाभविष्यत्।

राजतरङ्गिणीकारः कल्हणः हर्षस्य प्रायः समवयस्कः। स राजतरङ्गिणी नाम इतिहास-काव्यं विरचयति एषु दिनेषु। तस्य प्रभावः ताण्डव उपन्यासे साक्षात्दृश्यते।

पूर्वपीठिकायां वर्णितम् मातृगुप्तस्य वृत्तम्, महाराजविक्रमादित्यस्य च वर्णनं राजतर-ङ्गिण्याः तृतीयस्तरङ्गात् तादृशं गृहीतमस्ति। ताण्डवे चर्चितं विक्रमादित्यं कल्हणेन श्रीहर्षनाम-धेयेन वर्णितम्। यथा —

**तत्रानेहस्युज्जयिन्यां श्रीमान्हर्षापराभिधः।**
**एकच्छत्रचक्रवर्ती विक्रमादित्य इत्यभूत्॥**[५]

मातृगुप्तस्य काश्मीरनरेशरूपे स्थापनमपि तत्रैव गृह्णाति। यथा —

**मातृगुप्त इति श्लाघ्यं भवतामेव नाम किम्।**
**एवमैवैतदित्यूचे सोऽपि तान्विहितास्मितः॥**
**कः कोऽत्र संनिघातृणानित्यश्रूत वाक्ततः।**
**राज्याभिषेक संभारो दृश्यते स्म च संभृतः॥**[६]

५. राजतरङ्गिणी - ३/१२५।
६. रा.त. ३/३३६-३३७।

हर्षस्य साहित्यकलादिषु रुचि: राजतरङ्गिणीमिव अत्रापि प्राप्यते —

हर्ष: सरस्वतीभवनमिति नाम्ना महान्तं ग्रन्थागारं निरमापयत्। तस्मिन् ग्रन्थागारे चतुष्पष्टिग्रन्था: राज्ञा भोजेन रचिता एकस्मिन् काष्ठपुटके स्थापिता अभूवन्। सरस्वतीभवने अग्निसाज्जाते अन्यै: लक्षप्राय: ग्रन्थै: सह तेऽपि दग्धा:। भरतमुनिर्नाट्यशास्त्रं तदधिकृत्य परममाहेश्वरस्य आचार्यस्याभिनवगुप्तपादस्य अभिनवभारतीति व्याख्या। नाट्यशास्त्रस्यैव कति व्याख्यानां हर्षेण प्रतयो निर्मापिता: लेखकान् नियोज्य। काश्यपस्य छन्द: शास्त्रम्, वसुगुप्त-सोमानन्दोत्पलदेव-राजानक-रत्नकण्ठाभिनवगुप्त-भास्कर-रामकण्ठ-क्षेमराजै: प्रणीता: सहस्त्रं ग्रन्था: हर्षेण यत्नात् सङ्कलिता:। उत्पलदेवस्य स्तोत्रावली, शिवसूत्रम्, क्षेमगुप्तस्य च ग्रन्था: साभिमानं तेन रक्षिता:। चीनदेशीयो बौद्धमुनि: कश्चन कश्मीरे द्वयोर्वर्षयोरुवास। बालादित्य-स्तदानीं शासति स्म। तेन मुनिना नैका: मातृका: अनुलिखिता:। गमनसमये तासु नैका: स समार्पयत्। चन्द्रक-भीमक-शंकुक-भर्तृमण्ठ-भगट-अभिनन्द-रत्नाकर-शिवस्वामिनां काव्यानि हर्षस्य साभिनिवेशं सङ्कलितानि। नाट्यशास्त्रस्य व्याख्यासु मातृगुप्त-कीर्तिधर-भट्टलोगट-शङ्कुक-भट्टनायकोभटानां व्याख्या: केवलम् एतस्मिन्नेव पुस्तकालये आसन्। वामनानन्दवर्धन-भट्टेन्दु-राजभट्टतौत-मुकुलभट्ट-नायक-कुन्तक-महिमभट्ट-रुद्रट-क्षेमेन्द्राणाम् अङ्कारशास्त्रग्रन्था अपि हर्षेणैव अत्र सबहुमानं रक्षिता:।

एवाञ्चात्रेदमपि विचारणीयं यन्नास्त्येतादृश: कोऽपि कवि: यस्य काव्येषु प्राक्तन-कवीनां प्रभाव: न दृष्टिगोचरो भवेत्। परं ते सर्वेऽपि अनुकरणशीला आसन्निति नैव वक्तुं शक्यते। किम्बहुना कविकुलगुरो: कालिदासस्य रचनास्वपि आदिकवे: वाल्मीकेरत्यधिक: प्रभाव: समीक्ष्यते। इदमत्रोदाहरणम् -

**कच्चित्क्षितिभृतां नाथ हष्टा सर्वाङ्गसुन्दरी।**
**रामा रम्ये वनोद्देशे मया विरहिता त्वया।।**[७]

उक्तरामायणपद्ये केवलं कच्चिदिति स्थाने 'सर्व' इति प्रयुज्य सम्पूर्णमपि पद्यं याथाथ्येन प्रयुक्तमस्ति। तद्यथा —

७. वा.रा. अरण्यं - ६४-२९, ३०।

**सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी।**
**रामा रम्ये वनोद्देशे मया विरहिता त्वया॥**[८]

उक्तपद्ययो: सत्यपि अत्यधिकसाम्ये न कोऽध्यालोचक: कालिदासोऽनुकरणशील इति कथयितुं समर्थोऽभूत्।

लोकेऽपि प्रायो दृश्यत एव यत्प्राणिन: पितृभ्यां जन्मासाद्य स्वकीयस्वतन्त्रास्तित्व-स्वामिनो भवन्ति। यद्यपि पुत्रस्य शिरासु पितृणां रक्तं वहति तथापि तस्य पृथगस्तित्वं स्वीक्रियते। एवमेव शिक्षाया: प्राप्त्यै काव्यरसस्य स्वादाय अथवा काव्यरचनानामभ्यासाय काव्यकर्मणि प्रेरणार्थं वा कवय: प्राक्तनकवीनां काव्यानामाययनं कुर्वन्ति, तदध्ययनस्य सूक्ष्म: संस्कारविशेष: तेषां स्मृतिपटले स्थापयतामेति। स एव संस्कारविशेष: तेषां रचनासु यत्र कुत्रचित्परिफुटितो भवति। काव्यकारणत्रितयेऽपि व्युत्पतेर्विशिष्टस्थानं वरीवर्ति। व्युत्पत्तिं विना कोऽपि कवि: काव्यरचनायां प्रागल्यमघिगन्तुं नैव समर्थो भवितुमर्हति। यतो हि व्युत्पत्तिरेव काव्यकर्मणि कारणम्, कारणाभावे च कार्योत्पत्तिरसम्भवा। व्युत्पत्तिप्रागल्भायैव कवीनां कृते प्राक्तनकाव्याना-मध्ययनमावश्यकमस्ति। अध्ययनेन ये संस्कारास्तेषां धिष्णासु स्थितिं लभन्ते। ते संस्कारा एव तेषां पैतृकसम्पत्तय: सन्ति। अत एषां संस्काराणां प्रभाव: प्राय: नवीनकवीनां रचनासु केषुचित्स्थलेषु अवतरत्येव। कस्यचित्कवे: नूतनायां रचनायां प्राक्ततनकवीनां प्रभावे साम्ये च सत्यपि यद्यसौ स्वप्रतिभया विशिष्टां रसनिष्पत्तिं कर्तुं सफलीभवति, तर्हि तदीया रचना नूतनैव मन्तव्या नानुकृति:। उक्तञ्चानन्दवर्धनाचार्येण —

**पूर्वं दृष्टा अपि ह्यर्था: काव्ये रसपरिग्रहात्।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमा:॥**[९]

अस्मिन्विषये विचारयता डा. चण्डिकाप्रसादशुक्लेनाप्युक्तम् स्वकाव्ये कस्यचित्प्रा-क्तनकवेर्विषयशैलीस्वीकारात् कश्चिदपि कविरुत्कृष्ट-कवीनां गणनायां न गण्यत इति न। काव्योत्तमतां परीक्ष्यमाणैरस्माभिस्तस्य मार्मिकपक्षाय प्राथम्यं प्रदेयम्। यदि कवेर्भावुकहृदयेन वस्तुविशेषस्य मार्मिकपक्षमादाय स्वीयकाव्ये तस्य सोम्याभिव्यक्ति: कृता स्यात् तर्हि तदीयं कार्यं नितान्तमभिनवमुच्चकोटिकञ्च भवितुमर्हति। अस्मिन्नेव विषये दण्डिनापि प्रतिपादितम्-

८. विक्रमोर्वशीयम् ४/२७।
९. ध्वन्यालोक: ४.४।

**संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम्।**

प्रतिभाशालिनः कविद्वयस्य रचनासु साम्यन्तु भवितुमर्हत्येव परं तत्र आलेख्यप्रख्य-समानता प्रतिबिम्बकल्पसमानता च हेया, न साम्यमिदं काव्येषु उपजीव्योपजीवकभावेन वर्तते इति। ताण्डव-राजतरंगिणीमध्ये यत् साम्यं वर्तते तद् आदानस्य प्रभाव इति।

*****

**बृजेशकुमाररिछारिया**
शोधच्छात्रः, साहित्यविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

# शिक्षाशास्त्रमीमांसा

विषय-सूची

# स्वास्थ्यं तथा भावनात्मकजीवनदशायां योगदर्शनस्य महत्त्वम्

**— डॉ. नगेन्द्रनाथझाः**

अद्यतनस्य अस्मिन् भौतिकयुगे व्यक्तेः शारीरिकस्वास्थ्यम् असन्तुलितं भवति। तदर्थम् आवश्यकमस्ति योगशिक्षायाः अध्ययनम्। यतोहि योगशिक्षा एका अमूल्या औषधिरस्ति। अधुना देशसमाजव्यक्त्या सह अपराधविहीनसमाजस्यावश्यकता विद्यते।

अस्मिन् सन्दर्भे स्वामीविवेकानन्दमहोदयेनापि प्रोक्तम् यत् अद्य पुस्तकालयानामपेक्षया क्रीडाक्षेत्राणाम् आवश्यकता अस्ति इति। स्वस्थशरीरे एव स्वस्थमस्तिष्कस्य विकासो भवति। योग एव तादृशमेकं सशक्तसाधनमस्ति यः व्यक्तेः स्वास्थ्यं प्रभावयति। अतः वक्तुं शक्यते - यत् व्यक्तेः मूलभूतावश्यकतासु योगशिक्षा अपि अतीव महत्त्वपूर्णा अस्ति इति।

उक्तमपि — **''नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्'' इति।**

चित्तवृत्तिनिरोधात्मको योग एव दुःखनिवृत्त्यात्मकमोक्षे साक्षाद् हेतुः। पुरुषे दुःखस्य चित्तवृत्तिः उपाधिकत्वात् इति। एतद्विषये निरुपितमस्ति यत्।

**विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि।**
**प्राप्नोति योगी योगाऽग्निदग्धकर्मचयोऽचिरात्॥**[१]

निरुक्तवाक्येभ्यः कर्मक्षयद्वारा ज्ञानस्यैव संक्रान्तावर्णनेन योगस्यापि मोक्षहेतुत्त्वं सिद्धम्। तत्र च संप्रज्ञातयोगेन अखिलसंस्कारदाहकेन प्रारब्धकर्मापि ज्ञानाद् विशेषः, ज्ञानस्य हि प्रारब्धनाशकत्वे बाधिकाऽस्ति तावदेव चिरमृत्यादि श्रुर्तिजीवन्मुक्तिः श्रुतिः स्मृतिश्च योगः।

**योगस्य अर्थः —**

योगशब्दस्य व्यवहारः अनेकेषु अर्थेषु प्रयुज्यते। साधारणरूपेण एतस्यार्थः विद्यते — ''क्रियाविधिः इति। कदाचित् योगस्य व्यवहारः संयोजितकारणाय अपि क्रियते, शाब्दिक-

१. नारदीयपुराण - ४.७.११।

स्यर्थानुसारम्'' योग: ''समाधिरिति'' नाम्ना व्यवह्रियते।[२]

समाधिर्नाम शुद्धभावनया सह आत्मापरमात्मनो: मेलनमेव इति, कस्यापि जीवनस्य ईश्वरे निगूढमेव योग: इत्युच्यते।

**योगदर्शनस्यानुसारम् —**

योगदर्शने योगशब्दस्यार्थ: विद्यते एका साधना इति, अस्यां साधनायां स्वीयचित्तवृत्ते: निरोधं कृत्वा आत्मसंयमेन चित्तं वृत्तिशून्यकरणमेव योगपदवाच्य:।

चित्तवृत्तीनां वासनानाञ्च निरोधाय केचन उपाया: अपि सन्ति, तस्य कृते योग अत्यन्तावश्यकोऽस्ति इति।

**महर्षिपतञ्जलेरनुसारम् —**

महर्षिपतञ्जले: अनुसारं योगस्यार्थ: केवलप्रयत्नमेव। प्रकृतिपुरुषयो: निरोध: इति। मनस इन्द्रियस्य निग्रहणाय अपि योगशब्द: प्रयुज्यते इति। उपनिषदि तथा गीतायाम् योगदर्शनस्य प्रणेतु: पतञ्जले: अनुसारं च मोक्षस्य प्राप्तये नियमेन सह कृतोऽभ्यास एव ''योग:'' इत्युच्यते।

योगशब्दस्य व्युत्पत्ति: संस्कृतस्य युज् धातो: भवति। अस्मिन् अर्थे अस्ति योजनम् इति। तद्रीत्या आत्मन: परमात्मना सह मेलनमेव योग: इत्युच्यते।

**योगस्य परिभाषा: —**

१. योगश्चित्तवृत्तिनिरोध:[३]।
२. तदाद्रष्टु: स्वरूपेऽवस्थानम्[४]।
३. समत्वं योग उच्यते[५]।
४. संयोगयोगइत्युक्तो जीव: परमात्मनो: योग:[६]।

---

२. युज् समाधौ।
३. योगसूत्रम्।
४. योगसूत्रम्।
५. श्रीमद् भगवद्गीता।
६. याज्ञवल्क्यस्मृति:।

५. योग: कर्मसु कौशलम्[७]।
६. योग: तत् पुरातनं श्लोकमस्ति य: मानवं अंधकारात् प्रकाशं प्रति नयति।[८]
७. योग: सा साधनाप्रणाली अस्ति यया जीवात्मपरमात्मनो: एकताया: अनुभवेन सह परमात्मन: सह आत्मन: संयोग: भवति इति।[९]

इत्थं प्रकारेण स्वस्वमतानुसारं महापुरुषा: योगस्य परिभाषा: कथयन्ति। योगस्य एका शाखा अपरा वर्तते यस्यार्थे एकं योगशास्त्रय सूत्रम् दृष्यते। योगानुशासनम् इति।

**योगानुशासनम् —**

प्रत्यूहप्रतिरोधाय शास्त्रादौ योग: प्रयुज्यते, दृष्टांनुश्रविकविषयोर्योगो वियोग: विपाक एवेत्यनुभवतां भवति हि पर्यायानुयोगो विप्रयोगानुयोगानुशासानविषयको वा। अथारभ्यते वा शास्त्रं योगानुशासनं नाम, अथानन्तरं वा यथोक्ताधिकारलाभात्। तथाहि यथोचिताश्रमधर्मानुष्ठाने तत्परस्य पुरुषार्थसिषाधयिषो श्रद्धावत एव योगे प्रवेशाधिकार: सिद्ध योगरहस्यमतिगहनमनना-धिकारी पतितमरण्यरोदनमिवानर्थमापद्यते। योगानुशासनं शास्त्राधिकं वा सूच्यते। विशेष: शेष षष्ठी समासेन, पुरुषार्थसाधनं योगस्तद्वतियोगजिज्ञासूनामवश्यकत्वेन ज्ञातव्यान्यन्यानि चात्रानुशिष्यन्त इति वा प्रतिज्ञाते। योगो मिलनं स च वक्ष्यमाणदृष्टदृश्ययोरेकेत्त्वरूप:, ननु प्रकाशतमसोऽपि विरुद्धस्वभावार्थे दृष्टदृश्ययोरेकत्त्वम्। कल्पशतेनापि नैव सम्भाव्यत इति, मैवमेतयोर्विरूद्धत्वम्। आपातत: प्रतीयमानापि न पारमार्थिकी, तथाहि तमो न प्रकाशविरोधि, किन्तु स्वल्पप्रकाश एव। एवं विद्यया जडत्वेन प्रतीयमानाऽविक्रियमाणाचिदेव जडख्यामाप्नोती-त्यनयोर्मिलनं सिन्धुबिन्दोरिव सुकरं स्वाभाविकञ्चेति। अत एव योगादिषु परिपठित: समाधिर्न योगाभिधानमर्हतीति। अनेन प्रकारेण योगस्य अग्रिमसोपानम् वर्तते। यथा —

**योगश्चित्तवृत्तिनिरोध: —**

प्रतिज्ञातमादौ ताटस्थ्येनावतारयति योग इति। यतश्चित्तस्य वृत्तीनां निरोध: स योग इत्यर्थ: वृत्तिनिरोधस्य चित्तपरिणामरुपत्वान्न योगत्वम्, तत्र तु योगशब्दप्रयोगो मन्त्रयोगादिवद् औपचारिक:, युज्यत एकत्वमापद्यत इति योगो नित्यसिद्ध एकात्मप्रत्ययरुप:। स चाविद्याजन्य

७. श्रीमद् भगवद्गीता।
८. सर्वपल्ली राधाकृष्णन्।
९. स्वामी शिवानन्दसरस्वती।

दृष्टदृश्यादिरूपभेदप्रत्ययावसानकरः अदृश्य बोधानन्दस्वरुप इति परत्र विशद्यते। ततश्च योगाद्-अविद्याया निवृत्तौ तत् कार्याणां चित्तवृत्तीनां सुतरां निरोधः। बाधितानुवृत्तिदर्शनाज्जीवन्मुक्तस्य नैकान्ततः कैवल्या हतस्य तु पुनरुत्थानासम्भवादेकान्तेनैव निरोधः। न च विनापि योगमेकान्त-प्रत्ययरूपं प्रत्याहारादिप्रक्रियाविशेषेणापि वृत्तिनिरोधः सम्भवतीति वाच्यम्, तत्राभावप्रत्यया-लम्बना अज्ञानप्रत्ययालम्बना वा वृत्तिर्वर्तत एवेत्यन्वयव्यरिरेकाभ्यामस्य तदवस्तथा सिद्धा इति। एवं प्रकारेण चित्तवृत्तिनिरोधः पृथक् पृथक् रूपेण विचार्यते इति।

चित्तम् ''चिति'' संज्ञाने इति धातोः निष्पन्नः शब्दः। ''चिति'' धातोः अर्थेऽस्ति संज्ञानम्। अस्मिन् चितिधातु क्त प्रत्ययभूते सति चित्तम् इति शब्दः निष्पन्नः।

अतः चित्तस्य अर्थोभवति ''ज्ञानं करणीयम्'' इति। सांख्यशास्त्रानुसारं प्रकृतेः पुरुषेण संयोगे अचेतनप्रकृतिः चेतनचित्तौ ज्ञानस्तरे परिवर्तितः भवति। अतः इदं स्वीकर्तव्यम् मानवेषु यः चेतनायाः विस्तारः अस्ति स चित्तकारणादेव। दश इन्द्रियाणि, मनः, अहंकारः स्वच्छबुद्धिः तथा च तस्याः अग्रे चिदाकाशपर्यन्तं चित्तस्य विस्तारः वर्तते। सांख्ययोगयोरनुसारं मनसः कार्यं सङ्कल्पनं करणीयम् इति, अहंकारस्य कार्यमभिमानादयः। तथा च बुद्धेः कार्यं सम्पूर्णज्ञानस्य प्रकाशनं करणीयम् इति। किन्तु योगदर्शने प्रयुक्तः चित्तशब्दः मनः, बुद्धिः, अहंकारः एवञ्च चित्तम् एतेषां चतुर्णाम् आन्तरिन्द्रियाणां कृते सङ्केतं धारयति। अतः योगस्य आरम्भिककाले चित्तमनसी समानमेव मत्वा चालयितुं शक्नोति। तथापि इदं स्पष्टं भवेत् यत् मनः चित्तस्य एकः अंशमात्रम् अस्ति। तथा योगस्य समाध्यादयः। उच्चावस्थानानां प्राप्तिः चित्तस्य माध्यमेन भवति उत वा मनांसि इति। स्वयं योगदर्शने अपि विभिन्नस्थलेषु चित्तस्य स्थाने मनः शब्दस्य प्रयोगः अभवत्। त्रिगुणात्मिकया प्रकृत्या समस्तजागतिकपदार्थः त्रिगुणमयः अस्ति। अतः चित्तोऽपि त्रिगुणात्मकः अस्ति सत्त्वरजतमांसि इति। एतेषु त्रिषु गुणेषु क्रमशः प्रख्या (प्रकाश-सात्विकः), प्रवृत्तिः (राजस) स्थितिः (नियमं तामसः) स्वभावः अस्ति अतः चित्तम् अपि अनिवार्यतः प्रख्या, प्रवृत्तिः एवञ्च स्थितिशीलम् भवेत्।

प्रधानप्रकृतेः साम्यावस्थायाः प्रथमविकृतिः अस्तिबुद्धिः (महत्)। बुद्धेः विकृतिः अस्ति अहंकारः, अहंकारस्य मनः एतस्य त्रयस्य समुच्चयः वर्तते चित्तम् इति। चित्तस्य उद्गमः अकृत्रिमतत्त्वात् आकाशात् अभवत्। अतः सः वायोः अपि सूक्ष्मः श्रेष्ठश्च वर्तते। वायुः प्रकृतेः चतुर्थतत्त्वम् वर्तते। चित्तस्य अपेक्षया सः स्थूलः एवञ्च निम्नकोटौ अस्ति। प्राणवायोः भिन्नः अस्ति सः शक्तेः वाचकः अस्ति। तस्य सम्बन्धः आत्मना सह वर्तते प्रकृत्या सह नास्ति।

चित्तं स्वभावत: जडमस्ति परञ्च पुरुषस्य प्रकाशेन प्रकाशितं भवति।

**वृत्तिः —**

''वृतू वर्तने'' धातो: ''क्तिन्'' प्रत्ययेन निष्पन्न: शब्द: वृत्ति: इति। यस्य द्वौ अर्थौ स्त:। प्रथम: व्यवहारात्मक: अपर: वर्तुलाकारभ्रमणम् इति। चित्तं यत् व्यवहारं करोति सा वृत्ति: भवति। येन प्रकारेण जले वर्तुलाकाररुपेण बुद्बुदा: उत्तिष्ठन्ति इति। अनेन प्रकारेणैव चित्तस्य उपमा जलाशयं प्रति भवित, विचारकरणं, भावनाकरणं, अनुभवकरणं, कल्पनाकरण-मादय: सर्वे चित्तस्य वृत्तय: सन्ति। चित्तम् इन्द्रियाणां माध्यमेन विषयानां ग्रहणं करोति। एवञ्च चञ्चलपरिवर्तनशीलगुणानां मध्ये एते निरन्तरपरिवर्तनशीला: भवन्ति। येन माध्यमेन वृत्तय: उत्पन्ना: भवन्ति। अत: वक्तुं शक्यते यत् चित्ते विषयाणां सम्पर्केण ये परिणामा: उत्पन्ना: भवन्ति ते वृत्तय: इति कथ्यन्ते — नि उपसर्गपूर्वकात् ''रुध्'' धातो: निरोधशब्द: निष्पन्न:। यस्यार्थ: भवति अवरोधनम् अथवा नियन्त्रणकरणम् इति। निरोधोत्पन्ने चित्ते वृत्तीना-मवरोधनं भवति, केवलं ''रोध'' शब्देन सह बलपूर्वकम् अवरोधनमिति अर्थ: प्रकटीभवति।

निरोध: स्वयं सहजरूपेण भवति। पतञ्जलियोगे साधनानां अभ्यासै: परिणामा: स्वयं प्रकटिता: भवन्ति। इयमपि योगपद्धतौ विशेषता वर्तते।

वृत्तौ स्वकारणचित्ते: अर्थध्यानमेव निरोध: कथ्यते। क्षिप्तावस्थायां तमस: सत्वस्य च निरोध: अस्ति। मूढावस्थायां सत्वरजसोर्गुणयो: निरोध: वर्तते। विक्षिप्तावस्थायां तमोगुणस्य निरोध: अस्ति। एकाग्रावस्थायां केवलं ध्येयाकारवृत्तिं त्यक्त्वा सकलवृत्तीनां निरोध: भवति। तथा च निरुद्धावस्थायाम् ध्येयाकारवृत्ते: अपि निरोध: भवितुं शक्नोति। अत: चित्तस्रूपञ्चभूमौ किञ्चिद् निरोध: अवश्यं भवति परञ्च सर्वासां भूमीनां निरोध: योग: उच्यते। चित्तवृत्तिनिरोध: योगस्य लक्षणमस्ति। तथा च एकनग्रनिरुद्धावस्थाया: लक्ष्यं निरोध: अस्ति।

निरुद्धावस्थायां चित्ते विषयाभावकारणात् वृत्तीनां निर्वहणपूर्वकं वृत्तीनां प्रतिबिम्बात् पुरुष: स्वमूलरुपे अवस्थित: भवति। किन्तु अवरुद्धावस्थायां भ्रान्ते: कारणात् पुरुष: तेषां शान्त:, धीर: एवञ्च मूढरूपे चित्तवृत्तीनां वृत्या सह एकाकार: भवति। यथा — ''अहं प्रसन्नोस्मि'' ''अहं दु:खी अस्मि'' ''अहं अज्ञानी अस्मि'' एतत् प्रकारेण व्यवहरति। अनेन प्रकारेण बाह्यपदार्थानां अनन्तराया: कारणै: तेषु जायमाना वृत्तय: अपि अनन्ता: भवन्ति। अनेन प्रकारेण वृत्तीनां ज्ञानस्य आसार: उपयोगी वर्तते। अविद्यादय: क्लेशमूलप्रवृत्तय: धर्म:,

अधर्मः तथा च वासना समूहानां उत्पन्नक्लेशः कठिनः भवति। प्रकृतिपुरुषयोः विवेक-युक्तः, विवेकज्ञानसाधनसम्पन्नः यत् वृत्तयः सन्ति ते अक्लिष्टं जानन्ति इति। तेषाम् अवरोधनमेव निरोधः इति।

**चित्तवृत्तिनिरोधस्य उपादेयता —**

भारते नव दर्शनानि सन्ति। तत्र भारतीयदार्शनिकपरम्परायाः सुप्रसिद्धेषु दर्शनेषु योगदर्शनस्य विशिष्टं महत्त्वं वर्तते (धारयति) इति। यौगिकचिन्तनधारायाः वैशिष्ट्यमिदमस्ति यत् स्व दार्शनिकचिन्तने उच्चतमस्थानप्राप्तये एकः सुष्ठुव्यावहारिकाभ्यासरूपधरातलस्य अपि आधारं प्रददाति।

प्रायः इदं कारणमस्ति यत् अन्यदर्शनानां अपेक्षया इदं योगदर्शनं सुशिक्षितेषु जिज्ञासुषु, साधकेषु सामान्यजनेषु समानरूपेण लोकप्रियम् अस्ति। अस्य व्यावहारिकाभ्यासस्य सुसंगता, तारतम्यता एवञ्च तस्य अनुभवकरणोपरान्ते अद्यतनीयाः वैज्ञानिकगणाः अपि अस्य दर्शनस्य निःसङ्कोचोपयोगिता प्रशंसां मुक्तकण्ठेन कुर्वन्ति।

अधुना विशुद्धभौतिकवादियुगे यदा भौतिकसाधनानाम् अधिकसंग्रहः एवं उपयोगः एव मानवमात्रस्य लक्ष्यमस्ति "किमर्थम्" इति प्रश्ने अस्य उत्तरं कोऽपि दातुं न शक्नोति तथा अस्य उत्तरं केषाञ्चिदपिपार्श्वे नास्ति। अधुना एतादृशभयावहकाले आत्मरक्षणाय योग एव परिपूर्णः इति वैज्ञानिकाः आमनन्ति। अस्य योगाभ्यास्य इयमद्भुता विशिष्टता वर्तते अर्थात् योगाश्रितानां कृते भौतिकसंसाधनानाम् उपभोगं कर्तुं योग्यतां ददाति। अपितु असह्यमेव ते योगिनः स्वार्थान् परमार्थं प्रति गन्तुं योग्यताप्रदानं कुर्वन्ति। तेन कारणेन मनुष्यः इह लोके शान्तिपूर्वकं जीवनयापनं कृत्वा ऊर्ध्वलोकं प्राप्नोति। अर्थात् जीवनस्य जन्ममरणस्य प्रक्रियातः निवृत्तिं प्राप्नोति इति। योगमाध्यमेन जनः विविधप्रकारा शान्तिः जीवने अनुभवति। जीवनसङ्गमे सः योगकारणेन विधिप्रकारा शान्तिः जीवने अनुभवति। जीवनसङ्गमे सः योगकारणेन मुक्तस्वच्छन्दतारूपेण जीवनयापनं करोति। केचन नियमाः निम्नाङ्कितप्रकारेण वक्तुं शक्यन्ते।

**स्वास्थ्येन समं भावनात्मकजीवनदशायाः योगः —**

योगः उत्तमस्वास्थ्यम् उत्तमजीवनयापनाय कुञ्चिका वर्तते। कविः कथयति — पहला स्वप्न है निरोगी काया। अर्थात् जीवनस्य प्रथमसाफल्यम्। व्याधिरहितशरीरम्। एवं मनश्च

इति। सामान्यदृष्ट्या पश्यन्ति। तथा केचन निम्नाङ्कितविचाराः निस्सरन्ति। यथा —

१. मानसिकेन्द्रियाणां जागृतिः क्रियाशीलता च।

२. ज्ञानेन्द्रिकर्मेन्द्रियाणां जागृतिः सामर्थ्यं च।

३. उचितप्रकारेण आहारविहारः विश्रामः निद्राश्च।

४. शारीरिकमानसिकयोः अस्वास्थ्यात् मुक्तिः।

५. शरीरस्य सर्वासां संस्थानानां यथा पाचनसंस्थानं, रक्तपरिभ्रमण-संस्थानम्, उत्सर्जन-संस्थानम्, श्वसनसंस्थानम्, नाडीसंस्थानमादीनाम् उचितकार्यप्रणाली।

६. शरीरमनसोः अस्वस्थातायाः समये यथासम्भवोपचारः। अतः उपर्युक्तविवरणानुसारं वक्तुं शक्यते यत् जीवनक्षेत्रे योगः बहुयोगं ददाति कर्म च साधयति।

**सामाजिकनैतिकविकासयोः दिशायां योगः —**

योगसाधनायाः योगः चञ्चलेन्द्रियां वशीकरणं करोति। अनया दृष्ट्या योगः सामाजिकासामाजिकयोः मध्ये कः भेदः इति ज्ञापयति। सामाजिकगुणानामर्जने सहायकः भवति तथाच असामाजिकव्यवहारेभ्यः पृथक् कर्तुं योग्यतां कल्पयति। योगस्य सामाजिकनैतिकजीवने चिन्तने के सहायाः इति विचारयामः —

१. योगः मानवेषु भ्रातृत्त्वं, स्नेहं, सहिष्णुतां, शान्तिं, सहयोगं, संयमं, धैर्यादीन्, नैकान् गुणान् प्रकटयति।

२. योगसाधना संयमविवेकपूर्णञ्च मार्गं प्रशस्तयति।

३. योगस्य चिन्तने तथा अभ्यासनैतिकताभ्यां सह सम्बन्धः वर्तते।

४. शरीरस्य बाह्यशुद्धता तथा च मनसि उपरि पवित्रतायाः सद्गुणं परिकल्पयति।

५. मानवजीवनस्य चत्वारि उद्देश्यानि वर्तन्ते। तानि धर्मार्थकाममोक्षाख्यानि सन्ति। तेषामुपरि सहयोगभावनायाः निष्पादनं करोति योगः इति। अतः वक्तुं शक्यते सामाजिकनैतिकजीवने उत्तमं स्थानं भजते योगः इति।

 ISSN - 2231-2129

### सन्दर्भग्रन्थ सूची


१. योगदर्शनम्।

२. योगसूत्रम्।

३. श्रीमद्भगवद्गीता।

४. याज्ञवल्क्यस्मृतिः।

५. मनुस्मृतिः — चौखम्बा विद्याभवन चौक, पो.वा. ६६ वाराणसी।

६. सर्वदर्शन संग्रह — उमाशंकर शर्मा ऋषि, चौखम्बा विद्या भवन, वाराणसी।

७. वैदिक शिक्षा पद्धति — प्रो. भास्कर मिश्र महर्षिसान्दीपनी राष्ट्रिय वेद विद्या प्रतिष्ठान, उज्जैन।

८. शिक्षाया: सामाजिकाधार: — डॉ. ए.पी. सच्चिदानन्दः, गौरी प्रकाशन, शृंगेरी।

९. उदीयमान भारतीय समाज में शिक्षा — डॉ. जे.एस. वालिया, अहमपाल पब्लिशर्स, गोपाल नगर, जलंधर पंजाब।


*****


**डॉ. नगेन्द्रनाथझाः**

सहाचार्यः

केन्द्रीयसंस्कृतविश्वविद्यालयः,

भोपालपरिसरः, भोपालम्।

# संस्कृतशिक्षणे वर्णाधिगमप्रक्रिया

— डॉ. रमणमिश्रः

**'वर्णाधिगमप्रक्रियया'** आशयः ................

* पाणिनिशिक्षानुसारेण वर्णसंख्यायाः विवरणम्।
* माहेश्वरसूत्राणि वर्णाश्च।
* वर्णभेदाः।
* वर्णाभिव्यक्तिक्रमः।
* ध्वनेरुत्पत्तिप्रक्रियायां सोपानानि।
* पाणिनिशिक्षानुसारेण वर्णानां भेदाः।
* स्वराधारितवर्णानां भेदाः।
* कालाधारितवर्णानां भेदाः।
* उच्चारणस्थानाधारित-वर्णानां भेदाः।
* आभ्यन्तर-बाह्यप्रयत्नाधारित-वर्णानां भेदाः।

संस्कृतभाषायां यः वर्णसमाम्नायः अस्ति। सः भगवता पाणिनिना तपस्तप्त्वा महेश्वरात् लब्धः वर्तते, तत्र च काशिकायाः इदं पद्यं प्रमाणं विद्यते —

**नृत्तावसाने नटराजराजो ननाद ढक्कां नव पञ्च वारम्।**
**उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥**

भाषायां वाक्यानि भवन्ति, वाक्येषु शब्दाः भवन्ति शब्देषु च वर्णाः भवन्ति। अतः भाषायाः महत्त्वपूर्णः घटकः वर्णः विद्यते। वर्णः अर्थात् अक्षरम् इति। वर्णानां समूहः वर्णमाला इति, 'वर्णमाला' इत्यत्र 'वर्णानां माला' इति वर्णमाला अर्थात् अक्षराणां यथाक्रमसूची इत्युच्यते। समान्यतः वर्णाः द्विविधाः भवन्ति —

(क) स्वराः। (ख) व्यञ्जनानि।

भगवता पाणिनिना अष्टाध्याय्याम् इमानि चतुर्दश सूत्राणि उल्लिखितानि —

| | |
|---|---|
| १. अइउण् | २. ऋलृक् |
| ३. एओङ् | ४. ऐऔच् |
| ५. हयवट् | ६. लण् |
| ७. ञमङणनम् | ८. झभञ् |
| ९. घढधष् | १०. जबगडदश् |
| ११. खफछठथचटतव् | १२. कपय् |
| १३. शषसर् | १४. हल् |

एतेषां सूत्राणां यः अन्तिमः वर्णः सः इत्संज्ञकः विद्यते अर्थात् तस्य गणना न भवति। अत एव नव स्वराः, त्रयस्त्रिंशत् व्यञ्जनवर्णाश्च सन्ति। आहत्य द्विचत्वारिंशत् वर्णाः सन्ति। एतेषु वर्णेषु नव स्वराः, पञ्चविंशतिस्पर्शाः, चत्वारः ऊष्माणः, चत्वारः अन्तःस्थाः अपि कथ्यन्ते। पाणिनीयशिक्षायाः अनुसारेण वर्णानां संख्यात्रिषष्टिः, चतुष्पष्टिः वा स्वीक्रियते तथा चोक्तम् —

**त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाः शम्भुमते मताः।**
**प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा॥**
**स्वराः विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।**
**यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः॥**
**अनुस्वारोविसर्गश्च ⨯ क ⨯ पौ चापिपराश्रितौ।**
**दुःस्पृष्टश्चेतिविज्ञेयोलृकारः प्लुत एव च॥**

(पाणिनिशिक्षा ०३-०५)

एतदनुसारेण एकविंशतिस्वराः, पञ्चविंशतिः स्पर्शवर्णाः, चत्वारः अन्तःस्थाः, चत्वारः ऊष्मवर्णाः, चत्वारः यमाः, जिह्वामूलीय-उपध्मानीयौ द्वौ, एकः विसर्गः, एकः अनुस्वारः, एकः दुस्पृष्टः प्लुतलृकारश्चेति। आहत्य चतुष्षष्टिः वर्णाः भवन्ति। वस्तुतः त्रिषष्टिः एव वर्णाः किन्तु यदि दुःस्पृष्टः अपि स्वीक्रियेत तदा चतुःषष्टिर्भवन्ति। अनेन प्रकारेणापि ज्ञातुं शक्यते। तद्यथा —

अ आ आ३ इ ई ई३ उ ऊ ऊ३ ऋ ॠ ॠ३ लृ लृ३ ए ए३ ऐ ऐ३ ओ ओ३ औ औ३।

लृकारस्य प्लुतभेदं विना अचः = २१ प्लुताङ्गीकारपक्षे अचः = २२

हल – वर्णाः

क ख ग घ ङ

च छ ज झ ञ

ट ठ ड ढ ण

त थ द ध न

| | | |
|---|---|---|
| प फ ब भ म | — स्पर्शाः | = २५ |
| अन्तः स्थवर्णाः | — य व र ल | = ४ |
| ऊष्मवर्णाः | — श ष स ह | = ४ |
| यमवर्णाः | — कुं खुं गुं घुं | = ४ |
| अनुस्वारः | — (.) | = १ |
| विसर्गः | — ( ) | = १ |
| जिह्वामूलीयः | — ⌣⌢ | = १ |
| उपध्मानीयः | — ⌣⌢ | = १ |
| दुःस्पृष्टः | — ळ | = १ |

विभिन्नशिक्षाधारेण वर्णानां संख्याविषये वैमत्यं दृश्यते। परन्तु सम्प्रति द्विपञ्चाशत् वर्णानां सर्वे प्रयोगं कुर्वन्ति। ते च – अ आ आ३ इ ई ई३ उ ऊ ऊ३ ऋ ॠ ॠ३ लृए ऐ ओ औ।

| | |
|---|---|
| अचः | = १७ |
| स्पर्शाः | = २५ |
| अन्तःस्थवर्णाः | = ४ |
| ऊष्मवर्णाः | = ४ |
| यमवर्णाः | = ४ |
| अनुस्वारः | = १ |
| विसर्गः | = १ |

**वर्णाभिव्यक्तिक्रमः —**

अन्तःकरणं संस्कारवशात् घटपटाद्यर्थान् स्ववृत्या एकबुद्धिविषयं सम्पाद्य पदार्थबोधेच्छया निजपरिणामविशेषं मनः योजयति। तच्चमनः जाठरमग्निम् अभिहन्ति। आहतोऽग्निम् अभिहन्ति। आहतोऽग्निः प्राणनामकं वायुविशेषं प्रेरयति। कायाग्निप्रेरितो वायुः हृदयदेशे विचरन् मन्दस्वरं जनयति, यश्च स्वरः प्रातःकालीनयज्ञकर्मोपयोगिगायत्रीनामकछन्दसा युक्तोभवति।

सः प्राणवायुः ऊर्ध्वं प्रेरितः शिरोभावो अभिहतः सन् कण्ठताल्वादिदेशं सम्प्राप्य वर्णान् उत्पादयति, तेषामुत्पन्नानां वर्णानाञ्च पञ्चधा विभागः प्रोक्तो वर्तते। वर्णज्ञाः विद्वांसः स्वरेण कालेन स्थानेन आभ्यन्तरबाह्यप्रयत्नाभ्यां च पञ्चधा वर्णभेदान् ऊचुः, स्पष्टम् उच्यमानं तं वर्णभेदं यूयं पाठकाः अपिसम्यक् जानीत इति। उक्तञ्चपाणिनिशिक्षायाम् —

**आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥**
**मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्।**
**प्रातः सेवनयोगं तं छन्दो गायत्रमाश्रितम्॥**
**कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम्।**
**तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्॥**
**सोदीर्णो मूर्ध्न्यभिहितो वक्त्रमापद्य मारुतः।**
**वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः॥**
**स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः।**
**इति वर्णविदः प्राहुर्निपुणं तन्निबोधत॥**

(पाणिनीयशिक्षा ०६-१०)

निष्कर्षतः ध्वनेरुत्पत्तिप्रक्रियायां निम्नलिखितानि सोपानानि भवन्ति —

१. उच्चारणात्पूर्वं शब्दार्थज्ञानम्।
२. अर्थज्ञानात् विवक्षया मनः प्रेरणा।
३. मनसि अग्नेराघातः।
४. अग्नेराघातात् अग्नेः स्थाने वायोः सञ्चारः।
५. वायोः हृदयस्थानं गत्वा ध्वनेरुत्पादनम्।

६. वायोः मूर्ध्नि आहत्य पुनः प्रत्यावर्तनम्।
७. मुखात् विभिन्नानां ध्वनीनामुत्पत्तिः।

वर्णानां भेदविषये पाणिनिशिक्षायां पञ्चविभागाः उक्ताः —




**( क ) स्वरानुसारेणविभागः**

उच्चारणे आरोहावरोहक्रमदृष्ट्या अपि 'अचः' स्वरस्य त्रयो भेदाः भवन्ति, उदात्त-अनुदात्त-स्वरितरूपाः।




**१. उदात्तस्वरः —** 'उच्चैरुदात्तः' ताल्वादिस्थानेषु ऊर्ध्वभागतः निष्पन्नोऽच् उदात्तसंज्ञको भवति। यथा आ, ए, इत्यत्र उभावपि उदात्तौ।

**२. अनुदात्तस्वरः —** 'नीचैरनुदात्तः' ताल्वादिषु अधोभागेषु निष्पन्नः अचः अनुदात्तसंज्ञको भवति यथा - अर्वाङिति।

**३. स्वरितस्वरः —** उदात्तत्वम्, अनुदात्तत्वम् इत्युभयोः यस्मिन् अचि सम्मिश्रणं भवतिसः स्वरितस्वरो भवति यथा — कवोऽश्व रथानां न येऽराः। एवम् 'अचः' नवभेदाः सञ्जाताः। ते नवनिधाः अचः अनुनासिकानुनासिकभेदेन द्विधा भूत्वा अष्टादशसंख्याकाः भवन्ति।

**( ख ) कालानुसारेणविभागः —**

मतः अचः (स्वरवर्णस्य) त्रयोः भेदाः भवन्ति - ह्रस्व-दीर्घ-प्लुतरूपाः।




**१. ह्रस्वस्वरः —** यस्य 'अचः' उच्चारणे एकमात्रिकोच्चारणकालः अपेक्ष्यते, सः ह्रस्वस्वरः, यथा — अ, इ, उ इत्यादयः।

**२. दीर्घस्वरः —** यस्य 'अचः' उच्चारणे द्विमात्रिकोच्चारणकालः अपेक्ष्यते, सः दीर्घस्वरः, यथा — आ, ई, ऊ इत्यादयः।

**३. प्लुतस्वरः —** यस्योच्चारणे त्रिमात्रिकोच्चारणकालः अपेक्ष्यते, सः प्लुतस्वरः, यथा — आ३।

**( ग ) उच्चारणस्थानमनुसृत्य वर्णानां विभागः —**

उच्चारणानुसारेण वर्णानाम् अष्टौविभागाः सन्ति। ते च

**अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।**
**ह्वामूलं च दन्ताश्च नासिकोष्ठौच तालुच॥**

(पाणिनिशिक्षा - १३)

**१. कण्ठस्थानिनः वर्णाः —** 'अकुहविसर्जनीयानां कण्ठः' इति सूत्रानुसारम् अष्टादशभेदाः अवर्णः, कवर्गः, हकारः विसर्गश्च।

**२. तालुस्थानिनः वर्णाः —** 'इचुयशानां तालु' इति सूत्रानुसारम् अष्टादशभेदाः इवर्णः, चवर्गः, यकारः, शकारश्च।

**३. मूर्धास्थानिनः वर्णाः —** 'ऋटुरषाणां मूर्धा' इति सूत्रानुसारम् अष्टादशभेदाः ऋवर्णः टवर्गः, रेफः, यकारश्च।

**४. दन्तस्थानिनः वर्णाः —** 'लृतुलसानां दन्ताः' इति सूत्रानुसारं द्वादशभेदाः लृवर्णः तवर्गः, लकारः, सकारश्च।

**५. औष्ठस्थानिनः वर्णाः —** 'उपूपध्मानीयानामोष्ठौ' इति सूत्रानुसारम् अष्टादशभेदाः उवर्णः, पवर्गः उपध्मानीयः ᳲ प ᳲ फ।

**६. नासिकास्थानिनः वर्णाः —** 'ञमङणनानां नासिका च' इति सूत्रानुसारं ञ्, म्, ङ्, ण्, न् वर्णाः अनुस्वारश्च।

**७. कण्ठतालुस्थानिनः वर्णाः —** 'ओदोतौ कण्ठोष्ठम्' इति सूत्रानुसारम् एकारः द्वादशविधः ऐकारश्च द्वादशविधः।

**८. दन्तोष्ठस्थानिनः वर्णाः —** 'वकारस्य दन्तौष्ठम्' इति सूत्रानुसारं वकारः।

**९. जिह्वामूलीयस्थानिनः वर्णाः —** 'जिह्वामूलीयस्य जिह्वामूलम्' इति सूत्रानुसारं ᳲ क ᳲ ख।

**( घ ) प्रयत्नानुसारेणवर्णानां विभागः —**

प्रयत्नो द्विधा भवति - आभ्यन्तरो बाह्यश्च।

आभ्यन्तरप्रयत्नाः - पञ्चभवन्ति-स्पष्टः, ईषत्स्पृष्टः, ईषद्विवृतः, विवृतः संवृतश्च।



एतेषाम् आभ्यन्तरप्रयत्नानाम् अनुसारेण वर्णानां विभागः अधस्तात् प्रस्तूयते —

**१. स्पृष्टप्रयत्नः** — ककारादारभ्य मकारपर्यन्तं पञ्चविंशतेः स्पर्शवर्णानाम् स्पृष्टनामक आभ्यन्तरप्रयत्नः भवति। तथा च वाक्यं कादयो मावसनाः स्पर्शाः तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्।

**२. ईषत्स्पृष्टप्रयत्नः** — यणोऽन्तः स्थाः ईषत्पृष्टम् अन्तः स्थानाम् अर्थात् य र ल व इत्याख्यानां यण्वर्णानाम् ईषत्सपृष्टः प्रयत्नो भवति।

**३. ईषद्विवृतप्रयत्नः** — शल ऊष्माणः ईषद्विवृतम् ऊष्मणाम् अर्थात् श, स, ष, ह इत्येतेषाम् ईषद्विवृतः प्रयत्नो भवति।

**४. विवृतप्रयत्नः** — अचः स्वराः विवृतं स्वराणाम्। अर्थात् अ इ उ इत्यादिस्वराणां विवृतप्रयत्नो भवति।

**५. सम्वृतप्रयत्नः** — ह्स्वाकारस्य प्रयोगे संवृतप्रयत्नो भवति किन्तु प्रक्रियादशायां ह्स्वस्य अकारस्यापि विवृतप्रयत्न एव। एवम् आभ्यन्तरप्रयत्नदृष्ट्या सर्वेषामपि वर्णानां विभागः कृतः।

**( ङ ) बाह्यप्रयत्नः —**

ओष्ठादारभ्य काकलं यावत् मुखं कथ्यते। वर्णानामुच्चारणे मुखस्थानात् बहिर्देशे गलविवरादीनां सङ्कोचविकासरूपः यः प्रयत्नः स एव बाह्यप्रयत्नः। बाह्यप्रयत्नाः एकादश भवन्ति। भाष्यकारेण एतस्य अष्टौभेदाः स्वीकृताः —




**१. विवारः** — गलविलस्य विकासात् **विवारः** भवति।

२. **संवारः** — गलविलस्य सङ्कोचात् **संवारो** भवति।

३. **श्वासः** — वायोः आरोहावरोहक्रमः **श्वासः** इति उच्यते।

४. **नादः** — वर्णोच्चारणे ध्वनिविशेषः **नादः** इति कथ्यते।

५. **घोषः** — वर्णेन सह श्वासस्य गभीरतया ध्वनिविशेषः **घोषः** इति कथ्यते।

६. **अघोषः** — वर्णोच्चारणे ईषत् ध्वनिरूपः **अघोषः** भवति।

७. **अल्पप्राणः** — वर्णानामुच्चारणे तेषां तेषां स्थानानाम् अल्पप्रयोगः **अल्पप्राणः** इति भवति।

८. **महाप्राणः** — वर्णोच्चारणे अधिकस्य वायोः शक्तेर्वा प्रयोगः **महाप्राणः** भवति।

**वर्णाधिगमप्रक्रियायामवधानबिन्दवः —**

* संस्कृतवर्णाक्षरशिक्षणेन सम्बद्धस्य साहित्याध्ययनस्य।
* संस्कृतवर्णमाला शिक्षणस्य स्वरूपाणां सोपानानां च अध्ययनस्य।
* संस्कृतवर्णाधिगमप्रक्रियायाः प्रभावपूर्णसामग्र्याः निर्माणस्य।
* संस्कृतवर्णाधिगमप्रक्रियासम्बद्धानां शोधपत्र-लेख-पत्रिका-समाचारपत्र-अन्तर्जालविषयाणाञ्च अध्ययनस्य।

**सन्दर्भाः**

१. पाणिनीयशिक्षा
२. सामवेदीया गौतमी शिक्षा।
३. लोमशी शिक्षा।
४. सिद्धान्तकौमुदी।
५. संस्कृतकोश (वामन आप्टे)।
६. संस्कृतशिक्षणम्।
७. Sanskrit Manuscripts, University of Toronto.

*****

**डॉ. रमणमिश्रः**
सहायकाचार्यः, शिक्षाशास्त्रविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

# दर्शनमीमांसा

**विषय-सूची**

# अनेकान्तस्याद्वादयोः स्वरूपम्

— डॉ. योगेशकुमारजैनः

अनेकान्तवादः जैनदर्शनस्य वैशिष्ट्यमस्ति। अनेकान्तदर्शनम् अर्थात् जैनदर्शनमिति-एवमिदं जैनदर्शनस्य पर्यायभूतमेव। जैनदर्शनानुसारेण प्रत्येकस्य वस्तुनः स्वरूपमनेकान्तात्मकं विद्यते। समयसारस्यात्मख्यातिटीकायाः परिशिष्टे आचार्यामृतचन्द्रेणातिसरलैः सुष्ठुशब्दैः स्वरूपमस्य निम्नरूपेणविशदीकृतम् —

''तत्र यदेव तत्तदेवातत् यदवैकं तदेवानेकं, यदेवासत् तदेवसत् तदेवसत्, यदेवनित्यं-तदेवानित्यं इति एकैक वस्तु वस्तुत्वनिष्पादक परस्पर विरूद्ध शक्तिभ्य प्रकाशनमनेकान्तः।''[१]

अनेकान्तशब्दः अनेकश्च अन्तश्च इति शब्दद्वयसंयोगेन व्युत्पन्नः वर्तते। अनेकस्यार्थः एकादधिकम्। एकादधिकं द्वापपि अनन्तोऽपि। द्वयोरनन्तानां मध्येऽनेकार्थं सम्भाव्यते। अन्त-शब्दस्यार्थः धर्मः गुणो वा। अत्रानेकस्यार्थः अनन्तो भविष्यति तत्रान्स्यार्थः गुणो ज्ञेयः। अनया व्याख्यया अनन्तगुणात्मकं वस्तु एवानेकान्त इति। यत्रानेकस्यार्थः द्वौ-इति तत्रान्स्यार्थो धर्म इति स्यात्। तदित्थम् ज्ञेयम्-परस्परं विरूद्धप्रतीतिभूतस्य धर्मद्वयस्यैकस्मिन्नेव वस्तुनि वर्तमानमनेकान्तमस्ति।[२]

धर्मो गुणश्च द्वावपि वस्तुनः नित्यावयवौ स्तः। परन्तु द्वयोर्भेदोऽपि विद्यते। धर्माः सदा सापेक्षाः भवन्ति। परस्परं विरूद्धप्रतीयमानाः युगलस्य एवोपलभ्यन्ते। यथा नित्यता-अनित्यता, एकानेकादयः गुणाः। निरपेक्षः विरोधाभासरहिताः भवन्ति यथाऽत्मनः ज्ञानदर्शनसुखादयः। अनेकान्तप्रकरेणमुख्यरूपेण परस्परं विरूद्धप्रतीयमानानां धर्माणामेव चर्चा विधीयते। वस्तुनि सम्भाव्यमानाः परस्परविरूद्धधर्मा एवोपलभ्यन्ते नत्वसम्भाव्याः। यथाऽत्मनि नित्या-नित्यरूप-सम्भाव्यमानाः विरूद्धधर्मास्तु विद्यमानाः सन्ति परन्तु चेतनाचेतनरूप विरूद्धधर्माणामसत्ता विद्यते। वस्तुतः चेतनाचेतनौ परस्परं विरूद्धधर्मौ स्तः। परन्तु नित्यत्वमनित्यत्वञ्च परस्परं विरूद्धौ

१. समयसारस्य आत्मख्याति टीका।
२. अनेकान्तस्याद्वादः पृ. ५-६।

नास्तः। अपितु तु परस्परं विरोधिनौ प्रतीयेते। तेषां सत्ता एकस्मिन् द्रव्ये सहैव प्राप्यते।

परस्परविरोधित्वेन प्रतीयमानानाम् धर्माणां सत्तास्वीकारे वस्त्वभावः सिद्धो भविष्यति। यथा वयं यदि वस्तु एकान्तास्ति स्वमेव स्वीकुर्मस्तदा नास्तित्वस्याभावे सर्वाणि द्रव्याणि परस्परं मिलिष्यन्ति अर्थात् वस्तु व्यवस्थायाः विनाशो भविष्यति। एतद्वैपरीत्ये अस्ति धर्मस्यानुपस्थितो खरविषाणवत् वस्तु-अतत् भविष्यति। एवमेकान्तनित्यवस्तुनि-अर्थक्रिया तथा कार्याभावे तस्याभावः सिद्धोभविष्यति। एकान्त एकान्तानित्यवस्तुनः क्षणानन्तरं पूर्णतः नाशो भविष्यति। अतोऽनेकान्तात् विपरीतमेकान्तात्मकवस्तुस्वरूपस्य कल्पनायां वस्तुनः एव नाशः सिद्ध्यति।

अनेकान्तात्मकवस्तुस्वभावः प्रमाणसिद्धः। जगतः प्रत्येकं वस्तु अस्माकं कृते प्रतिसमयं परिणामेन सह नित्यं प्रतीयते। मनुष्ये बाल-युवा-वृद्धावस्थाः कालपरिवर्तनादेव भवन्ति मनुष्यत्वेन तु सा सदा नित्योऽस्ति। अतः षट्द्रव्याणि-अनेकान्तस्वरूपाणि सन्ति।

वस्तुनोऽनेकान्तस्वरूपं प्रतिबोधिकासापेक्षकथनपद्धतिः स्याद्वादः उच्यते। अनेकान्तो वस्तुस्वभावस्तथा स्याद्वादो वाण्याः धर्मोऽस्ति। अनेकान्तस्याद्वादेव द्योत्यद्योतकभाव सम्बन्धोविद्यते।

**जैनेन्द्रसिद्धान्तकोशे स्याद्वादस्यार्थः एवमुक्तः —**

अनेकान्तमयवस्तुकथनपद्धतिः स्याद्वदोऽस्ति। केनचिदेकेन शब्देन वाक्येन वा निखिल वस्तुनां युगपत् कथनमशक्यत्वात् प्रयोजनवशात् कदाचित् एकं धर्मं मुख्यं-कृत्वा कथनं क्रियते, कदाचिदन्यं वेति। मुख्यधर्मं शृण्वन् श्रोता गौणरूपेणाधर्मान्यमपि स्वीकरोति तस्य निषेधो न भूयादनेन प्रयोजनेन अनेकान्तवादी स्व प्रत्येकवाक्येन सह ''स्यात्-कथंचित्'' इति शब्दप्रयोगं करोति अतः स्यात्पदमविवक्षितधर्मान् गौडस् निद्धाति न तु तस्याभावरूपम्।

स्याद्वादपद्धतौ 'अपि तथा एव' शब्दस्य समानमहत्वं विद्यते। ''अपि'' शब्दः दृढतायाः सूचकः न तु समन्वयस्य अस्य प्रयोगस्य का विधिः यथा यत्रापेक्षाकेवलं कथ्यते ''काचिदपेक्षा'' तत्र ''अपि'' शब्दस्य प्रयोगः आवश्यकः। यत्रापेक्षा स्पष्टा भवति तत्र ''एव'' इति प्रयोगोऽनिवार्यो भवति। यथा प्रत्येकं वस्तुकथंचित नित्यमपि कथंचिदनित्यमपि। यदि इदमेव वयमपेक्षा शब्दसंयोज्य कथयिष्यामः तदेत्थम् कथनीयम् — प्रत्येकं वस्तु द्रव्यापेक्षया-नित्यमेव अस्ति तथा पर्यायापेक्षयाऽनित्यमेव। अपि शब्दः द्योतते यत् वयम् यत्

किञ्चित् कथयामः न तावन्मात्रं वस्तु अन्यदपि। एव शब्दः द्योतते पदानि अनेक कोणेनावलोकने वस्तु अन्यत् बहु अस्ति परन्तु येन कोणेन इदमुच्यते त दित्यमेव नास्ति तत्र शंकावकाशः। अतः अपि शब्दः एव शब्दश्च परस्परौ पूरकौ स्तः न तु विरोद्धः। एवं शब्दः स्वविषये निखिलां शंकां निवार्य दृढतां वितरति तथा अपिशब्दः अपरपक्षविषये भूत्वापि तेषां निश्चित् सत्तां सूचयति न तु तेषां सम्भावनाम्।[३]

एवं शब्दः सम्यगेकान्तस्य सूचकोऽस्ति तथाऽपिशब्दः सम्यगनेकान्तस्येति। अनेकान्त-वादि जैनदर्शनमनेकान्तेऽप्यनेकान्तं स्वीकरोति।

**अनेकान्तोऽप्यनेकान्तः प्रमाणनयसाधकः।**
**अनेकान्तः प्रमाणात्ते तदेकान्तोऽर्पितान्नयात्॥**[४]

प्रमाणनयौ साधनौ यस्यैवं भूतोऽनेकान्तोऽप्यनेकान्तस्वरूपोऽस्ति यतः सर्वाशं ग्राहि-प्रमाणापेक्षया वस्तु अनेकान्तस्वरूपः तथा अंशग्राहिन्यापेक्षया वस्तु-एकान्तरूपं सिद्धमिति।

अतः अनेकान्तस्य, स्याद्वादस्य च सिद्धांतः वस्तुस्वरूपस्य तथ्यरूपेण दिग्दर्शकः आत्मशन्त्या सह विश्वशान्तेरपि प्रतिष्ठापकः विद्यते। अस्मिन् संबंधे सुप्रसिद्धो विद्वान् राष्ट्रकविः रामधारीसिंहदिनकरः कथयति नास्त्यत्र कश्चिद्संदेहः यत् अनेकान्तस्यानुसंधानंभारतस्य अहिंसा साधनस्य चरमोत्कर्षः विद्यते। तथा समस्तसंसारः यथाशीघ्रम् स्वीकरिष्यति चेत् विश्वे शान्तिरपि तथा शीघ्रम् स्थापिता भविष्यति।[५]

*****

**डॉ. योगेशकुमारजैनः**
सहाचार्यः विभागाध्यक्षश्च
जैनदर्शनविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः,
भोपालपरिसरः, भोपालम्।

३. अनेकान्तस्याद्वादः पृ. ८।
४. स्वयंभू स्तोत्र, श्लोकः १०३।
५. संस्कृति के चार अध्याय, पृ. १३७।

# हेत्वाभासाः

— **डॉ. भगवानसहाय शर्मा**

न्यायनये चतुर्विधप्रमाणेषु अन्यतमं प्रमाणम् अनुमानप्रमाणम्। अनुमानप्रमाणेन दृष्टेन लिङ्गेन अदृष्टस्य साध्यस्य निश्चयं कुर्वन्ति दार्शनिकाः। किन्तु येन लिङ्गेन यस्याऽदृष्टस्य साध्यस्य निश्चयो - भवति तद् साध्यस्य तेन लिङ्गेन तदैव सम्भवति यदा सः हेतुः सद् हेतुर्भवति। हेतु दूषकाः एव हेत्वाभासाः भवन्ति। तत्र हेत्वाभासघटक हेतुपदस्य विवेचनं क्रियते — पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनं = लिङ्गप्रतिपादकं वचनं हेतुरित्युच्यते। स च हेतुः लिङ्गपदेनाप्यभिधीयते। लीनम् = अन्तर्हितमप्रत्यक्षमिन्द्रियागोचरमर्थङ्गमयति = बुद्धिविषयतान्नयति यत् तत् लिङ्गम् इत्युच्यते। सः च हेतुः द्विविधः सद्धेतुरसद्धेतुरितिभेदात्।

**(१) सद्धेतुः** — सद्धेतुत्वन्नाम "व्याप्तिपक्षधर्मतावत्त्वं सद्धेतुत्वम्" अर्थात् साध्येन सहाविनाभावसम्बन्धेन युक्तः, पक्षधर्मतायुक्तश्च निर्दुष्टो हेतुः सद्धेतुः। सद्धेतवश्च त्रयोभवन्ति — यथोक्तं लिङ्गं त्रिविधम् — अन्वयव्यतिरेकि, केवलान्वयिकेवलव्यतिरेकि च। एतेषां चान्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी हेतूनां त्रयाणाम्मध्ये योऽन्वय[१]व्यतिरेकीहेतुः सः पञ्चरूपोपपन्न एव स्वसाध्यं साधयितुं क्षमते न, त्वेकेनापि रूपेणहीनः। तानि च पञ्चरूपाणि — (१) पक्षसत्वं (२) सपक्षसत्वं (३) विपक्षासत्वम् (४) अबाधितविषयत्वम् (५) असत्प्रतिपक्षत्वम्। विपक्षव्यावृत्तिः (२) केवलान्वयी हेतुः चतूरूपोपन्न एव स्वसाध्यं साधयति, तस्य विपक्षाद्व्यावृत्तिर्नास्ति, विपक्षाभावात्। (३) केवलव्यतिरेकी हेतुरपि चतूरूपोपन्न एव स्वसाध्यं साधयति, तस्य हि सपक्षवृत्तित्वं (सपक्षेसत्त्वम्) नास्ति, सपक्षाभावात्। केवलान्वयी-केवलव्यतिरेकीत्युभावपि हेतू चतूरूपोपन्न एव स्वसाध्यं साधयतः। चतुर्रुपेषु एकेनापि रूपेणहीनौ हेतौ, अर्थात् त्रिरूपोपन्नंसाध्यं साधयितुं न समर्थौ भवतः।

**असद्धेतुः** — अनुमानवाक्ये यदा हेतुर्व्यभिचारारिदोषयुक्तोभवति, तदा स हेतुरसद्धेतुः भवति न तु हेतुः। असद्धेतुरेव हेत्वाभास इत्युच्यते। व्युत्पत्तिवैचित्र्यात् हेत्वाभासपदमर्थद्वयस्य बोधकं भवति अथवा हेत्वाभासपदस्य द्विविधा व्युत्पत्तिर्भवति, ताभ्यां व्युत्पत्तिभ्यां हेत्वाभास-

पदस्य द्वौ अर्थौ भवत:। तत्र प्रथमव्युत्पत्त्याज्ञायमान: प्रथमार्थ: — हेतुवदाभासन्ते इति हेत्वाभासा: = दुष्टहेतु:, असद्धेतुरित्यादिष्वर्थेषु वर्तते। यो हि वस्तुत: हेतुर्नभवति, किन्तु केवलं पञ्चम्यादिविभक्तिसाम्याद् हेतुवदाभासते प्रतीयते। यद्विषयकं ज्ञानं साक्षाद् परम्परया वा अनुमितिं प्रतिबध्नाति सो हेतुवदाभासमानत्वाद् हेत्वाभास: इत्युच्यते। द्वितीयव्युत्पत्त्याज्ञायमानो द्वितीयार्थ: — आभासन्ते इत्याभासा: = दोषा:। हेतो: आभासा: = हेत्वाभासा: हेतो: दोषा: इत्यर्थ:। दोषाश्च ''सव्यभिचारविरोधसत्प्रतिपक्षासिद्धि: बाधा:''। एकज्ञान विषयप्रकृत-हेतुतावच्छेदकसम्बन्धेनैतद्विशिष्टा: हेतव: दुष्टहेतव: इत्यर्थ:। अनया व्युत्पत्त्या हेत्वाभासपदं-व्यभिचारादि दोषार्थे वर्तते, अर्थात् हेत्वाभासपदार्थ: व्यभिचारादिदोषा:।

**उभयोर्व्युत्पत्योर्मध्येभेद: —** अत्र प्रथमव्युत्पत्त्या हेत्वाभासशब्दस्यार्थ: दुष्टहेतु:, असद्धेतुरिति। द्वितीयव्युत्पत्त्या हेत्वाभासशब्दस्यार्थ: - व्यभिचारविरोधादिदोषा: इति विशेष:।

अत्रान्नम्भट्ट: — ''अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम्''। अस्या: पङ्क्तेरयमाशयो यत् व्यभिचारादिदोषेषु एकोऽपि दोषो यदि हेतौ वर्तते चेत् अनुमित्यात्मकं ज्ञानम्, अनुमिते: करणानि, व्याप्तिपक्षधर्मताज्ञानादीनि वा प्रतिबध्यन्ते। तत्र यथाकथञ्चिदपि अनुमितिर्नजायते। यथा ह्रदोवह्निमान् द्रव्यत्वात् इत्यनुमानं प्रति ह्रदोबह्नयभाववानिति प्रत्यक्षरूपो बाधनिश्चय: प्रतिबन्धक:। तेन ह्रदो वह्निमान् इत्याकारानुमितिर्नोदेति।

व्यभिचाराख्यदोषविशिष्टो हेतु: सव्यभिचार नामको हेत्वाभास:। विरोधाख्य दोष-विशिष्टोहेतु: विरुद्ध:, प्रतिपक्षाख्यदोष विशिष्ट: हेतु: सत्प्रतिपक्ष:, असिद्ध्याख्यदोष विशिष्टो-हेतुरसिद्धि: बाधाख्यदोष विशिष्टोहेतु: बाधितनामक: हेत्वाभास:-इत्युच्यते। सद्धेतुभ्य आवश्य-कानां पूर्वोक्तानां पक्षसत्वं सपक्षसत्वं विपक्षासत्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वम्, पञ्चरूपाणां विवरणम् —

**( १ ) पक्षसत्त्वम् —** पक्षो नाम ''संदिग्ध साध्यवान् पक्ष: तत्र पक्षे हेतो: सत्त्वम्'' (विद्यमानत्वम्)।

**( २ ) सपक्षसत्त्वम् —** सपक्षो नाम ''निश्चितसाध्यवान् सपक्ष:'' तत्र = सपक्षे हेतोरवश्यं सत्त्वम् (अवश्यं विद्यमानत्वम्)।

**( ३ ) विपक्षासत्त्वम्/विपक्षव्यावृत्ति: —** विपक्षो नाम् ''निश्चितसाध्याभाववान्

विपक्ष:'' तस्मात् = विपक्षात् हेतो: निश्चितव्यावृत्ति: स्यात्। अर्थात् विपक्षाद् हेतु: व्यावृत्तो भवेत्।

**(४) अबाधितविषयत्वम् —** ''प्रमाणान्तरावधृतसाध्याभावोहेतुर्बाधितविषय:''। अर्थात् यस्य हेतो: विषय: = साध्य:, तस्याभाव: = साध्याभाव: प्रमाणान्तरेण = प्रबलप्रमाणेन निश्चित: सो हेतु: बाधितविषय:, तद्भिन्नोहेतु: अबाधितविषय: इत्युच्यते। अर्थात् हेतु: अबाधितविषयोभवेत्, बाधितविषयो न भवेत्।

**(५) असत्प्रतिपक्षत्वम् —** सन् प्रतिपक्षोयस्य, अर्थात् यस्य हेतो: प्रतिपक्षो विद्यते स: सत्प्रतिपक्ष:। प्रतिपक्षत्वं नाम — ''साध्यविपरीतसाधकं तुल्यबलं हेत्वन्तरं प्रतिपक्ष:।'' हेतो: यद् साध्यमस्ति तस्माद् विपरीतं, साधकं तुल्यबलं हेत्वन्तरं प्रतिपक्ष इत्युच्यते। अत: हेतु: असत्प्रतिपक्ष: (सत्प्रतिपक्षाभाववान्) भवेत्।

एभि: पञ्चभिर्रूपैर्रूपपन्न एव हेतु: सद्धेतुर्भवति। अन्यथा हेत्वाभासो, अहेतु:, दुष्टहेतु इत्युच्यते। त्रिविधेषु हेतुषु अन्वयव्यतिरेकी हेतुरेव पञ्चरूपोपपन्न: सन् सद्धेतु:। केवलान्वयी तु चतूरूपोपन्नोऽपि सद्धेतुर्भवति, यतो हि अत्र विपक्षाद्व्यावृत्तिर्नास्ति विपक्षाभावात्। केवल-व्यतिरेकीहेतुरपि चतूरूपोपन्न एव सद्धेतुर्भवति, यतो हि अत्र सपक्षेसत्त्वं नास्ति, सपक्षाभावात्। अत: उपर्युक्तेषु पञ्चरूपेषु एकेनापि रूपेणहीनो यो हेतु: स: हेत्वाभास इत्युच्यते। ते च हेत्वाभासा: पञ्च भवन्ति। यथोक्तम् विश्वनाथेन न्यायसिद्धान्तमुक्तावल्याम् —

**अनेका[२]न्तोविरुद्ध[३]श्चाप्यसिद्ध[४]: प्रति[५]पक्षित:।**
**कालात्य[६]यापदिष्टश्च हेत्वाभासास्तु पञ्चधा॥**

तर्कसंग्रहकार: सूत्ररूपेण तान् पञ्चहेत्वाभासानेवं निर्दिशति — ''सव्यभिचारविरुद्ध-सत्प्रतिपक्षासिद्धबाधिता: पञ्च हेत्वाभासा:''। ते पञ्च यथा —

(१) सव्यभिचार:/अनैकान्त:/अनेकान्तिक:
(२) विरुद्ध:
(३) सत्प्रतिपक्ष:/प्रकरणसम:/प्रतिपक्षित:
(४) असिद्ध:
(५) बाधित:/कालाव्ययापदिष्ट:।

एतेषां पञ्चहेत्वाभासानां विवरणं प्रस्तूयते —

**( १ ) सव्यभिचारः —** अनैकान्तिकः/अनैकान्तः सव्यभिचारः एवानैकान्तिकः अनेकान्तोवेत्युच्यते। अत एवोक्तम् — ''सव्यभिचारोऽनैकान्तिकः''। अनैकान्तिकत्वन्नाम — एकस्मिन् पक्षे अन्तो = निश्चयोयस्य स एकान्त = अव्यभिचारी। एकान्त एव ऐकान्तिकः स्वार्थे ठञ्, न ऐकान्तिकः = अनैकान्तिकः = सव्यभिचारी। अर्थात् यः सदा एकस्यैवास्तिके, तेनैव सहचरितो भवति, स ऐकान्तिकः। यः एवम् (एकस्मिन् पक्षे) न भवति सोऽनैकान्तिकः। अनेकैः सहचरतीति सव्यभिचाराख्य हेत्वाभासः। व्यभिचारोनाम साध्यविपरीतताव्याप्तस्य-तन्नियमाभावो व्यभिचारः। अर्थात् हेतुः यन्नियमबलात् गमकः - साध्यस्यानुमापको भवति, तस्य नियमस्याभावोव्यभिचारः। व्यभिचाराख्यदोषेण विशिष्टव्यभिचारस्याश्रयो वा हेतुः सव्यभिचारः हेत्वाभासः इत्युच्यते। स च साधारणासाधारणानुपसंहारी भेदात् त्रिविधः भवति। तच्च भेदत्रयं विव्रियतेऽत्रः —

**( १ ) साधारणानैकान्तिकः —** साध्याभाववद्वृत्तिसाधारणोऽनैकान्तिकः। साध्यस्याभावः = साध्याभावः साध्याभावोऽस्यास्तीति = साध्याभाववान् अस्मिन् साध्या-भाववति, साध्याभाववतिवृत्तिः साध्याभाववत्वृत्ति, स एव साधारणोऽनैकान्तिकः। यत्र साध्य-स्याभावोऽस्ति (स्याद्वा) तत्रापि (विपक्षे) विपक्षस्थले हेतोः सत्वात्, विपक्षव्यावृत्तत्वरूप-धर्मरहितत्वात् साधारणोऽनैकान्तिकः। अर्थात् पक्षसपक्षविपक्षवृत्तित्वं साधारणत्वमिति फलितम्। यथा — पर्वतो वह्निमान् प्रमेयत्वादित्यनुमाने बह्निमत्वं साध्यम्, पर्वतः पक्षः, प्रमेयत्वादिति हेतुः। अत्र वह्न्यभावस्थले अथवा वह्न्यभाववति, साध्याभाववति ह्रदेऽपि प्रमेयत्वस्य (हेतोः) विद्यमानत्वात्, सद्धेतोः विपक्षासत्वरूपधर्म रहितत्वात् एकान्तत्वाभावात्, सव्यभिचाररूपदोष-युक्तत्वाच्च प्रमेयत्वम् न हेतुरपितु हेत्वाभावः प्रमेयत्वहेतोः वह्न्यभाववत्वृत्तित्वरूपव्यभिचारे ज्ञाते, वह्न्यभाववद-वृत्तित्वरूपव्याप्तिज्ञान प्रतिबन्धोऽस्य फलमस्ति। अन्यदनुमानं शब्दो प्रमेयत्वादित्यपि वक्तुं शक्नुमः।

(२) असाधारणानैकान्तिकः — सर्वसपक्षविपक्ष व्यत्तः पक्षमात्रवृत्तिरसाधारणः। सर्वसपक्षविपक्ष व्यावृत्तत्वन्नाम निश्चिद-साध्यवदवृत्तित्वम्। साध्यवदवर्त्तित्वन्नाम साध्यासामाना-धिकरणत्वम् अर्थात् यो हेतुः सपक्षविपक्षाभ्यां व्यावृत्तः, सपक्षसाध्यनिश्चयवत्सु, विपक्षेषु = साध्याभावनिश्चयवत्सु च न वर्तते, केवलं पक्षमात्रे वर्तते सोऽसाधारणनामकोव्यभिचारः। यथा

— शब्दोनित्य: शब्दत्वादित्यनुमानवाक्ये, पक्ष: = शब्द: साध्यम् = नित्यत्वम्, हेतु: = शब्दत्वादिति। अत्रशब्दत्वादिति हेतुना नित्यत्वं साध्यते। सद्हे सपक्षसत्वं विपक्षाद्व्यावृत्त-त्वमपेक्षते। अत्र (सपक्षे) यत्र नित्यत्वमस्ति यथा अकाशादय: सपक्षा: तत्र हि न शब्दत्वं वर्तते, किञ्चानित्य घटादिष्वपि (विपक्षे) शब्दत्वं न वर्तते, केवलं पक्षे (शब्दे) एव शब्दत्वं (हेतु:) वर्तते। अत एवोक्तम् — ''शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति। अस्यापरमुदाहरणं यथा — भूर्नित्यागन्धवत्वात्'' अत्र गन्धवत्त्वं सपक्षान्नित्यात् विपक्षात् चानित्यात् व्यावृत्तं भूमात्रवृत्ति: वर्तते।

(३) अनुपसंहारी अनैकान्तिक: — अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा - सर्वमनित्यम् प्रमेयत्वादित्यनुमाने पक्ष: = सर्वम् (सर्वपदार्थ:) साध्यम् = अनित्यत्वम्, हेतु: = प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वात् दृष्टान्ताभावात् अन्वय ''व्याप्तिज्ञान = व्यतिरेकव्याप्तिज्ञानोभयसामग्री सपक्षविपक्षयोरभावात् नास्ति सर्वस्यैव पक्षत्वात् पक्षातिरिक्ता-प्रसिद्धेरर्थात्'' निश्चितसाध्यवतोनिश्चितसाध्याभाववतश्चाप्रसिद्धरुभयोरिप व्याप्तिर्नास्ति।

अत्र यत्र यत्र प्रमेयत्वं तत्र तत्रानि - यत्र यत्र नित्यत्वाभाव: तत्र तत्र प्रमेयत्वाभाव इत्युभयोर्दृष्टान्ताभावो विद्यते। वस्तुतस्तु अन्ताभवाप्रतियोगीसाध्यादिकमेवानुपसंहारिमिति फलितार्थ:।

**(२) विरुद्ध: —** साध्याभावव्याप्त:, हेतुर्विरुद्ध:। अभावात् साध्याभावव्याप्तोनाम साध्याभावव्याप्तिम् साध्याभावव्याप्तिश्च साध्याभावनिरूपितव्यतिव्याप्तिरित्यर्थ:। अर्थात् यो हेतु: साध्यसाधनप्रयुक्तस्सन् साध्याभावमेव साधयेत्, तदा असौ हेतु: विरुद्ध: इत्युच्यते। यथा — शब्दो नित्य: कृतकत्वात् घटवद् अनुमाने पक्ष: = शब्द:, साध्य नित्यत्वम् हेतु: = कृतकत्वम्, उदाहरणम् - वदिति। अत्र कृतकत्वेन हेतुना साध्या-भावसाध्यस्य = नित्यस्याभावोऽनित्यत्वमेव साध्यते। यत्र यत्र कृतकत्वम्, तत्र तत्रानित्वम् इति व्याप्त्या साध्याभावव्याप्तिम् भवत्ययं कृतकत्वं हेतु:। कृतकत्वेन हेतुना त्वनितयत्वं साध्यते न तु नित्यत्वम्। अत एवोक्तम् — ''अत्र कृतकत्वं हि साध्यनित्यत्वपिरीतानित्यत्वेन व्याप्तम्। यत्कृतकं तदनित्यमेव न नित्य-मित्यत: कृतकत्वम् विरुद्धमस्ति''। अत्र विरोधाख्योदोषोऽस्ति। प्रकृतानुमाने साध्यनित्यत्वस्य विरोध: क्रियते। अत: विरोधाख्यदोषयुक्तत्वात् ? कृतकत्वमिति हि विरुद्धाख्य: हेत्वाभास: न तु हेतु:।

अत्र विरुद्धेति हेत्वाभासेन पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारक हेतु ज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धोजायते एतदेवास्यफलम्। एवमेव फलं सत्प्रतिपक्षेऽपि भवति, परन्तु सत्प्रतिपक्षे द्वौ हेतू, विरुद्धे एको हेतुरिति अपेक्षते। य: साध्यसाधकत्वेनोपन्यस्य-मानोऽपि साध्याभावमेव साधयति। सत्प्रतिपक्षस्थले तु तुल्यबलशालीनौ द्वौ हेतू भवत:, एक: साध्यसाधकत्वेनोपन्यस्त: यथा — शब्दोऽनित्य: कार्यत्वादिति (घटवद्) अत्र श्रावणत्वात् किञ्च कार्यत्वादिति द्वौ हेतू स्त:, इति विरुद्ध: सत्प्रतिपक्षयोर्भेद:।

(३) सत्प्रतिपक्ष:/प्रकरणसम:/प्रतिपक्षित: — सन् (अस्ति) प्रतिपक्षो यस्य स: सत्पक्ष:। साध्यविपरीतसाधकं समानबलं हेत्वन्तरं प्रतिपक्ष: इतयुच्यते। अतुल्यबलं हेतु: स न प्रतिपक्ष:। अर्थात् यस्य हेतो: साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षसाध्यस्याभाव: = साध्याभाव:, तस्य साधक: साध्याभावसाधक:। अर्थात् साध्याभावप्रतिहेतुमत्पक्ष: साध्या-भावस्यानुमापकं साध्यविपर्ययसाधकं वा अन्यो हेतु: = हेत्वन्तरं विद्यते स: सपक्ष: इत्यर्थ:। यथा — शब्दोऽनित्य: कार्यत्वात् (नित्यधर्मरहितत्वात्) घटवद्, इत्यत्र हेतुकार्यत्वाद् (कार्यत्वम्), साध्यम् = अनित्यत्वम् अत्र कार्यत्वादिति हेतुना अनित्यत्वं साध्यते। अत्र लक्षणसङ्गतिरित्थं — यस्य हेतो: कार्यत्वादिति हेतुसाध्यं यदनित्यत्वं, तस्य=साध्यस्य अनित्यस्य अभावो = नित्यत्वसाधकान्यो हेतु: शब्दो नित्य: श्रावणत्वात् शब्दत्ववद् (अधर्मरहितत्वात् वा) विद्यते। अर्थादनेन हेतुना शब्दस्यनित्यत्वं साध्यते। अत: साध्यविपरीततुल्यबलस्य हेत्यन्त-रस्यसत्वात् (कृतकत्वादनित्यत्वपक्षे, श्रावणत्वादितिनित्यत्वपक्षे) न हेतु: अपितु हेत्वाभासो-ऽस्ति। अत्र पञ्चरूपेषु असत् प्रतिपक्षत्वनामक: रूप: नास्ति। अत: उक्तानुमानेकृतकत्वस्य श्रावणत्वस्य च न हेतुत्वम् पञ्चरूपोपन्नत्वाभावात्। सद्धेतो: पञ्चरूपोपन्नत्वादिति। अयमेव प्रकरणसम: प्रतिपक्षित: इत्यप्युच्यते।

(४) असिद्ध: — व्याप्तस्य हेतो पक्षधर्मतया प्रतीति: सिद्धिस्तदभावोऽसिद्धि:। असिद्धयाख्य दोषेणविशिष्टोहेतुरसिद्ध:। लिङ्गत्वेनासिद्धो हेतुरसिद्ध:। अर्थात् यस्मिन् हेतौ, लिङ्गत्व-व्याप्तिपक्षधर्मता च (उभयम् अथवा उभयोरेकम्) सिद्ध: = निश्चित: न स्यात्, सो हेतुरसिद्ध:। तत्र आश्रयासिद्धस्वरूपासिद्धयो: पक्षधर्मता न सिद्धयति, व्याप्यत्वासिद्धे व्याप्तिर्न सिद्धयति। स चार्सिद्धस्त्रिविध: — (१) आश्रयासिद्ध:, (२) स्वरूपासिद्ध:, (३) व्याप्यत्वासिद्ध:।

(१) आश्रयासिद्धः — आश्रयासिद्धिर्दोषो यस्मिन् हेतौ वर्तते स आश्रयासिद्धनामको हेत्वाभास:। आश्रयासिद्धिर्नाम पक्षतावच्छेदकविशिष्टपथप्रसिद्धिः, अर्थात् पक्षताया अवच्छेदक: यो धर्म: तद्विशिष्टस्य पक्षस्य अप्रसिद्धिरित्यर्थो यस्य हेतोराश्रय एव नावगम्येत स आश्रयासिद्धः पक्षाप्रसिद्धत्वमाश्रयासिद्ध इति वा। यथा — गगनारविन्दं सुरभिः अरविन्दत्वात् सरोजार-विन्दवत्। अत्र गगनारविन्दम् आश्रय: स नास्त्येव। अत्र गगनारविन्दं = पक्ष: सौरभत्वं (सेमयत्वं) साध्यम् अरविन्दत्वात् = हेतुः सरोजारविन्दवत् इत्युदाहरणम्। अत्र गगनाश्रयत्व-विशिष्टारविन्दं पक्षोवर्तते। स च नास्त्येव। अत: पक्षस्यासिद्धत्वात् (अप्रसिद्धसिद्धा) हेतौ आश्रयासिद्धिदोषत्वादुक्तानुमानस्थले अरविन्दत्वादिति हेतुर्नास्त्यपितु हेत्वाभासोऽस्ति। अत्र पक्षस्याभावात् पञ्चरूपेषु हेतोः पक्षसत्वरूप: नास्ति।

(२) स्वरूपासिद्धः — स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः, तद्वान् स्वरूपासिद्धः। अर्थात् यो हेतुराश्रये नावगमयते सः स्वरूपासिद्धः। अर्थात् यस्य हेतो: आश्रयस्तु अस्ति, किन्तु हेतो: आश्रये (स्थितिः) पक्षसत्त्वं न भवति। आश्रयासिद्धे तु आश्रयस्य (पक्षस्य) अस्तित्वमेव न भवति। यथा — शब्दोऽनित्यः गुणो वा चाक्षुसत्वात् घटवत्। अत्र पक्ष: = शब्दः, साध्यम् = अनित्यत्वम्, हेतुः = चाक्षुषत्वम्, उदाहरणं = घटवत्। अत्र हेतुः (चक्षुषत्वं) पक्षे = शब्दे नास्ति, शब्दस्य श्रावणत्वत्। अर्थात् शब्द: श्रावण: = श्रवणेन्द्रियस्य विषयोऽस्ति। अत्र यच्चाक्षुषत्वं हेतु: प्रदर्शित: स शब्दे नास्ति, चक्षुरिन्द्रियेण शब्दोग्रहीतुं न शक्यते, शब्दस्य श्रोत्रेन्द्रियग्राह्यत्वात्। अत्रापि हेतो: पक्षसत्वरूपो नास्ति। अत: स्वरूपासिद्धोऽयं हेतुर्नास्ति अपितु हेत्वाभास: वर्तते।

सोऽयं स्वरूपासिद्धः चतुर्विधो भवति।

(१) शुद्धासिद्धः (२) भागासिद्धः
(३) विशेषणासिद्धः (४) विशेष्यासिद्धः

(१) शुद्धासिद्धः — स्वरूपासिद्धः एव शुद्धासिद्धः। यथा — शब्दागुण: चाक्षुषत्वात् ............. श्रावणत्वात्। अस्य व्याख्यानं पूर्वमभवत्।

(२) भागासिद्धः — हेतोरेकस्मिन् भागे (पक्षे) असिद्धत्वम् भागासिद्धत्वम्। यथा — पृथिव्याः यश्चत्वार: (पृथिव्यप्तेजवायु) परमाणवो नित्याः भवन्ति गन्धवत्वात्। अत्र साध्यम् नित्यत्वम्, पक्ष: = पृथिव्यादय: चत्वार: हेतुः = गन्धवत्वम्। अत्र पक्षीकृतेषु सर्वेषु पृथिव्यादिचतुर्षु गन्धवत्वं हेतुर्नास्ति, गन्धस्य पृथिवीमात्रवृत्तित्वात्। अत: प्रकृतानुमाने भागे

पृथिवीं विहाय त्रिषु (अप्तेजवायुषु) गन्धवत्वस्य हेतोः, असिद्धत्वात् गन्धवत्वं भागासिद्धनामको हेत्वाभास न तु हेतुः।

(३) विशेषणासिद्धः — वायुः प्रत्यक्षः रूपवत्वे सति स्पर्शवत्वाद् इत्यत्र पक्षः = वायुः साद्ध्यम् = प्रत्यक्षत्वं, हेतुः = रूपवत्वे सति स्पर्शवत्वस्य अत्र रूपवत्वं विशेषणत्वं वायौ न तिष्ठति। अतः तद्विशिष्टस्य स्पर्शवत्वस्यापि वायौ अवृत्तित्वात्, विशेषणाभावे विशिष्टस्याप्यभावात्, रूपवत्वेसतिस्पर्शवत्वस्येति हेतोः विशेषणासिद्धत्वं निःशङ्कम्।

(४) विशेष्यासिद्धः हेत्वाभासः — यथा - वायुः प्रत्यक्षः स्पर्शवत्वे सति रूपवत्वादित्यनुमाने। अत्र पक्षः = वायुः साध्यम् = प्रत्यक्षत्वम्, हेतुः = स्पर्शवत्वे सति रूपवत्वम्। अत्र हेतौ स्पर्शवत्वम् विशेषणम् रूपवत्वम् विशेष्यम्। यद्यपि वायौ स्पर्शवत्वमस्ति, तथाप्युदाहरणे विशेष्यस्य रूपवत्वस्य वायौ अभावात् स्पर्शत्वविशिष्टस्यापि अभावो भवति। अयमेव विशेष्यासिद्धः हेत्वाभासः। एतस्य स्वरूपासिद्धत्वं तु विशेष्याभाव प्रयुक्तं विशिष्टाभावादस्ति इति ज्ञेयम्।

अपरमुदाहरणं यथा — शब्दो नित्योऽस्पर्शत्वे सति द्रव्यत्वादिति। अत्रापि हेतु अस्पर्शत्वविशेषणेन विशिष्टोऽस्ति। विशेष्याभावे विशिष्टस्य स्वरूपं न भवति, विशिष्टश्च नास्त्येवात्र।

(३) व्याप्यत्वासिद्धः — यस्य हेतोर्व्याप्तिः न सिद्ध्यति स हेतु व्याप्यत्वासिद्धः हेत्वाभासः इत्युच्यते। हेतुस्साध्ययोर्द्विधा व्याप्तिर्न सिद्ध्यति - (१) व्याप्तिग्राहकप्रमाणाभावात् (२) उपाधिसद्भावात्।

(१) व्याप्तिग्राहकप्रमाणाभावात् व्याप्तेरनगमनम् — यथा - शब्दः क्षणिकः सत्त्वात् यत् सत् तत् क्षणिकम्, यथा जलधरपटलम् तथा च शब्दादिरिति। अत्र पक्षः = शब्दः, साध्य क्षणिकत्वम्, हेतुः = सत्त्वम् (सत्त्वात्)। अत्र हेतुसाध्ययोः (सत्त्वक्षणिकत्वयोः) व्याप्तिर्न-सिद्धत्ति। अर्थात् यत् यत् सत्त्वं तत्तत् क्षणिकमिति सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहकं प्रमाणं नास्ति उपर्युक्तानुमाने व्यापितग्राहकप्रमाणाभावात् व्यप्यत्वासिद्धः इति प्रथमप्रकारम् अस्वीकृत्य उपाधिसद्भावादिति द्वितीयं प्रकारं स्वीकुर्मश्चेत् पक्षे = शब्दादिषु साध्यम् = क्षणिकत्वम् (उपाधिभूतधर्मेण) प्रयुक्तं स्यात्, न तु सत्त्वे इति हेतुना। तच्च न नैयायिकामिमतम्। एतस्मात् कारणात् उपाधिसद्भावात् इति द्वितीयप्रकारो न स्वीक्रियते।

(२) उपाधिसद्भावात्व्याप्यत्वासिद्ध: — उपाधिसद्भावोनाम उपाधे: विद्यमानत्वम्। तस्मात् उपाधे: विद्यमानत्वात् यो हेतुरसिद्धो भवति स उपाधिसद्भावात् व्याप्यत्वासिद्ध हेत्वाभास इत्युच्यते। यथा — क्रत्वन्तर्वर्तिनी हिंसा अधर्मसाधनम् हिंसात्वात् क्रतुबाह्यहिंसावत्। अत्र पक्ष: क्रत्वन्तर्वर्तिनी हिंसा, साध्यम् = अधर्मसाधनम् हेतु: = हिंसात्वात्, उदाहरणम् = क्रतुबाह्यहिंसांवत्। अत्र साध्ये = अधर्मसाधने हिंसात्वमिति हेतु: प्रयोजकोनास्ति, किन्तु निषिद्धत्वमेव प्रयोजकम् प्रयोजकश्चोपाधि:। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधि:। अर्थात् यो धर्म: साध्यस्य व्यापक: सन् साध्यस्याव्यापको भवति स उपाधिरिव्युच्यते। यथा प्रकृतानुमाने - साध्यस्याधर्मसाधनस्य निषिद्धत्वं व्यापकोधर्मोऽस्ति। यतो हि यत्र यत्राधर्म-साधनत्वं तत्र तत्र निषिद्धत्वमस्ति। यत्र यत्र हिंसात्वं तत्र तत्राधर्मसाधनत्वमिति वक्तुमशक्यम् यज्ञीयपशुहिंसाया: निषिद्धत्वाभावात्। एवं रीत्या निषिद्धत्वरूपस्योपाधेर्विद्यमानात् निषिद्धत्व-प्रयुक्त व्याप्त्युपजीवी हेतु: (हिंसात्वम्) व्याप्यत्वासिद्धो हेत्वाभास:।

अस्यापरमुदाहरणं यथा — पर्वतो धूमवान् वह्निमत्वात्। अत्र पक्ष: = पर्वत:, साध्यम् = धूमवत्वम्, हेतु: = वह्निमत्वम्। अत्रार्द्रेन्धन संयोग उपाधिरस्ति। तच्चेत्यम् — साध्यस्य धूमवत्वस्यार्द्रेन्धन संयोग: व्यापक:, यत्र धमूस्तत्रार्द्रेन्धनसंयोग इति। साधनाव्यापकत्वं यथा — यत्रवह्निस्तत्रार्द्रेन्धन संयोग इति नास्ति अयोगोके आर्द्रेन्धनसंयोगाभावात्। अत: सोपाधिक-त्वात् वह्निमत्वं न हेतु:, अपितु व्याप्यत्वासिद्धो हेत्वाभासोऽस्ति।

(५) बाधित:/कालात्ययापदिष्ट: — यस्य साध्याभाव: प्रमाणान्तरेण निश्चित: सो बाधित:। अर्थात् यस्य हेतो साध्यस्यबाध: = साध्याभाव: प्रत्यक्षप्रमाणान्तरेण पक्षे निश्चय: क्रियते, सो हेतु: बाधितविषय: इत्युच्यते। बाधितं साध्यं यस्य स: बाधितसाध्यकम्, तस्माद् बाधितसाध्यकत्वादयं हेतु: बाधित इत्युच्यते। यथा — बह्निरनुष्णोद्रव्यत्वाज्जलवत्। अत्र पक्ष: = वह्नि, अनुष्णत्वं = साध्यम्, द्रव्यत्वादिति हेतु: जलवरित्युदाहरणम्। अत्र द्रव्यत्वादिति हेतो: अनुष्णत्वस्यसाध्यस्य अभाव: उष्णत्वम् अन्यत्प्रमाणं प्रमाणान्तरम् तेन प्रमाणान्तरेण स्पार्शनप्रत्यक्षेण सर्वैरेव ग्रहीतत्वात् द्रव्यत्वादिति हेतु: बाधितविषय:। अर्थादत्र प्रदर्शितानुमान-स्थले द्रव्यत्वादिति बाधितविषयाख्य: हेत्वाभास: न तु हेतु:। अस्य हेत्वाभासस्य प्रात्यक्षिकसाध्यं बाधितनिश्चये जाते साध्यानुमिति प्रतिबन्ध: फलम् इति गोवर्धनाचार्य:। अस्यायमाशय: हेतो: साध्यस्यबाधेनिश्चिते सति हेतुसाध्यानुमिते: प्रतिबन्ध स्व फलमस्ति। अयमेव कालापदिष्ट इत्युच्यते।

## पञ्चहेत्वाभासानांतालिका

| हेत्वाभासाः | अनुमानवाक्यम् |
| --- | --- |
| (१) सव्यभिचारः | |
| (१) साधारणानैकान्तिकः | पर्वतो वह्निमान् प्रमेयत्वात् |
| (२) असाधारणानैकान्तिकः | शब्दो नित्यः शब्दत्वात् |
| (३) अनुपसंहार्थनैकान्तिकः | सर्वमनित्यं प्रमेयत्वात् |
| (२) विरुद्धः | शब्दो नितयः कृतवत्वात् घटवत्। |
| (३) सत्प्रतिपक्षः | शब्दोऽनितयः कार्यत्वात् घटवत्।<br>शब्दोनित्यः श्रावणत्वात् शब्दत्ववत्। |
| (४) असिद्धः | |
| (१) आश्रयासिद्धः | गगनारविन्दं सुरभिररविन्दत्वात् सरोजारविन्दवत्। |
| (२) स्वरूपासिद्धः | शब्दोऽनित्यः गुणो वा चाक्षुषत्वात् घटवत्। |
| (१) शुद्धासिद्धः | शब्दोऽनित्यः गुणो वा चाक्षुषत्वात् घटवत्। |
| (२) विशेषणासिद्धः | वायुः प्रत्यक्षः रूपवत्वे सति स्पर्शवत्वात् |
| (३) भागासिद्धः | पृथिव्यादयश्चत्वारापृथिव्यप्तेजवायुः - परमाणवो नित्याः गन्धवत्वात्। |
| (४) विशेष्यासिद्धः | वायुः प्रत्यक्षः स्पर्शवत्वे सतिरूपवत्वात् |
| (३) व्याप्यत्वासिद्धः | शब्दः क्षणिकः सत्वात्-क्रत्यन्तर्वर्तिनी-हिंसा अधर्मसाधनं हिंसात्वात्। |
| (५) बाधितः | वह्निरनुष्णो द्रव्यत्वाज्जलवत्। |

*****

**डॉ: भगवानसहायशर्मा**
प्राचार्यः
शासकीय-उच्चतर-माध्यमिक-विद्यालयः,
बेखरेड, शबला, दुङ्गारपुर (राजस्थान)।

# प्राच्यपाश्चात्यदिशा बुद्धितत्त्वविमर्शः

— डॉ. अखिलेशकुमारमिश्रः

अवगमनार्थक बुध् धातोः क्तिन् प्रत्यये कृते सति निष्पन्नेयं बुद्धिशब्दः। प्रथमं तत्र विचारयामि का नाम बुद्धिः ? इति जिज्ञासायाम् – **स्मृतिरतीत विषयः मतिरागामि गोचरा। बुद्धिः तात्कालिकिज्ञेया प्रज्ञात्रैकालिका मता।** इति अभियुक्तोक्तिः। एवं बुद्धिर्नाम न किमपि मूर्तं वस्तु परन्तु सा क्रियात्मिका भवति। अर्थात् – **क्रियाकरणसामर्थ्यमेव बुद्धिः भवति।** एवं का आवश्यकता अस्या बुद्धेः ? किं स्वरूपमस्य ? इत्यादयः जिज्ञासासमुत्पन्ने सति विषयोऽयं चितः – **प्राच्यपाश्चात्यदिशा बुद्धिविमर्शः।** तत्र प्राच्यपाश्चात्योभयदार्शनिक-चिन्तनपरायां मानवीयसर्व्वव्यवहारसाधकतत्त्वविषयकचिन्तनमनुदिनं प्रचलत्यदोऽनुसन्धानमेव। अतः सन्दर्भेऽस्मिन्नस्माकम्प्रयासोप्यनुसारत्वितीच्छयानेन अर्थात् प्राच्यपाश्चात्यबुद्धिविमर्शेन सम्बोध्यत॥ अतः प्राच्यपाश्चात्यदिशा बुद्धिविमर्शः क्रमरूपेणाधः प्रस्तूयते —

**साङ्ख्ये बुद्धिः —** अत्र पदार्थविभागः चतुर्धा दृश्यते। प्रकृतिः, विकृतिः, पुरुषः, प्रकृतिविकृति च[1]। अत्र प्रकृतिविकृतौ महदित्यस्यस्वरूपमेवबुद्धिः। अस्याः प्रकृति-विकृतित्वन्नाम प्रकृति जन्यत्वे सति अहङ्कारजनकत्वमेव। तथा हि – **प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः**[2]। अपि चैतद्विवरणङ्गौडपादभाष्येऽपि दृश्यते – इत्थम् –तद्यथा **प्रधानाद् बुद्धिरुत्पद्यते तेनविकृतिः प्रधानस्य विकार एव इति, सैवाहङ्कारमुत्पादयति**[3]। अतः प्रकृति इत्यतः पूर्वोकतमहङ्कारजनकत्वमित्युपपन्नम्। ननु महदादिकिमस्ति। अत्रोच्यते।

**अध्यवसायो बुद्धिधर्मो ज्ञानं विराग ऐश्वर्यम्।**
**सात्विकं रूपमेतद्रूपं तामसमास्माद्विपर्यस्त्वम्॥**[4]

---

१. साङ्ख्यकारिका - ३ श्लोक।
२. तथैव - २२।
३. गोडपादभाष्य-३२ श्लोक।
४. तथैव-२३।

श्लोकेऽस्मिन् बुद्धेः परिभाषा गुणश्चास्ति यत्राध्यवसायत्वम्परिभाषारूपेणास्ति तर्हि धर्मज्ञानविरागैश्वर्यचतुष्टयवृत्तिविशेषः। एतद्विवरणं गौडपादभाष्ये इत्थमस्ति **अध्यवसायो बुद्धिलक्षणम्। अध्यवसयनमध्यवसायः यथा बीजे भविष्यद्वृत्तिकोऽङ्कुरस्तद्वदध्य-वसायोऽयं घटोऽयमित्यध्यवस्यति।**[५] एतदेवाध्यवसायत्वमाश्रित्य गीतायां दृश्यते इदं रूपम् – **व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन**[६] अत्र व्यवसायो निश्चयः। अयं निश्चयस्तु इत्थम् **अन्वयव्यतिरेका ख्येनानुमानेनागमेन च पदार्थपरिशोधन परिनिष्पन्ना हि।**[७] अत्र गीतायाः अभिनवगुप्ताचार्यव्याख्या सा **व्यवसायत्वमित्थम्**[८] व्यवसायात्मिका सर्वस्यैकैव धीः निश्चेतव्यवशात् बहुत्वं गच्छति इयं बुद्धिः सर्वान् विषयानवगाहते तथाहि – **सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्**[९] एतावता व्यवसायत्वम्महत्त्वमिति निश्चितम्।

**न्याये बुद्धिः —**

न्याये षोडशपदार्थाः प्रमुखाः, अत्र द्वितीयः प्रमेयः। अयं हि द्वादशभेदैर्युक्ताः । तेषु पञ्चमी बुद्धिः। सन्दर्भेऽस्मिन् सत्पदार्थोटीका उपस्थाप्यते – **अज्ञानान्धकारतिरस्कारकारकः सकलपदार्थस्यार्थप्रकाशकः प्रदीप इव देदीप्यमानः आत्माश्रयो यः प्रकाशः सा बुद्धिः।**[११] अत्रात्मनः प्रकाररूपेण बुद्धेः विवरणं दृश्यते।

**वैशेषिके बुद्धिः —**

वैशेषिकनये सप्त पदार्थाः। तत्र द्वितीय गुणः स च चतुर्विंशतिसंङ्ख्याकः। अत्र तर्कसङ्ग्रहकारः उल्लिखति यत् – **सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्**[१२] अत्र बुद्धिः लक्ष्या अपि च ज्ञानं पर्यायः अन्यलक्षणम्। लक्षणंघटकव्यवहारवद्मीमांसा तु टीकायां भिन्नास्ति तथा

५. गोडपादभाष्य- २३ श्लोक।
६. श्रीमद्भगवद्गीता – २/४१।
७. गीता अनन्दरिगि व्याख्या – २/४१।
८. अभि. गुप्तव्याख्या- २/४१।
९. साङ्ख्यकारिका- ३५।
१०. न्यायसूत्रम् – १/७/९।
११. भारतीय दर्शन ब.उ.पृ.-५८३।
१२. तर्कसङ्ग्रह – विवरणम्।

 ISSN - 2231-2129

च न्यायबोधिनीटीकायां व्यवहारः शब्दप्रयोगादिः। ज्ञानमृते **शब्दप्रयोगाद्यसम्भवाच्छब्द-प्रयोगादिरुपव्यवहारहेतुतत्त्वंज्ञानस्यलक्षणम्।**[१३] अत्र **बुद्धिः उपलब्धिः ज्ञानं प्रत्यय इति पर्यायाः।**[१४] ननु लक्षणे पर्यायद्वयं कथं प्रयुक्तमित्यत्रोच्यते यदत्र बुद्धि पदेन साङ्ख्यभिमता – प्रकृतेः प्रथम परिणामिनी बुद्धिरग्राह्यातश्चोक्तं बुद्धिर्ज्ञानम्। एवञ्च सर्वव्यवहारहेतुत्वे सति गुणत्वं ज्ञानत्वं बुद्धित्वमपि। अत्र बुद्धेः भेदः द्विविधः।




**विवेक चूडामणिकारमते बुद्धिः —**

भारतीयदार्शनिकप्राङ्गणे श्रीमदाद्यशङ्काचार्यस्य स्थानं सूत्कृष्टमस्ति। एते तु अन्तः करणपर्यायतया बुद्धिं प्रतिपादयन्ति —

निगद्यतेऽन्तः करणं मनोधीः अहङ्कृतिश्चित्तमिति स्ववृत्तिभिः। बुद्धिः पदार्थाध्यवसाय धर्मतः॥[१५] अत्र पदार्थाध्यवसायप्रकृतियुक्तत्वम् इति निरूपितम्। अध्यवसायः पदार्थनिश्चयः एव।

**गीतायां बुद्धिः —** गीतायां बुद्धिविषये बहुविधवर्णनं दृश्यते। प्रथममियन्त्रिविधा सात्विकराजसतामसभेदात्। ततः बहुविधम्।[१६]

**१. सात्विकबुद्धिः —** प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।

१३. न्याबोधिनी टीका।
१४. प्र.भा.पृ.।
१५. विवेक चूड़ामणि -९५।
१६. गीता-१८/३०।

बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ राजसी ॥

**२. राजसी बुद्धिः**[१७] — ययाधर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥

**३. तामसी बुद्धिः—** अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान्वितपरीतांश्च बुद्धि सा पार्थ तामसी ॥[१८]

**४. स्थिरबुद्धिः—** न प्रहृष्येत्वप्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥[१९]

अत्र स्थिर बुद्धित्वन्तु यया मानवः समेषु एकत्वं निर्दोषत्वं निर्विचिकित्सात्वमवगच्छति सा एव।

**५. अचला बुद्धिः —** श्रुति विप्रतिपन्नेतु यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यति ॥[२०]

**६. अर्पितबुद्धिः —** तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।[२१]
मय्यर्पितमनोबुद्धिर्मा मेवैष्यस्यसंयशयम् ॥

अत्रार्पित्वतं तु — समस्तं क्रिया कलापं ब्रह्मैवैति। इति यया सा अर्पितबुद्धिः।

**७. अयुक्तबुद्धिः —** यया निश्चयत्वन्नावगम्यते सा बुद्धिः अयुक्तबुद्धिः।[२२]

**८. पौर्वदैहिकी बुद्धिः —** तत्र तं बुद्धी संयोगे लभते पौर्वदैहिकम्।[२३]

५. सङ्ख्या बुद्धिः — बुद्ध्यावधारणीयमात्मतत्त्वं साङ्ख्यम्।[२४]

---

१७. गीता –१८/३१।
१८. गीता–१८/३२।
१९. गीता – ५/२०।
२०. गीता– २/५३।
२१. गीता– ८/७।
२२. गीता– २/६६।
२३. गीता – ६/४३।
२४. गीता – रा.भा.गीता प्रेस पृ.५३।

६. व्यवसायात्मिका बुद्धिः — मुमुक्षुणा अनुष्ठेये कर्मणि बुद्धिः व्यवसायात्मिका। सा हि आत्मयाथात्म्यनिश्चयपूर्विका। भोगैश्वर्यप्रशक्तासमाधौ इयं न विधीयते।[२५]

७. अध्यवसायि बुद्धिः — काम्यकर्मविषया बुद्धिः अव्यवसायात्मिका। तत्र हि कामाधिकारे देहाद् अतिरिक्तात्मास्तित्वमात्रमपेक्षितम् न तु आत्मास्वरूपयाथात्तथ्यनिश्चियः। इयम्मनन्ता।[२६]

८. समबुद्धिः — फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिः, तद्विपर्ययजा सिद्धिः तयोः परिस्थित्योः अपि समत्वं यया भवति सा, समबुद्धिः आहोस्वित् योगबुद्धिः उच्यते[२७]। ततः समत्वं योग उच्यते।[२८]

९. स्थिरबुद्धिः — अस्य वर्णनं गीताया द्वितीयेऽध्याये बृहद्रूपेण दृश्यते यत्रार्जुनः पृच्छति यतः हे वासुदेव स्थिरिबुद्धिमतां का भाषा इति। तत्र तेनोक्तं यस्य विवेचनम् पञ्चपञ्चाशच्छलोकादारभ्यैकषष्टिश्लोकपर्यन्तं दृश्यते।

१. आत्मन्येवात्मना तुष्टः स्थितप्रज्ञः। गीता–२/२५
२. वीतरागभयक्रोधः स्थितधीः। गीता–२/५६
३. नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता। गीता–२/५७
४. इन्द्रियाणीन्द्रियार्थेभ्यः संहरते तस्य। गीता–२/५८
५. परं दृष्ट्वा यः निवर्तते। गीता–२/५९
६. वशं हि यस्येन्द्रियाणि। गीता–२/६१

पाश्चात्त्यानां बुद्धिः — पाश्चात्य जगति बुद्धि विषये एका लोकोक्तिः वर्त्तते यत् यावन्तो विज्ञानिनः तावन्ति लक्षणानि बुद्धेः वर्त्तन्ते। अत्रादौ परिभाषाः प्रस्तौमि ततः विवेचनम् इति।

१. वुडवर्यः — Intelligence is a way of Acting.
२. टरमैन — अमूर्तचिन्तन योग्यता।

---

२५. गीता - रा.भा.गीता प्रेस पृ.५५।
२६. गीता - रा.भा.- ५५ गीता प्रेस।
२७. गीता - शाङ्कर भा. - ६१ गीता प्रेस।
२८. गीता - २/४८।

३. वुडरो — ज्ञानार्जन क्षमता।
४. विने — बुद्धि चतुर्षु सन्निहिता ज्ञाने आविष्कारे, निर्देशे, आलोचनायाम्।
५. वकिंघम् — अधिगम क्षमता एव।
६. रायवर्न — समस्यासमाधानयोग्यता।
७. बर्ट — जन्मजाता सामान्य संज्ञानात्मिका योग्यता।

एतावता अत्र तैः कतिपयतत्वानामप्युगेखः कृतः। तानि तत्त्वानि - ५.१ जाग्रता, ५.२ आत्मीयताकरणम्, ५.३ भावनाप्रयोगः, ५.४ अन्तर्दृष्टिः, ५.५ स्वकार्यतोलनम्, ५.६ आत्मसम्प्रत्ययः, ५.७ स्थिरमुद्देश्यम्, ५.८ संवेगानुपहतिः।

पाश्चात्यबुद्धिविषयकचिन्तनम् — बुद्धिः विविधकारकसम्पृक्ता। अत्र कारकाणि कारकीयबुद्धिसिद्धान्ताद् द्रष्टव्यानि।
— बुद्धिः लैगिकाधारेण भिन्ना विभिन्ना।
— बुद्धिः प्रकृतपोषणजन्या। अत्र प्रकृतिः वंशपरम्परा पोषणन्तु वातावरणम्।
— वयोनुकूलतया बुद्धेः सम्बर्धनम्भवति।
— बुद्धिः मीयते - I.Q=M.A/R.A × १०० इति। एवमेव पूर्वोक्तानि यदि बुद्धि विषयक-तत्त्वानिविचिन्त्यन्ते तर्हि समग्रमपितत्त्वम्प्राच्यानां या अध्यवसायात्मिका बुद्धिरस्ति अपि च तस्याः अपि आत्मीयकरणादिकं यत्तत्त्वं तत्वर्सं गीतायाः द्वितीयेऽध्याये वर्णितम्। अतः मयोच्यते यत्प्राच्यानां चिन्तनं बुद्धिविषयकम् तदुत्कृष्टम् इति।

**निष्कर्षः —** प्राच्यपाश्चात्योभयमतविवेचनजन्यतत्त्वानुशीलनद्वारा वक्तुं शक्यते यत् प्रच्यानां चिन्तनम् अत्र अध्यवसायस्य व्यवसायस्य सकलपदार्थस्यार्थप्रकाशकस्य, सर्वव्यवहार-हेतुभूतस्य यत् स्वरूपम् तेषां समक्षं पाश्चात्यानां चिन्तनं रवेर्यद्दीपदर्शनं तद्वत्प्रतिभाति। यतः सर्वव्यवहारहेतौ एवं मूर्तत्त्वममूर्तत्त्वं सामाजिकत्वमपि आयाति। अत्र एवाङ्किकुशलता स्थान-विषकचिन्तनादिकं प्रवर्त्तते। पौर्वदैहिकी बुद्धिः इत्युक्त्वा न केवलं तस्याः जन्मजातत्वं प्रतिपादितम् अपि च तेन वंशपारम्पर्यमपि निरूपितम् इति दिक्।

**अनुशीलितग्रन्थाः —**

१. गीता।

२. साङ्ख्यकारिका।
३. सिद्धान्तकैमुदी।
४. गौडपादभाष्य-गीता।
५. रामानुजभाष्य-गीता।
६. शाङ्करभाष्य-गीता।
७. आनन्दगिरि व्याख्या-गीता।
८. शिक्षामनोविज्ञान-एस.के.मंगल।
९. शिक्षामनोविज्ञान-के.जी.पाण्डेय।
१०. शिक्षामनोविज्ञान-वैंकटराघवाचार्य।
११. तर्कसङ्ग्रह।
१२. भारतीय दर्शन।

*****

**डॉ. अखिलेशकुमारमिश्रः**
सहायकप्राचार्यः
स्नातकोत्तरवेदविभागः,
का.सि.द.सं.वि.वि. दरभङ्गा।

# अद्वैतवेदान्ते चतुःसूत्र्यर्थविमर्शः

— सत्येश्वरजाना

**अथातो ब्रह्मजिज्ञासा ( ब्र.सू. १.१.१ )**

अथातो ब्रह्मजिज्ञासेति ब्रह्ममीमांसाशास्त्रस्यादिमं सूत्रम्। तत्र सूत्रव्याख्यारूपभाष्यकारैराचार्यैः सर्वैरिव सूत्रव्याख्यायां प्रथममथशब्दार्थो विमृष्टः।

**अभिधत्तेऽथ शब्दो हि चतुरोऽर्थान् प्रयोगतः।**
**आनन्तर्यञ्चाधिकारं पूर्वापेक्षञ्च मङ्गलम्॥**

इति लोके चतुर्ष्वर्थेषु अथः शब्दः प्रयुज्यमानो दृश्यते। आनन्तर्ये अधिकारे मङ्गले पूर्वप्रकृतापेक्षार्थान्तरे च। तद् यथा लोके अधिकारे अथातो धर्मजिज्ञासा अथानुमानं निरूप्यते।

वेदेऽपि हृदयस्याग्रे अवद्यत्यथ जिह्वाया अथ वक्षस इत्यदौ। अधिकारे यथा लोकेऽथ शब्दानुशासनम्, अथ योगानुशासनम्। वेदेऽपि अथैष ज्योतिरथैष विश्व–ज्योतिरथैष सर्वज्योतिरिति। मङ्गलेऽपि लोके वेदे च बहुत्र उपलभ्यते। यथा पूर्वोक्तेषूदाहरणेष्वेव।

**ओँकारश्चाथशब्दश्च द्वाविमौ ब्रह्मणः पुरा।**
**कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥**

इति स्मृत्या माङ्गलिकोऽथ शब्दः श्रुतिमात्रेण वीणामृदङ्गध्वनिवद् मङ्गल–प्रयोजनः। पूर्वप्रकृतापेक्षार्थान्तरे यथा किमयमथशब्द आनन्तर्यार्थः अथाधिकारार्थ इति इममेव सौत्रमथशब्दं विषयीकृत्य विचार्यते। अत्र द्वितीयाथशब्दः पूर्वप्रकृतमथ–शब्दरूपं धर्मिणमपेक्ष्य संशयोत्तर–कोटिभूते प्रयुज्यमानो अर्थान्तरे वर्तते। द्वावेवार्थौ अधिकार आनन्तर्यञ्चेति अत्र मुख्यतः विचारमर्हतः। मङ्गलं तु अथशब्दस्य श्रवण–मात्रेण निष्पन्नमिति न केवलं तादर्थ्यमथशब्दस्य।

तत्र शङ्कराचार्यैरथशब्द आनन्तर्यार्थ इति स्वीकृतम्। यथोक्तं तैः तत्राथशब्द आनन्तर्यार्थः परिगृह्यते। नाधिकारार्थः। ब्रह्मजिज्ञासाया अनधिकार्यत्वात्। अर्थान्तरप्रयुक्त एव ह्यर्थशब्दः श्रुत्या मङ्गलप्रयोजनो भवति।

कस्मादनन्तरं ब्रह्मजिज्ञासा जायत एवेति वक्तव्यम्। साधनचतुष्टयात् तच्च नित्या-नित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः शमदमादिसम्पत्तिः मुमुक्षुत्वञ्चेति। एतच्चतुष्ट्यसद्भावे भवन्तीजिज्ञासा भवत्येव। एतदभावे च सत्यपि कर्मावबोधे न जायते। तस्माद् ब्रह्मजिज्ञासा स्वपूर्वं नियमेन एतच्चतुष्ट्यमपेक्षते नान्यत्। इति भगवत्पादाभिप्रायः। व्युत्पादितञ्चैत भामती-विवरणादिग्रन्थेषु।

नित्यानित्यवस्तुविवेक इति प्रथमं साधनम्। एतानि साधनानि परस्परं साध्यसाधनभावेन उत्पन्नानि। नित्यानित्यवस्तुविवेकाद् इहामुत्रफलभोगविरागः तस्मात् शमदमादिसाधनसम्पत्। ततश्च मुमुक्षुत्वमुक्तम्। एतानि साधनानि भाष्यकारेण न स्वेच्छया परिगणितानि अपि तु शास्त्रसिद्धानि। तथाहि तद्येहकर्म-चितो लोकः क्षीयते एवमेवामुत्रपुण्यचियो लोकः इति नित्यानित्यविवेको दर्शितः। अत्र नित्यवस्तु आत्मा सत्यं ज्ञानमन्तं ब्रह्म, विज्ञानमानन्तं ब्रह्मेत्या-दिना आपातत प्रतीयमानः, कर्मचितस्यानात्मनो लोकः अनित्यः दुःखरूपः क्षयिष्णुरिति।

अतः शब्दो हेत्वर्थः। अथशब्दपरिगृहीतस्य हेतुत्वस्य हेत्वन्तरेणापवादशङ्कायां तन्निरसनेन हेतुत्वव्यवस्थापनार्थमतः शब्दः। क्षयितालक्षणेन दुःखेनाघ्रातत्वात् वैषयिकसुख-परित्यागसंभवेऽपि अक्षय्यादिवाक्यैर्नित्यत्वेनावगतस्वर्गादिपरित्यागो न संभवतीति नित्यानित्य-वस्तुविवेकाभ्यासे सत्यपि इहामुत्रार्थफलभोगविरागस्यासंभवात् न साधनचतुष्ट्यसंपत्त्यानन्त-र्यार्थत्वमुपपद्यत इत्यधिकाशङ्कानिराकरणेन हेतुत्वदृढीकरणार्थमतः शब्द इति। 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्रपुण्यचितो लोकः क्षीयते' ( छा.८.१.६ ) इत्यादि। तथा ब्रह्मविज्ञाना-दपि परं पुरूषार्थं दर्शयति –'ब्रह्मविदाप्नोति परम्' इत्यादि।

ज्ञातुमिच्छा जिज्ञासा। 'ज्ञा' धातोः इत्यर्थक सनि जिज्ञासा शब्दः। ब्रह्मजिज्ञासेत्यस्य ब्रह्मविषयकज्ञानविषयिणीच्छा। तत्र शेषे षष्ठी पक्षे ब्रह्मसम्बन्धिज्ञानेच्छार्थः।

प्रत्ययार्थस्य प्राधान्यात् ज्ञानविषयेच्छायाः प्राधान्यम्। अत एव शाङ्करभाष्ये अथ शब्दस्याधिकारार्थत्वप्रस्तावे इच्छाया अनिधिकृतत्वादित्युक्तम्। ब्रह्मण इति कर्मणि षष्ठी, न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च।

निर्विशेषं ब्रह्म तु केवलमद्वैतमते सम्मतम्। तत्र किं प्रमाणमिति जिज्ञासायां श्रुतिरेव प्रमाणम्। वेदैक समधिगम्यत्वाद् ब्रह्मणः। सगुणेऽपि ब्रह्मणि श्रुतिरेव प्रमाणम् तस्य वेदे

समधिगम्यत्वात्। तत्र साधनचतुष्टयसम्यनन्तरं ब्रह्मजिज्ञास्यमित्यनेन निर्विशेषं ब्रह्मैव जिज्ञास्य-मिति संगतम्। सगुणब्रह्मोपासकानामपि क्रमम् उक्तिदारा अर्चिरादिमार्गेण ब्रह्मलोकगतानामपि निर्गुणब्रह्म जिज्ञास्यमेव ब्रह्मलोकान्तरवैराग्यादेरपेक्षितत्वात्।

**जन्माद्यस्य यतः ( ब्र.सू. १.१.२ )**

अथातो ब्रह्म जिज्ञासेति प्रथमेन सूत्रेण मीमांसारम्भमुपपाद्य ब्रह्ममीमांसाम्–आरभते जन्माद्यस्य यत इति। तत्र पूर्वसूत्रेणैतस्य सूत्रस्य आक्षेपलक्षणा संगतिः। किं जिज्ञास्यं ब्रह्म। तस्य लक्षणं वक्तव्यम्। लक्षणप्रमाणाभ्यां वस्तुसिद्धिः। न च लक्षणं सम्भवति। तथाहि लक्षणं सजातीयविजातीय व्यावृत्तिप्रयोजनो धर्मविशेष। तत्र परिदृश्यमानं जगत् ब्रह्मणो लक्षणम् उत नित्यशुद्धत्वादिस्वरूपमिति। नाद्य, अनित्याशुद्धत्वादियुक्तेन परिदृश्यमानेन जगता ब्रह्म न लक्षयितुं क्षमम्। न जातु कृतकत्वेन नित्यं लक्ष्यते। न द्वियीयः नित्यशुद्धत्वादिधर्माणामनुपलब्धचरत्वात्। प्रसिद्धं हि लक्षणं भवति नात्यन्ताप्रसिद्धम्। न च लोकासिद्धमपि वस्तुवेदेन प्रतिपाद्यते। अत्यन्ताप्रसिद्धतया ब्रह्मणो अपदार्थस्या वाक्यार्थत्वात् तस्मात् लक्षणाभावात् ब्रह्म न जिज्ञासितव्यमित्याक्षेपः।

**आक्षेपपरिहारं भगवान् सूत्रकारः परिहरति जन्माद्यस्य यतः इति।**

अयं भावः — अनुभूयमानं जगत् धर्मतया तादात्म्येन वा ब्रह्मणो लक्षणं मा भूत् तदुत्पत्त्या तु भविष्यति। देशान्तरप्राप्तिरिव सवितुर्व्रज्यायाः। तदुत्पन्नत्वेन जगत् स्वकारणं लक्षयति ज्ञापयति। कारणत्वं तु ब्रह्मलक्षणम्। ब्रह्म इतरेभ्यो व्यावर्त्यते कारणत्वात् व्यतिरेकेण घटादिवत्। ब्रह्म ब्रह्मशब्देन व्यवहर्त्तव्यः कारणत्वं ब्रह्म।

जन्मादिरित्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः। जन्मस्थितिभङ्गं समासार्थः। जन्मन आदित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षञ्च। श्रुतिनिर्देशस्तावत् –

**'यतो वा इमानि भूतानि जायन्ते' ( तै.उ ३.२ )** इत्यादि। तत्र जन्मस्थितिप्रलया-नां क्रमदर्शनात्। वस्तुवृत्तमपि जन्मनालब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसम्भवात्। अस्येति प्रत्यक्षादि संनिधापितस्य धर्मिण इदमानिर्देशः। षष्ठीजन्मादिधर्मसम्वन्धार्थ। यतः इति कारण निर्देशः।

तद्गुणसंविज्ञानशब्दस्यार्थः। तस्य बहुव्रीह्यर्थस्यान्यपदार्थस्य गुणाः विशेषणानि वृत्ति-पदार्थाः तेषां संविज्ञानं यस्मिन् समासे स तद्गुणसंविज्ञानः यथा लम्बकर्णमानयेति। अतद्गुण-संविज्ञानो यथा दृष्टसागरमानयेति। एवञ्च सर्वादीनि सर्वनामानीत्यादिवदत्र तद्गुणसंविज्ञानो बहुव्रीहिः।

प्रधानकाललोकपालग्रहक्रिया यदृच्छास्वभावाभावेषु एतल्लक्षणमतिव्याप्तमिति भाष्य-कारेण श्रीशङ्करेणवाक्यशेषो योजितः। सर्वैरवाचार्यैरीदृशो वाक्यशेषोयोजितः स्वस्वभाष्येषु।

अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकाल-निमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्मेति वाक्यशेषः (शा.भा.)। अन्येषां सर्वेषां विकाराणां त्रिष्वेवान्तर्भावः इति जन्मस्थितिभङ्गमुच्यते। जन्मस्थितिलय-हेतुत्वेन ब्रह्मण अभिन्ननिमित्तोपादानत्वं प्रतिपादितं भवति। एतच्च लक्षणं न प्रधानादिष्वतिव्याप्तं तेषां सर्वज्ञसर्वशक्तिमत्त्वाभावात् जन्माद्यस्य यतः इति सूत्रवाक्यं नेश्वरसाधकमनुमानवाक्यमपि तु वेदान्तवाक्यमुदाहृत्य ब्रह्मलक्षणं परम्। तच्च वेदान्तवाक्यं तैत्तिरीयोपनिषदि **'यतो वा इमानि' इत्यादीनि ( तै.उ ६.१ )**।

**तस्य निर्णयवाक्यं 'आनन्दाद्ध्येव खल्विमानि भूतानी'त्यादि।**

तथा च जगज्जन्मादिहेतुर्य स आनन्द एव। आनन्दपदेन सत्यादेरपि उपलक्षिततत्वात् सत्यं ज्ञानमनन्तमानन्दरूपं ब्रह्मणः स्वरूपलक्षणमप्युक्तं भवति।

सत्यानन्दादिपदेन अखण्डमेकरसमेव ब्रह्मावबुध्यते प्रकृष्टप्रकाशश्चन्द्र इत्याद्यखण्डचन्द्र-प्रतिपादकलक्षणवाक्यवत्।

एवञ्च रज्जवज्ञानसहितरज्जूपादानाधारा रज्जवां सत्यामस्ति रज्जवामेव च लीयते एवम-विद्यासहित ब्रह्मोपादानं जगत् ब्रह्मण्येवास्ति तत्रैव च लीयते इति सिद्धमिति भामती वाक्येन सूत्रभाष्यव्याख्यान्तर्गतेन विवर्तवादोऽपि सूचितः।

**शास्त्रयोनित्वात् ( ब्र.सू.-१.१.३ )**

पूर्वसूत्रे जगत् कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव शास्त्रयोनित्वादिति सूत्रेण दृढी क्रियते। न केवलं जगद्योनित्वादस्य सर्वज्ञता अपि तु शास्त्रयोनित्वादपि बोद्धव्येति।

शारीरकविज्ञानानुसारेण विज्ञानं हि ब्रह्म। विज्ञानादेव जगत: जन्मस्थिति-भङ्गं भवति। विज्ञानं हि शास्त्राणां योनि:। विज्ञानादेव सर्वाणि शास्त्राणि नि:सरन्ति।

शाङ्करभाष्ये शास्त्रस्य योनि: शास्त्रयोनि:। शास्त्रं ऋग्वेदादि। महत ऋग्वेदादे: शास्त्रस्य योनि: कारणं ब्रह्म। नहीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञादन्यत: सम्भवोऽस्ति।

अथवा यथोक्तम् ऋग्वेदादिशास्त्रं योनि: कारणं प्रमाणमस्य ब्रह्मणो यथावत् स्वरूपाधिगमे। शास्त्रादेव जगतो जन्मादिकारणं ब्रह्माधिगम्यते इत्यभिप्राय:। शास्त्रमुदाहृतं पूर्वसूत्रे – **'यतो वा इमानि भूतानि जायन्ते'** इत्यादि।

ऋग्वेदादे: महत्त्वं महाविषयत्वात्। चातुर्वर्ण्यस्य चातुराश्रमस्य च यथायथं निषेकादि-श्मशान्तासु ब्राह्ममुहुर्त्तोपक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्य-कर्मपद्धतिषु च ब्रह्मत्वे शिष्याणां शासनात् शास्त्रम् ऋग्वेदादि, अतएव महाविषयत्वान्महत्। अनेकविद्यास्थानैरूप-वृंहितमिदं शास्त्रम्। पुराणन्यायमीमांसाधर्मशास्त्राणि षड् अङ्गानि व्याकरणज्यौतिषशिक्षाकल्प-छन्दोनिरूक्तानि। तथा आयुर्वेद-आद्युपाङ्गैश्चोपवृंहितम्। अतो महदिदं शास्त्रम्। अतएव प्रदीपवद् सर्वार्थावद्योतकत्वात् परमस्वत: प्रमाणभूतं शास्त्रं सर्वज्ञकल्पम्। सर्वज्ञकल्पस्य शास्त्रयोनि: कारणमपि ब्रह्म तत: अधिकतरज्ञानवत् भवति। यो हि यत् शास्त्रं प्रणयति स तद् अधिक-विज्ञानवान् दृष्ट इति लोकसिद्धव्याप्यते:। श्रुतिरपि पुरुषात् प्रपञ्चत्वं वेदानां व्रवीति। अस्य महतो भूतस्येति। अत: शास्त्रस्य योनिरिति व्याख्यानं युक्तम्। सर्वज्ञत्वस्य शास्त्रयोनित्वरूप-हेत्वन्तरसाध्यत्वात् इदमधिकरणान्तरम्। यद्यपि जगत्कर्तृत्वेन शास्त्रयोनित्वमपि संगतं भवति। तथापि ब्राह्मणवशिष्ठन्यायेन स्पष्टतयाभिधानार्थं शास्त्रस्य योनित्वादपि सर्वज्ञता सिद्धतीति तदर्थस्यैव विशेषरूपेण दृढीकरणमत्र। शास्त्रं योनि: कारणं प्रमाणमिति द्वितीयव्याख्यापूर्वेण सूत्रेण ब्रह्मण: स्वरूपाशङ्कां व्युदस्य तस्यैव जगज्जन्मादिहेतुत्वलक्षणस्यानुमानत्वाशङ्कामपाकृत्य आगमोपदर्शनेन ब्रह्मणि शास्त्रे प्रमाणमुक्तम्। सर्वथा शास्त्रैकदम्यं ब्रह्मेति। श्रीभाष्येऽपि इदमधिकरणं तथैव व्याख्यातम्। तथाहि जगज्जन्मादि कारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् तदयुक्तम्, तद्धि न वाक्यप्रतिपाद्यमनुमानेन सिद्धेरित्या-शङ्क्याहशास्त्रयोनित्वादितियद्यपि पूर्वसूत्रे जगज्जन्मादिकारणत्वेनव सर्वज्ञत्वाद्युपक्षिप्तं स्पष्टत: तस्य वेदान्तवेद्यत्वं नोक्तं तथापि पूर्वसूत्रे यतो वेति वाक्योदाहरणेन स्यात् कारणमपि ब्रह्म वेदान्तेषु प्रतिपाद्यत एवेति। अधिकरणारम्भस्तु

तस्य जगत्कारणस्य सर्वज्ञत्वाधर्मयुक्तस्य ब्रह्मणः अनुमानेनसिद्धिनिरासाय शास्त्रैकमात्रप्रमाणकत्वायेति।

**तत्तु समन्वयात् ( ब्र.सू. १.१.४ )**

शास्त्रयोनित्वादिति पूर्वाधिकरणद्वितीयवर्णकेन शास्त्रं योनिः कारणं ज्ञापकं यस्येत्यर्थ प्रतिपादकेन अस्याधिकरणस्याक्षेपिकी संगतिः। तत्र प्रतिज्ञामात्रेण शास्त्रप्रमाणकत्वं ब्रह्मण उक्तम्। तच्च पूर्वपक्षनिराकरणद्वारा अनेन सूत्रेण प्रतिपादनीयम्।

पूर्वपक्षः — **कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते यावता आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ( जै.सू. १.२.१ )** इत्यादि सूत्रेण सकलस्याम्नायस्य प्रयोजनपर्यवसानाय क्रियार्थत्वावश्यं भावात् अक्रियार्थानामानर्थक्यं निष्प्रयोजनत्वं, तस्माद-क्रियार्थमवर्थवादजातमप्रमाणमिति पूर्वपक्षं कृत्वा विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः (जै.सू.१.२.२) इति सूत्रेण विधिवाक्येनैकवाक्यत्वात् अर्थवादा विधीनां स्तुतिरूपेणार्थेन सप्रयोजनाः स्युरिति अक्रियार्थानामानर्थक्यं पूर्वपक्षोक्तमङ्गीकृत्यैव तेषां विध्येकवाक्यतया प्रामाण्यमुपपादितम्। इदं जैमिनिमतम्। अक्रियार्थानां सिद्धार्थपराणामानर्थक्यं न्यायविरुद्धम-प्रामाणिकमिति सिद्धान्ते दूषणीयमेव।

तस्मात् ब्रह्मणो न शास्त्रयोनित्वम् इति प्राप्ते उच्यते तत् तु समन्वयात्। तु शब्दः पूर्वपक्षं व्यावर्तयति। तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पर्त्तिकारणं वेदान्तशास्त्रादेवावगम्यते। कथं समन्वयात्। सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि। **'सदेव सौम्येदमग्र आसीत् एकमेवादिती-यम् ( छा. ६.२.१ ) 'आत्मा वा इदमेक एवाग्र आसीत्' ( एत.उ.२.१.१.१ )** इत्यादीनि वाक्यानि।

तत्र सम्यग् अन्वयः समन्वयः तात्पर्येण तद्ब्रहम प्रतिपादकत्वम्। तात्पर्यग्राहकं लिङ्गमु-पक्रमोपसंहारादिः। एवं सर्वेषां वेदान्तानां सिद्धे ब्रह्मणि समन्वय उक्तः। अर्थान्तरकल्पना न युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। न च तेषां वाक्यानां कर्तृस्वरूपप्रतिपादनपरतावसीयते। **'तत् केन कं पश्येत् ( बृ.२.५.१३ )** इत्यादि क्रियाकारकफलनिराकरणश्रुतेः।

ननु वेदान्तानां सिद्धवस्तुपरत्वे मानान्तरसापेक्षत्वं स्यात्। वेदान्ताः मानान्तरसापेक्षाः परिनिष्ठतवस्तुपरत्वात् पुंवाक्यवत्।

तथा च सापेक्षत्वेन तेषामप्रामाण्यं प्रसज्येत इति चेत् न तत्रानुमाने पौरषेयत्वमुपाधि:। तथा च वेदान्ता न मानान्तरसापेक्षा: पौरुषेयत्वाभावात् इति सिद्धति। पुंवाक्यानामपि सापेक्षता न भूतार्थत्वेन प्रत्यक्षादीनामपि परस्परापेक्षत्वनाप्रामाण्यप्रसङ्गात्। तान्यपि हि भूतार्थान्येव नापि पुरुषबुद्धिप्रभत्वेन पुंवाक्यानां सापेक्षता तर्हि पुरुषबुद्धिप्रभवत्वाभावादेव भूतार्थानामपि वेदान्त-वाक्यानां न सापेक्षता। अत एव तेषामनपेक्षत्वरूपं प्रमाण्यं सिद्धम्। वेदानामपौरुषेयत्वं तु प्रसाधितमेव। तस्मात् परिनिष्ठितवस्तुपरत्वेऽपि न प्रत्यक्षादिविषयत्वं ब्रह्मण:।

न चापुर्वार्थत्वाभावादेवाप्रामाण्यमनधिगतार्थे शास्त्रस्य प्रामाण्यमिति वाक्यम्। तत्त्व-मस्यादिवाक्यप्रतिपादितजीवब्रह्मणोरैक्यस्यमानान्तरागम्यत्वाद् अपूर्वार्थत्वसिद्धे:। न च वेदान्त-वाक्यानामक्रियार्थत्वात् हेयोपादेयरहितानामुपदेशानर्थक्यमपुरुषार्थत्वात् इति वाक्यम्। हेयो-पादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धे:। देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोध:। न तु तथा ब्रह्मण: उपासनाविधिशेषत्वं सम्भवति। एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्ते:। न ह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुन: सम्भव अस्ति। येनोपासनाविधिशेषत्वं ब्रह्मण: स्यात्।

यद्यपि अन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं तथापि आत्मविज्ञानस्य फलपर्यन्तत्वात् न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम्। न चानुमानगम्यं शास्त्र-प्रामाण्यं येनान्यत्र निदर्शनंपेक्षेत। अनधिगतावाधिता-संदिग्धबोधजनकत्वं हि प्रामाण्यं प्रमाणानाम् तच्च स्वत:। अत: सिद्धं शास्त्रप्रमाणकत्वं ब्रह्मण:।

**तथ्यसूत्रम्**

१. शाङ्करभाष्यम्।
२. ऋग्वेद:
३. छान्दग्योपनिषद्
४. तैत्तिरीयोपनिषद्
५. ऐतरेयोपनिषद्
६. बृहदारण्यकोपनिषद्
७. श्रीमद्भगवद्गीता
८. अमरकोश:

९. वेदान्तसार

१०. वेदान्तपरिभाषा

**ग्रन्थतालिका**


१. विश्वरूपानन्द, स्वामी, वेदान्तदर्शनम् उद्बोधनकार्यालयम् १९९६ ईसि, वेलुडमठः।

२. डॉ. गुप्ता, शारदा, अदैतमार्न्तण्ड और शा१रवेदान्त, ईस्टर्न वुक लिंकर्स, २००६ ईसि, दिगी:।

३. डॉ. शेखावत, महेन्द्र, आधुनिक चिन्तन मे वेदान्त, मध्यप्रदेश हिन्दी ग्रन्थ अकादमी, भोपाल।

४. सेमवाल:, श्रीकृष्ण:, शङ्करग्रन्थावलि: उपनिषद्भाष्यम् दिगी संस्कृत अकादमी, (दिगी सर्वकार:) २००६ – २००७ खीष्टाव्द:।

५. सेमवाल:, श्रीकृष्ण:, ब्रह्मसूत्रशङ्करभाष्यम् दिगी संस्कृत अकादमी, (दिगी सर्वकार:) २००१ – २०१० खीष्टाव्द:।

६. वगभाचार्य:, ब्रह्मसूत्र–अणुभाष्यम् सम्पादक:, मदनलालशास्त्री, मुम्बई, १९७४ खीष्टाव्द:।

७. शंकराचार्य स्तोत्रावली, सम्पादक, वन्द्योपाध्याय:, अशोककुमार:, कलकाता, संस्कृतपुस्तकभण्डार:, २००१ खीष्टाव्द:।

८. शास्त्री, कोकिलेश्वर:, अद्वैत–वाद, कलकाता, संस्कृत बुक डिपो, २०१० खीष्टाव्द:।


*****

**सत्येश्वर जेना**
कलकाता, पश्चिमबंगाल।